नास्तीति कथयन्त उपकुर्वन्ति । अद्वैतिनः सर्वस्यापि ब्रह्मव्यतिरिक्तस्य स्वप्नदृष्टार्थवन्मिथ्यात्वेन नास्ति दुःखकारणमित्याचक्षाणा दुःखं निवर्तयन्ति ।

भेदवादिनश्च सत्यत्वं जगत आतिष्ठमाना अपि अस्थिरत्वोपपादनेन दुःखाभिसन्धिं निवारयन्ति । तदेवं मध्यस्थदृष्ट्या अवलोक्यमाने वैषम्यदृष्टेरेव नास्त्यवकाश इत्यास्तां तावत् ।

तत्र श्रीविशिष्टाद्वैतमतप्रवर्तकाचार्यश्रीभगवद्रामानुजाचार्यविरचितं ब्रह्मसूत्रभाष्यं श्रीभाष्यमिति प्रथामश्नुते । एतेषामाचार्याणामवतारात्प्राक् एतन्मतनिष्ठा आचार्याः प्रबन्धाश्च आसन् वा न वेति किञ्चिद्विचार्यते । एतन्मतस्य मूलग्रन्थो बोधायनवृत्तिः । यदुच्यते श्रीभाष्यारम्भ एव—

'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति । अत्र संक्षिप्तग्रन्थरचयितृत्वेन पूर्वाचार्यपदविवक्षिताश्च द्रमिडकुहदेवप्रभृतय इति एतद्वाक्यविवरणाय प्रवृत्तश्रुतप्रकाशिकागतेन 'द्रमिडभाष्यकारादयो हि परपक्षप्रतिक्षेपाद्यनादरेणातिसंक्षिप्तान् ग्रन्थानरचयन्' इति वाक्येनावगम्यते । तथा च भगवद्बोधायन-टङ्क-द्रमिड - कुहदेव - कपर्दि-भारुचिप्रभृत्याचार्यविरचिताः ग्रन्थाः श्रीभाष्यस्य मूलमिति ज्ञायते ।

उक्तं च वेदार्थसङ्ग्रहे—

'भगवद्बोधायन-टङ्क-द्रमिड - कुहदेव-कपर्दि - भारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदवेदान्तव्याख्यानसुव्यक्तश्रुतिनिकरनिदर्शितोऽयं पन्थाः' इति । श्रीवेङ्कटनाथाचार्यैश्चोक्तं यतिराजसप्ततौ—

'यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किं
ततः प्रागेवान्यद्वद तदपि किं वर्णनिकषे ।
निशाम्यन्तां यद्वा निजमतितिरस्कारविगमात्
निरातङ्काष्टङ्कद्रमिडकुहदेवप्रभृतयः ॥' इति ।

तत्र टङ्को ब्रह्मनन्दी यै. छान्दोग्यव्याख्यानरूपो वाक्याख्यो ग्रन्थो व्यरचीति सविस्तरं निरूपितं छान्दोग्यभाष्यभूमिकायां उत्तमूरु वीरराघवाचार्यैः ।

## द्रमिडाचार्याः

एते च ब्रह्मनन्दिकृतवाक्यव्याख्यानरूपं भाष्यं प्राणैषुः । भगवद्यामुनाचार्यप्रणीतात्मसिद्धिगतायाः—'भगवता बादरायणेन इदमर्थान्येव सूत्राणि प्रणीतानि । विवृतानि च तानि परिमितगंभीरभाषिणा द्रमिडभाष्यकृता । विस्तृतानि च तानि गम्भीरन्यायसागरभाषिणा भगवता श्रीवत्साङ्कमिश्रेणापि' इति सूक्तेः पर्यालोचनेन इमे ब्रह्मसूत्राणामपि भाष्यमभाषिषतेति प्रतीयते । एतद्भाष्यगताश्च पङ्क्तयः श्रीभाष्ये श्रुतप्रकाशिकायां च तत्र तत्रोदाह्रियन्ते । परं तु तद्भाष्यमिदानीं सम्पूर्णं लुप्तं, नोपलभ्यते ।

एवं व्यासबोधायनादिभिः प्रवर्तितस्यास्य सम्प्रदायस्य अस्मिन् युगे आदौ पराङ्कुशमुनयः प्रवर्तकाः यैः द्राविडगाथासहस्रमगीयत । तदनन्तरं च नाथमुनयः । यद्यप्येतेषां पराङ्कुशमुनीनां चास्ति भूयान् कालविप्रकर्षः । तथाप्येते योगदशायां साक्षात्कृतात्पराङ्कुशमुनेः शास्त्रार्थमगृह्णन्निति सम्प्रदायपरिशुद्धौ । श्रीनाथमुनेरारभ्य चायं विशिष्टाद्वैतसिद्धान्तः अविच्छिन्नाचार्यपरम्परागृहीतोऽनुवर्तते । तदेतदभिसन्धायैव **तत्त्वमुक्ताकलापे**—

'दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यावतारात्
शास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात् ।
नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धै-
स्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः ॥'

इत्यनुगृहीतम् ।

## नाथमुनयः (A. D. 10th century)

एतेषां मधुरकविवंश्यपराङ्कुशदासात् योगदशासाक्षात्कृतपराङ्कुशमुनेश्चोपनिषत्सारग्रहणम् । मधुरकवयश्च पराङ्कुशमुनिशिष्याः । तथा च परम्परया साक्षाच्चेमे पराङ्कुशमुनिशिष्या इत्युक्तं भवति ।

'कालविप्रकर्षेऽपि परमपुरुषसङ्कल्पात् कदाचित्प्रादुर्भूय साक्षादपि सर्वोपनिषत्सारोपदेष्टारम्'

इति स्तोत्ररत्नभाष्यगता सूक्तिश्चेहानुसन्धेया । श्रीमन्नाथमुनयः **न्यायतत्त्वं योगरहस्यं** चेति द्वौ ग्रन्थौ व्यरचिषुः ।

**न्यायतत्त्वम्**

न्यायतत्त्वशास्त्रमिति चेदं व्यवह्रियते। वेदाविरुद्धन्यायकलापप्रदर्शनपूर्वकं विशिष्टाद्वैतसिद्धान्तसिद्धार्थप्रतिपादकोऽतिविस्तृतोऽयं प्रबन्ध इति ज्ञायते। यतो न्यायतत्त्वशास्त्रप्रविविक्षूणामुपकाराय तच्छास्त्रप्रकरणग्रन्थरूपं सिद्धित्रयं प्रणीतमिति 'युक्तः प्रकरणप्रक्रमः' इत्यनेन यामुनाचार्यैः सूचितम्। वेङ्कटनाथैश्च न्यायसिद्धाञ्जने बुद्धिपरिच्छेदे सुखनिरूपणप्रस्तावे 'न्यायतत्त्वशास्त्रप्रकरणं ह्यात्मसिद्धि'रिति स्पष्टमभिहितम्। प्रकरणरूपस्य सिद्धित्रयस्यैव विस्तीर्णत्वे किमु वक्तव्यं न्यायतत्त्वशास्त्रस्य विस्तीर्णतायाम्। न्यायतत्त्वं चाध्यायपादबद्धं प्रतिपादमनेकाधिकरणगर्भं चेति सिद्धित्रये न्यायसिद्धाञ्जनादौ च 'तथा च न्यायतत्त्वशास्त्रे अस्मिन्नध्यायेऽस्मिन् पादेऽस्मिन्नधिकरणे' इत्यादिपङ्क्तिदर्शनान्निश्चिन्वन्ति। परं त्वस्मद्दौर्भाग्यवशादिदं शास्त्रमिदानीं लुप्तम्। वेदान्तदेशिकपर्यन्तमासीदिति तु तदीयग्रन्थेषु न्यायतत्त्वशास्त्रस्थपङ्क्तीनां तत्र तत्र प्रमाणीक्रियमाणत्वात्प्रतीमः। तदनन्तरं तु तदीयग्रन्थरसास्वादविस्मृतप्राक्तनग्रन्थाः तत्संरक्षणश्रद्धालव एव नाभूवन्नित्येवात्र वक्तव्यं भवति।

**योगरहस्यम्**

साङ्गभक्तियोगरहस्यप्रतिपादकोऽयं ग्रन्थः। अयं च देशिककाल एव लुप्तः।

## यामुनाचार्याः (A. D. 10th end)

एते च श्रीनाथमुनिपौत्राः। तदाहुः स्वयमेव

'पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा'

इति। एतैरारचिताश्च प्रबन्धाः—

आगमप्रामाण्यम्, पुरुषनिर्णयः, सिद्धित्रयं, गीतार्थसङ्ग्रहः, स्तोत्ररत्नम्, चतुःश्लोकी च।

तथा च गीतार्थसंग्रहरक्षायाम्—

'मानत्वं भगवन्मतस्य महतः पुंसस्तथा निर्णय-
स्तिस्रस्सिद्धय आत्मसंविदखिलाधीशानतत्त्वाश्रयाः।
गीतार्थस्य च संग्रहः स्तुतियुगं श्रीश्रीशयोरित्यमून्
यद्ग्रन्थाननुसन्दधे यतिपतिस्तं यामुनेयं नुमः॥'

## आगमप्रामाण्यम्

पाञ्चरात्रागमप्रामाण्यप्रतिपादनपरोऽयं ग्रन्थः । इदानीमुपलभ्यते ।

## पुरुषनिर्णयः

परतत्त्वनिरूपणपरः । इदानीं लुप्तः ।

## सिद्धित्रयम्

आत्मसिद्धिः, ईश्वरसिद्धिः, संवित्सिद्धिश्चेति त्रयाणां सिद्धित्रयमित्याख्या । इमे त्रयोऽपि न्यायतत्त्वशास्त्रप्रकरणरूपा इत्युक्तं प्राक् । त्रयोऽप्यपूर्णा एवेदानीमुपलभ्यन्ते । उपलभ्यमानभागापेक्षयानुपलभ्यमाना भागा अतिविस्तीर्णा भवेयुरित्युन्नीयते । यथा ह्युदयनाचार्यैः न्यायकुसुमाञ्जलौ उपक्रमे पञ्च विप्रतिपत्तयः प्रदर्शिताः उपरि च पञ्चभिः स्तबकैः ता एव विस्तरेण निरूप्यन्ते एवमेतैरप्याचार्यवर्यैरुपक्रमे आत्मविषये, ईश्वरविषये, संविद्विषये, उपायविषये फलविषये च बह्व्यो विप्रतिपत्तयः प्रादर्शिषत । उपरि च यथाप्रदर्शितविप्रतिपत्ति विस्तरेण विचारयितुं प्रवर्तमानाः सर्वा अपि विप्रतिपत्तीरधिकृत्य विचारं प्रावीवृतन्नित्येव वक्तव्यम् । संप्रत्युपलभ्यमानेषु तु सिद्धित्रयभागेषु प्रत्येकं विप्रतिपत्त्येकदेशविचारोऽपि न पूर्णः । एतेषां शैली च प्रसन्नमधुरगम्भीरललितप्रौढवचोविलसिता श्रीशाङ्करभाष्यशैल्यनुकारिणी अतिहृदयङ्गमा विराजते । श्रीभाष्यजिज्ञासाधिकरणे चात्मसिद्धिगता विषया वाक्यतोऽर्थतश्चानूद्यन्ते । शास्त्रयोनित्वाधिकरणे चेश्वरसिद्धिगता विषयाः । संवित्सिद्धिश्च श्लोकरूपा । अत्रत्याश्च श्लोकाः श्रीभाष्यकारैस्ततोऽर्वाचीनैश्च तत्र तत्र प्रमाणतयोपादीयन्ते । आगमप्रामाण्यगताश्च विषया उत्पत्त्यसम्भवाधिकरणे भाष्येऽनूद्यन्ते ।

## गीतार्थसङ्ग्रहः

श्लोकरूपः गीतातात्पर्यनिर्णायकः प्रत्यध्यायसारार्थप्रतिपादकश्च । विस्तृतग्रन्थनिर्माणापेक्षया संक्षिप्तसर्वार्थगर्भग्रन्थनिर्माणमेव कठिनम् । एकेनैवानुष्टुभेन छन्दसा तत्तदध्यायप्रतिपाद्यसकलार्थानपीह ललितया वाचा संगृह्णन्त इमे स्वमतिवैभवसारग्राहित्वे प्राचीकशन् । श्रीमद्रामानुजाचार्याणां गीताभाष्यप्रवृत्तौ चायं गीतार्थसङ्ग्रह एव मूलम् ।

एते चाचार्यवर्या ब्रह्मसूत्राणां भाष्यमपि स्वयमेव प्रणेतुमभिलषन्त आसन्। परं तु वार्धक्यात् शारीररोगाच्च पीडिताः कार्यमिदं निर्वर्तयितुं नापारयन्‌ यश्चैषामभिलाषः श्रीभगवद्रामानुजाचार्यैः पूरितः। अत्रेत्थमैतिह्यं श्रूयते—

'एते च श्रीरङ्गात् कदाचित् काञ्चीगमनकाले अतिशयिततेजोविशेष-सम्पन्नं श्रीमद्रामानुजाचार्यं दृष्ट्वा सन्तुष्टान्तरङ्गाः 'असौ अस्मद्दर्शनस्थापको भवतु' इति देवाधिराजस्वामिसन्निधौ प्रपत्तिं कृत्वा पुनः श्रीरङ्गं प्रति न्यवर्तन्त।

अथ च वार्धके वयसि कस्मिंश्चिद्दिने कालक्षेपसमये 'अस्मद्देहवियोगा-नन्तरमस्मद्दर्शनप्रतिष्ठापनसमर्थः कोऽपि नास्ति किल। रामानुजाचार्यश्च बाल्ये वयसि वर्तमानः शास्त्रान्तराभ्यसनव्यसनी काञ्चीमधिवसति। तस्यैतत्सिद्धान्तो-पदेशश्च वृद्धस्य मम प्राप्तो भवेन्न वा' इति विचिन्तयन्तः, तमिहानेतुमस्ति किं कोऽप्युपाय इत्येवानुदिनं शिष्यान् पृच्छन्त आसन्। अथ गच्छति काले शारीरेण रोगेण पीड्यमानाः, महति दुःखसागरे निमग्नानामासन्नानां शिष्याणां कर्तव्यधर्मानुपदिशन्तः अभवन्। अथेमं वृत्तान्तं परम्परयाकर्ण्य काञ्चीवासिन-स्सर्वेऽपि श्रीरङ्गमासाद्य यामुनार्यपदपद्मयोर्निपत्य प्रणेमुः। तांश्चापृच्छन् यामुनार्याः—'अपि नाम कुशली स रामानुजाचार्यः, अभ्यस्यति च वा मतान्तरग्रन्थानिति'। ते च प्रत्यूचुः—'इदानीं मतान्तरप्रबन्धपठनं परित्यज्य श्रीदेवाधिराजप्रवणा वर्तन्त' इति। इदं चाश्रुत्यातिसन्तुष्टान्तरङ्गाः श्रीमहापूर्ण-मवलोक्य अद्यैव भवान् काञ्चीं गत्वा श्रीमद्रामानुजाचार्यं सहैवानयतु इति प्रोचुः। ते च श्रीमहापूर्णाचार्याः सद्य एव प्रस्थाय काञ्चीमगच्छन्।

अत्रान्तरे श्रीयामुनार्या महता रोगेण क्लिश्यमानाः इतः प्राणवियोगो भवितेति निश्चिन्वानाः सर्वेषामपि भागवतानां सन्निधौ स्वकृतमपराधं क्षन्तुं प्रार्थयमानाः आलयं गत्वा रमासखं भगवन्तमापीठान्मौलिपर्यन्तं संसेव्य आश्रममागत्य स्वाचार्यचरणपादुकां हृदये नेत्रयोः शिरसि च संस्पर्शयन्तः तच्चरणावेव ध्यायन्तः ब्रह्मवल्लीभृगुवल्लीपुरुषसूक्तार्चिरादिगाथाप्रभृतिषु गीयमानेषु शिष्यवर्गैः, ध्मायमाने च शङ्खे वाद्यमानेषु च सकलेषु वाद्येषु ब्रह्मरन्ध्रेण श्रीवैकुण्ठसदनमलमकार्षुः। तदनु सर्वेऽपि शिष्यगणाः छिन्नमूलवृक्षवदधःपतित्वा मूर्छां प्राप्ताः क्रमेण चाश्वस्ताः आश्वासयन्तश्च श्रीयामुनार्यकुमारानतः परं कर्तव्यं

कर्तुमुपक्रमन्तां भवन्त इति प्रार्थयामासुः । अथ चानुष्ठितेषु यथाचारं कार्येषु पीठयाने श्रीयामुनार्यपादानुपवेश्य भक्तेषु वहत्सु तद्यानं, ध्मायमानेषु नृत्तगीत-वाद्यशङ्खेषु, क्रियमाणे च स्तोत्रप्रबन्धपारायणे, विकीर्यमाणेषु च सर्वतो लाज-पुष्पादिषु, अग्रतो गच्छन्तीषु च मङ्गलदीपान् गृहीत्वा सुमङ्गलीषु प्रदक्षिणेन सर्ववीथीद्वारा कावेरीतीरं गत्वा यतिसंस्कारविध्युक्तेन प्रकारेण स्थानविशेषे समस्थापयन् ।

अत्रान्तरे श्रीमहापूर्णार्याः काञ्चीं गत्वा श्रीकाञ्चीपूर्णसन्निधौ श्रीयामुना-र्याणां दिव्यशरीरासौकर्यं विनिवेद्य देवाधिराजस्वामिसन्निधिं गत्वा भगवन्तं सेवित्वा स्वीकृत्य तीर्थप्रसादादीन् सन्निधेः प्रस्थाय मार्गे यामुनार्यस्तोत्ररत्नमनु-सन्दधाना आगच्छन् । तदा च श्रीमद्रामानुजाचार्याः तन्मुखान्निर्गतान्—

'तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते ॥'
'अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं हि दुःखम् ।
किं तु त्वदग्रे शरणागतानां पराभवो नाथ न तेऽनुरूपः ॥'
'कः श्रीः श्रियः परमसत्त्वसमाश्रयः कः
कः पुण्डरीकनयनः पुरुषोत्तमः कः ।'

इत्यादिश्लोकान् श्रुत्वा विस्मयमापन्ना एतद्रचयितारः के ? इत्यपृच्छन् । तेषु च दत्तवत्सु श्रीयामुनार्यश्रीसूक्तिरेषेति प्रत्युत्तरम् , कं नाम ते ईदृशस्तोत्ररत्नर-चयितार आचार्यवर्याः पवित्रयन्ति देशम् । अपि नाम ते मया सेवितुं शक्या इत्यपृच्छन् । श्रीमहापूर्णार्याश्च अस्ति चेद्भवतोऽभिलाषस्त्वरा च तत्सेवायामा-गच्छतु भवान्मया सार्धं श्रीरङ्गं प्रतीत्यूचुः । रामानुजार्याश्च तथेत्युपगम्य देवाधि-राजस्वामिसन्निधौ काञ्चीपूर्णसन्निधौ च विज्ञाप्य स्वीकृत्य च नियमनं महा-पूर्णैस्सह श्रीरङ्गनगरीं प्रति प्रतस्थिरे । अतिमहता च वेगेन श्रीरङ्गसमीपमागत्य कवेरकन्यातीरे महतीं भक्तगोष्ठीमपश्यन् । दृष्ट्वा च संशयमापन्नाः पुरत आगच्छतो जनान् किंनिमित्तेयं गोष्ठी सन्निहितात्रेत्यपृच्छन् । ते च, श्रीयामुनार्या दिव्य-नगरीमलमकार्षुरिति प्रत्युदैरिरन् ।

श्रुत्वा चैतत् रामानुजार्याः सद्यः पतित्वा हुतवहदन्दह्यमानकाष्ठमध्यगत-कीटपतङ्गवत् विस्फुरन्तो व्यलुठन् महापूर्णाश्च । क्रमेण च व्यसनं विस्मृत्य

महापूर्णाः 'श्रेयांसि बहुविघ्नानि भवन्ति महतामपि' इत्युक्तरीत्या महतामपि बहवो विघ्नास्समापतेयुः। अतो मा शुचत यूयमिति रामानुजार्यान् समाश्वास्य कावेरीतीरमासाद्य श्रीयामुनार्यचरमविमलविग्रहसेवां समपादयन्। लक्ष्मणमुनयश्च आपादचूडं दिव्यशरीरं सेवमाना आकुञ्चितान् त्रीन् हस्ताङ्गुलीनवलोक्य सञ्जातविस्मयाः किमिमे प्रागप्येवमेवासन्निति पार्श्वस्थानन्वयुञ्जत। ते च प्रागेवं नासन्नित्युत्तरयन्ति स्म। एतेषां हृदये केनापि भावेन भवितव्यमिति विचिन्त्य पूर्वं कालक्षेपकाले प्रसङ्गात् किमप्येते भवतामवोचन्वेति पुनरपि पृच्छन्ति स्म। 'व्यासपराशरयोरुपकारस्मृतिः, पराङ्कुशमुनिगाथाव्याख्यानं, ब्रह्मसूत्राणां विशिष्टाद्वैतपरं भाष्यं च मे चिकीर्पित'मित्यसकृदवोचन्। इतः परं किमपि वयं न जानीम इति ते प्रत्यवदन्। तदिदमाकर्ण्य शरीरं चेन्मम दृढं स्यात्, एतदाचार्यवर्यकृपापि चेन्मयि परिपूर्णा, सर्वेश्वरश्च यदि मदभिमतं सङ्घटयेत्, नूनमिमांस्त्रीनाचार्याभिलाषान् पूरयिष्यामीति प्रतिजज्ञिरे। तदानीं च सद्यस्तेऽङ्गुलयः प्रसारिता अभूवन्। पश्यन्तश्चेदमाश्चर्यं तत्रत्यास्सर्वेऽपि महान्तः 'अस्त्येवैषामाचार्याणां कृपा भवद्विषये सम्पूर्णा। एतेषां दिव्यशक्तिश्च प्रविशेदेव भवतः। भवानेव चास्मद्दर्शनप्रतिष्ठापको भविष्यति' इत्यकुर्वन् मङ्गलाशासनम्। तदनु यतिपतयो यामुनार्यदिव्यशरीरं संसेव्य हृदये संस्थाप्य अवभृथस्नानं कृत्वा महापूर्णांश्च प्रणम्य प्रतिन्यवर्तन्त' इति।

## श्रीभगवद्रामानुजाचार्याः (A. D. 1017—1137)

एतैरनुगृहीताः प्रबन्धा नव—

(1) श्रीभाष्यम् (2) सारः (3) दीपः (4) वेदार्थसङ्ग्रहः (5) गीताभाष्यम् (6) शरणागतिगद्यम् (7) श्रीरङ्गगद्यम् (8) श्रीवैकुण्ठगद्यम् (9) नित्यग्रन्थश्चेति।

### श्रीभाष्यम्

विशिष्टाद्वैतमतानुसारि ब्रह्मसूत्रभाष्यमिदम्। अस्य च गाम्भीर्यमनुभववेद्यं नात्र वक्तव्यं विशिष्य। आहुश्च वेङ्कटनाथदेशिका अधिकरणसाराल्याम्—

'गम्भीरे ब्रह्मभागे गणयितुमखिलं कः प्रवीणः प्रमेयं
दिङ्मात्रं दर्शयन्नप्यहमिह निपुणैः प्राध्वमध्यक्षणीयः ।
मा भून्निश्शेषसिद्धिस्तदपि गुणविदः स्फीतनिस्सीमरत्ने
मध्येहारं निधेयं महति जहति किं मौक्तिकं लब्धमब्धौ ॥'

इति।

तत्त्वहितपुरुषार्थविषयकज्ञानसम्पदिह श्रीशब्दाभिप्रेता । तत्सम्पादकत्वादिदं भाष्यं श्रीभाष्यमित्याख्यायते । तत्राद्याध्यायद्विकेन अशेषचिदचिच्छरीरकब्रह्मरूपतत्त्वस्य तृतीयेनाध्यायेन भक्तिप्रपत्त्यात्मकहितस्य चतुर्थेन पुरुषार्थस्य च प्रतिपादनात् श्रीभाष्यनाम भवत्यन्वर्थम् । ननु भाष्ये सर्वेष्वधिकरणेषु भक्तिरूपा विद्यैव प्रस्तुता न क्वापि प्रपत्तिः । तत्कथमस्य भाष्यस्य प्रपत्त्यात्मकहितप्रतिपादकतेति चेत्;

अत्रेत्थं सम्प्रदायविदः समादधति । श्रीविशिष्टाद्वैतसिद्धान्तनिष्ठा अपुनरावृत्तिलक्षणमोक्षानन्दसिद्धये शरणागतिनामकमुपायमवलम्बन्त इति प्रसिद्धम् । भक्तियोगापेक्षितज्ञानशक्तिविधुराणामनन्यगतीनामकिञ्चनजनानामिममन्तरेणोपायं नान्योऽस्ति संसारसागरतरणसमर्थस्तरिरिति तेषां सिद्धान्तः । अयं चार्थो भाष्यसंमत इति प्रकाश्यते । 'नाना शब्दादिभेदात्' (ब्र. सू. ३-३-५६) इति शब्दादिभेदाधिकरणे सूत्रम् । वेदान्तेषु विहितानां विद्यानां परस्परं भिन्नत्वमत्र साध्यते । शब्दभेदप्रभृतीनि षट् विद्याभेदकप्रमाणानि इति सूत्रहृदयम् । वेदान्तविहितानां सद्विद्यादहरविद्याशाण्डिल्यविद्याप्रभृतीनां विद्यानां परस्परं भेदश्चेदिह समर्थनीयतयाभिमतस्तदा तत्र शब्दभेदस्य प्रमाणतया निर्देशोऽनुपपन्नः । शब्दभेदो हि नाम भिन्नभिन्नार्थबोधकधातुनिष्पन्नाख्यातत्वम् । यजेत दद्यात् जुहुयादित्यादयः शब्दाः परस्परं भिन्नानर्थान् बोधयन्ति । तादृशं च शब्दभेदं प्रमाणीकृत्य यागदानहोमादीनां भेदसाधनं युज्यते । विद्याविषये तु तथा शब्दभेदो नास्ति । विद्यात् उपासीत ध्यायीत पश्येत् इत्यादयस्तु शब्दाः सामान्यविशेषन्यायेनैकमेवार्थं बोधयन्तीति लघुसिद्धान्ते स्थापितम् । अतः शब्दभेदं प्रमाणमवलम्ब्य सद्विद्यादीनां परस्परभेदसमर्थने न सूत्रतात्पर्यम् । कुत्र तर्हि तात्पर्यमिति चेदुच्यते । शरणागत्याख्याया विद्यायाः सद्विद्यादिविद्यानां च भेदसमर्थनमेवैतदधिकरणविषयः । एवं चेत् शब्दभेद उपपद्यते । अत्र भाष्ये

'अक्षरविद्यादिकाः' इति आदिशब्दो दृश्यते। एतद्विवरणाय प्रवृत्तायां श्रुतप्रकाशिकायां 'आदिशब्देन न्यासो विवक्षितः। सूत्रे शब्दादिभेदसद्भावात्।' इति कथितम्। श्रीभाष्ये वर्तमानस्यादिशब्दस्य प्रपत्तौ तात्पर्यम्। सूत्रे शब्दादिभेदात् इति शब्दभेदं पुरस्कृत्य विद्यानां परस्परं भेदभमर्थनादिति ह्येतद्वाक्यार्थः।

श्रीमदप्पय्यदीक्षितविरचितः श्रीभाष्यकारहृदयानुसारी **नयमयूखमालिका** नामको ग्रन्थः सर्वत्र प्रसिद्धः। तत्रापि—

'उच्यते। भक्तिरूपाणां दहरादिविद्यानां न्यासविद्यायाश्च शब्दान्तरेणापि भेदोऽस्तीति दर्शयितुं अयं पूर्वपक्षो दर्शितः।'

इति वचनम्, उत्तरत्र सङ्ग्रहकारिकायां—

'न्यासोपासनयोस्तावत् शब्दः स्पष्टं विभज्यते।'

इति सिद्धान्तकरणं चेहानुसन्धेयम्।

प्रकृतश्रीभाष्यप्रकाशिकाकृद्भिरप्यस्मिन्नधिकरणे औपचारिकं शब्दान्तरत्वमित्यादौ कथयित्वा 'अन्ये तु न्यासोपासनशब्दाभ्यां भक्तिप्रपत्तिरूपविद्ययोर्भेदे शब्दान्तरत्वं द्रष्टव्य' मित्युक्तम्।

चतुर्थेऽध्याये प्रथमपादे तदधिगमाधिकरणे—

'ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते।'

इति भाष्यव्याख्यानावसरे व्यासार्यैः—'विद्याप्राप्तिशब्दः साधारण्यात्प्रपदननिष्पत्तेरपि द्योतकः।' इत्युक्तम्। एतेन च भक्तिवत्प्रपत्तिरपि मोक्षविरोध्यशेषकल्मषापहन्त्रीति स्पष्टमवगम्यते। श्रीभाष्यनान्दीश्लोकविवरणे च—

'विनताः, विशेषेण नताः प्रह्वीभूताः। न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठा विवक्षिताः।'

इति वदन्तश्चेमे शरणागतेरपि शारीरकसाधनाध्यायविवक्षितत्वं प्राचीकशन्। श्रीभाष्यकारैरेवानुमानिकाधिकरणे कठवल्ल्यां वशीकार्यपरम्पराप्रदर्शनसन्दर्भे

'तस्य च वशीकरणं तच्छरणागतिरेव।'

इत्युक्तम् । वेदार्थसङ्ग्रहे च—

‘ एतेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यते ।’

इति स्पष्टमेवाभिहितम् ।

‘ भक्तियोगनिष्ठस्यापि तन्निष्पत्त्यर्थं प्रपत्तेरपेक्षितत्वात्, प्रपत्तिनिष्ठस्य स्वतन्त्रोपायत्वाच्च प्रपत्तिमन्तरेण नोपपद्यत इत्युक्तम् ।’

इति च तद्व्याख्या तात्पर्यदीपिका । तस्मात् प्रपत्त्यात्मकहिततात्पर्यकत्वमपि भाष्यस्य सम्भवतीति ।

अथ वा

‘ ऋचस्सामानि यजूंषि । सा हि श्रीरमृता सताम् ’

इति श्रुत्या ऋग्यजुस्सामरूपवेदत्रयं श्रीशब्दार्थः । तदनुगुणत्वादिदं भाष्यं श्रीभाष्यमित्युच्यते ।

यद्वा श्रीतत्त्वसिद्धाञ्जनदेशिकसिद्धान्तरहस्यादिप्रबन्धप्रणेतारः शारीरक-भाष्यं कृत्स्नमपि भगवन्तमिव लक्ष्मीमपि प्रतिपादयतीति सविस्तरं न्यरूरुपन् । तदनुसारे तु श्रियः प्रतिपादकत्वादिदं भाष्यं श्रीभाष्यसमाख्यां भजते इत्यपि शक्यं प्रतिपत्तुम् ।

यद्वा श्रीः लक्ष्मीः तत्प्रसादनिर्वृत्तं भाष्यं श्रीभाष्यम् । सर्वस्य कार्यस्य सिद्धौ विशिष्य च विद्यायाः, लक्ष्मीप्रसादः कारणमिति ह्येतेषां मतम् । उक्तं हि श्रीवत्सचिह्नमिश्रैः श्रीस्तवे—

‘ ऐश्वर्यं यदशेषपुंसि यदिदं सौवर्ण्यलावण्ययोः
रूपं यच्च हि मङ्गलं किमपि यल्लोके सदित्युच्यते ।
तत्सर्वं त्वदधीनमेव यदतः श्रीरित्यभेदेन वा
यद्वा श्रीमदितीदृशेन वचसा देवि प्रथामश्नुते ॥ ’

इति । देशिकचरणैश्च सर्वार्थसिद्धौ—

‘ यज्ञविद्येत्यादिना सर्वविद्यानां तादधीन्योक्त्या सा ख्याप्येति लक्ष्मीरादौ कीर्त्यते ’ इति ।

## वेदार्थसङ्ग्रहः

उपनिषदर्थनिर्णयरूपः । अयमेव श्रीभाष्यकृतामादिमः प्रबन्धः । यत्र यत्र विवादः अद्वैतिनां विशिष्टाद्वैतिनां च तादृशानि वाक्यानि परमिह विवृतानि न सर्वा उपनिषदः । अवशिष्टस्थलानां तात्पर्यं तु अनयैव रीत्या श्रीशङ्करभगवत्पाद-विरचितभाष्यादेव वा ज्ञेयमित्येषामभिप्रायः । अत एवेमे उपनिषद्भाष्यमिति पृथक्प्रबन्धं न प्रणिन्युः । वेदोत्तरभागोपनिषदर्थमात्रसङ्ग्रहपरस्यास्य कथं वेदार्थसङ्ग्रहनामधेयं युक्तमिति तु न चोदनीयम् । अत्रोपनिषत्तात्पर्यविषयतया प्रतिपादितो योऽर्थश्चिदचिच्छरीरकब्रह्मरूपः स एव सकलवेदतात्पर्यगोचर इति ज्ञापयितुं तथा नामकरणम् । सूचितं चेदमत्रैव प्रबन्धे 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिना ब्रह्मणः सर्वशब्दवाच्यत्वं निरूपयद्भिः ।

## वेदान्तसारः

सङ्ग्रहेण ब्रह्मसूत्रार्थप्रतिपादकः । श्रीभाष्याध्ययनौपयिकशास्त्रपरिचय-रहितानामप्युपकारकः ।

## वेदान्तदीपः

वेदान्तसारवन्नातिसंक्षिप्तः श्रीभाष्यवन्नातिविस्तृतश्चायं प्रत्यधिकरणं विषयविशदपूर्वपक्षसिद्धान्तान् प्रतिपादयन् नातिशास्त्रपरिचयवतामप्युपकरोति ।

श्रीभाष्यस्य च व्याख्यानानि बहूनि सन्ति । तेषु च श्रीसुदर्शन-भट्टविरचिता श्रुतप्रकाशिका निगमान्तदेशिकप्रणीता तत्त्वटीका च सर्वोत्तमा चकास्ति । तत्र श्रुतप्रकाशिकैव सम्पूर्णोपलभ्यते । तत्त्वटीका तु न पूर्णा लभ्यते । जिज्ञासाधिकरणेऽर्धभाग एव दृश्यते । सम्पूर्णैव रचिता अस्मद्दौ-र्भाग्यवशाल्लुप्तेति बहुभिः प्रमाणैर्निश्चिन्वन्ति ।

अथ श्रीभाष्यकारानन्तरं भाष्यव्याख्यातदुपयोगिप्रकरणवादादिग्रन्थ-निर्माणेन विशिष्टाद्वैतसिद्धान्तपोषकान् कांश्चित् प्रसिद्धानाचार्यान् संस्कृतमयान् तत्प्रबन्धांश्चाधिकृत्य शकाब्दीक्रमेण प्रस्तूयते वाचकानां सौकर्याय ।

A. D. 1050 to 1300

## नारायणार्याः

इमे च **नीतिमाला**भिधानं दशाधिकारयुक्तं नातिसक्षेपविस्तरं प्रस्फुटार्थ-वाक्यविन्यस्तं ग्रन्थरत्नं प्राणैषुः । श्रीभाष्यवाक्यानां तत्र तत्र प्रमाणतयोपादानात् श्रीमद्रामानुजाचार्याणामर्वाचीना इति देशिकग्रन्थेषु नीतिमालावाक्यानां भूयिष्ठ-मुदाहरणात्ततः प्राचीना इति च निश्चिन्वन्ति । एते च जैमिनीयानि मीमांसा-सूत्राणि संगृह्य अन्यानि परिमितगभीराणि परस्परविरोधादिरहितानि सूत्राणि व्यरचयन्निति मीमांसापादुकागतेन—

'सूत्रोक्तं नूनमन्यद्विदुरथ च मिथो व्याहतं वृत्तिकाराः
प्राज्ञैर्नारायणार्यैस्तदिह विदधिरे संमतास्सूत्रभेदाः ॥

इति श्लोकेनावगम्यते । अयं ग्रन्थः अण्णामलै सर्वकलाशालायां मुद्रित उपलभ्यते ।

## भट्टपराशरपादाः

**तत्त्वरत्नाकरः, अध्यात्मखण्डद्वयविवरणं, श्रीगुणरत्नकोशा**दिस्तो-त्राणि चैतत्प्रणीता ग्रन्थाः । अप्रतिमवैदुषीशालिन इमे आचार्याः कूरत्ताल्वान् इति प्रसिद्धानां पञ्चस्तवीकर्तॄणां श्रीभाष्यकारबहुमानपात्रान्तेवासिनामात्मसम्भवाः । एते च प्रबन्धा देशिकग्रन्थेषूदाहृताः । परन्त्वाद्यौ ग्रन्थाविदानीं नोपलभ्येते ।

## श्रीवरदविष्णुमिश्राः

न्यायसिद्धाञ्जने जीवपरिच्छेदे 'वरदविष्णुमिश्रैस्तु अयमेवार्थो नित्यो व्यापीत्यात्मसिद्धिवचनमादाय **मानयाथात्म्य**निर्णये प्रपञ्चितः' इति, अद्रव्य-परिच्छेदे च 'उक्तं च **मानयाथात्म्य**निर्णये प्रत्यक्षलक्षणानन्तरं वरद-विष्णुमिश्रैः' इति च दर्शनेन **मानयाथात्म्यनिर्णयः** एतत्कृतो ग्रन्थ इति ज्ञायते । किमिमे वरदविष्णुमिश्राः नडादूर् आल्वान् इति प्रसिद्धेभ्यः श्रीभाष्यकारप्रियभागिनेयवात्स्यवरदविष्ण्वाचार्येभ्यो भिन्ना उताभिन्ना इति विचार-णीयम् । यतः प्रदर्शितस्थलद्वये तत्खण्डनमपि कृतम् । अयं ग्रन्थ इदानीं न लभ्यते ।

## श्रीराममिश्राः

सोमाशियाण्डान् नाम्ना विख्याता एते **श्रीभाष्यविवरण**नामकं ग्रन्थम-ग्रथ्नन् । न्यायसिद्धाञ्जने ईश्वरपरिच्छेदे 'तत्रैवमुक्तं जन्माद्यधिकरणे विवरण-कारैः । अयमेवार्थो वेदार्थसंग्रहविवरणेऽप्युक्तः ।' इति दर्शनेन **वेदार्थसङ्ग्रह-विवरणा**ख्यो ग्रन्थोऽप्येतैर्व्यरचीति ज्ञायते । नोपलभ्येतेऽधुना इमौ ग्रन्थौ । **षडर्थसंक्षेप**नामा प्रबन्धोऽप्येतदीयः ।

## श्रीविष्णुचित्तार्याः

श्रीभाष्यकारसाक्षाच्छिष्यद्राविडसाहस्रीव्याख्यातृकुरुकेश्वरान्तेवासिनः वात्स्यवरदगुरुगुरवश्चेमे **प्रमेयसंग्रहाभिधं सङ्गतिमाला**भिधं च ग्रन्थं जग्रन्थुः । परमिदानीं लुप्तौ । देशिकग्रन्थेषु चोदाहृतौ ।

## वरदनारायणभट्टारकाः

श्रीभाष्यार्थप्रदर्शनं प्रौढगम्भीरवाग्विन्यस्तं **वेदान्तन्यायसुदर्शन**नामानं, श्लोकरूपं **प्रज्ञापरित्राण**नामानं च प्रबन्धं प्राबध्नन् इति तदुद्धृतवाक्यानां श्लोकानां च देशिकेन स्वग्रन्थेषूपादानात् प्रतीमः । आद्यो लभ्यते द्वितीयो लुप्तः ।

## श्रीवात्स्यवरदगुरवः

एते च श्रीमद्रामानुजमुनेः प्रियभागिनेयानां वात्स्यवरदविष्ण्वाचार्याणां पौत्राः, श्रीदेवराजगुरुचरणानां पुत्राः, श्रुतप्रकाशिकाचार्यत्रैयरामानुजाचार्या-दीनामाचार्याः नडादूर् अम्माळ् इति द्राविडभाषायां विख्याताः । एतैरारचि-ताश्च वेदान्तप्रबन्धाः—**तत्त्वसारः, प्रमेयमाला, प्रमेयसारः, श्रीभाष्यसंग्रहः, चतुर्लक्षणसंग्रह** इत्याद्याः । तेषु च **तत्त्वसारः** १०४ श्लोकमितः विशिष्टाद्वैत-सिद्धान्तसिद्धबह्वर्थप्रतिपादकः श्रीभाष्यगतकतिचिदधिकरणार्थनिर्णायकः देशि-कादिभिः शिरसा श्लाघितपूर्वः श्रीभाष्याधीतिनामतीवोपकारकश्च ।

यद्यप्येते परिमितगम्भीरवचोगुम्फितकतिपयग्रन्थमात्रप्रणेतारः तथापि संप्रदायप्रवचनमुखेन मतमिदं बहु समपोषयन् । किं बहुना । या खल्वक्षरार्थ-पदार्थवाक्यार्थगूढार्थादिवर्णनैरत्युत्तमव्याख्यानत्वेन प्रसिद्धिमापेदुषी विराजते

श्रुतप्रकाशिका सा हि एतदाचार्योपदिष्टार्थगर्भा एतदाचार्यदिव्यमुखनिर्गत-पदघटितैव चेति व्यक्तमुक्तं श्रुतप्रकाशिकाचार्यैः ।

'गुरुभ्योऽर्थः श्रुतः शब्दैस्तत्प्रयुक्तैश्च योजितः ।'

इति । तथा च श्रुतप्रकाशिकायामाविष्क्रियमाणं गौरवममुमाचार्यमेव गच्छति ।

## मेघनादारिसूरयः

श्रीभाष्यव्याख्या वेदान्तन्यायमार्गप्रदर्शनरूपा **नयप्रकाशिका**, मन्दमतीनामपि बोधजनकं **श्रीभाष्यभावप्रबोधनम्**, **नयद्युमणिः मुमुक्षूपायसंग्रहश्चै**-तत्कृताः प्रबन्धाः । सर्वेऽपीदानीमुपलभ्यन्ते उदाह्रियन्ते च देशिकग्रन्थेषु ।

## सुदर्शनभट्टारकाः

एते च श्रीवात्स्यवरदगुरुशिष्याः श्रीवत्साङ्कमिश्रवंश्याः श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासबिरुदभाजः अप्रतिमवैदुष्यशालिनश्च । आचार्यसकाशात् श्रुतानामर्थानां प्रकाशिकां 'व्याख्यानं चेत्तेनेदृशेन भाव्य'मिति सर्वैः श्लाघ्यमानां षट्त्रिंशत्सहस्रग्रन्थपरिमितामतिविस्तृतां श्रीभाष्यव्याख्यां **श्रुतप्रकाशिकां**, नातिविस्तृतां च **श्रुतप्रदीपिकां** वेदार्थसंग्रहव्याख्यां **तात्पर्यदीपिकां स्तोत्ररत्नव्याख्यादींश्च** प्राणैषुः । वेदान्तदेशिकमातुलपादा गुरवश्च आत्रेयरामानुजाचार्या एतत्सतीर्थ्याः ।

इमे च वात्स्यवरदगुरुकालक्षेपगोष्ठीमनुदिनमलङ्कुर्वाणाः तदुपदिष्टार्थग्रहणैकव्यग्राः शमधनाः संशयादिकं किमप्यपृच्छन्त आसन् । अत एवेमे संख्यापूरणमात्रविश्रान्ता इति सतीर्थ्यानां सर्वेषां मतिरासीत् । अथ कस्मिंश्चिद्दिने मतिवैभवमदसीयं प्रचिकाशयिषवो वरदार्याः किञ्चिद्विलम्ब्यागतमेनं विलम्बहेतुं अपृच्छन् । सुदर्शनभट्टारकाश्चापराधक्षामणमभ्यर्थ्य दासस्यागमनात् प्राक् कियान् भाग आसीत्, तस्य च स्वामिपादैरुपदिष्टा अर्थाः कथं नाम मया ज्ञास्यन्त इत्यनुतप्तचेतसोऽभवन् । किं भवता प्रतिदिनं मदुक्तास्सर्वेऽप्यर्था ग्रहणधारणविषयीक्रियन्ते येनैवमनुतप्तहृदयेन भूयते । तथा चेदेतत्स्थलतात्पर्यं वर्णयेति किञ्चित् स्थलं प्रादर्शयन् । कतमस्यामावृत्तौ स्वामिचरणैरुपदिष्टमेतत्स्थलतात्पर्यमधुना वर्णनीयमिति प्रत्युत्तरयति भट्टारके, विस्मयमापन्नेषु च

सर्वेषु, प्रत्यावृत्ति किमस्माभिरनेकेऽर्था उपदिष्टा इति चिन्तयन्तश्च वरदार्याः, ब्रवीतु भवान् सर्वस्यामप्यावृत्तावुक्तानर्थानित्यचोदयन्। अस्यामावृत्तौ स्वामिभिरेवं कथितमस्यां चेत्थमिति सर्वमप्याचार्योपदिष्टमर्थमनुवदत्सु भट्टारकेषु, वरदार्या अतीव सन्तुष्टाः भवता किल मदुपदेशा अर्थवत्तामविन्दन्तेति संश्लाघ्य अन्यांश्च शिष्यानुद्दिश्य पश्यतास्य मतिवैभवं ग्रहणधारणपाटवं चेत्यवोचन् इत्यैतिह्यं श्रूयते।

श्रीरङ्गक्षेत्रे तुरुष्कयवनाद्याक्रमणकाले वार्धक्ययुक्ता एते 'यथेयं श्रुतप्रकाशिका तैर्नापह्रियेत तथैतद्रक्षणभरं वहतु भवान्' इत्युक्त्वा श्रुतप्रकाशिकाश्रीकोशं वेदान्तदेशिकहस्ते प्रायच्छन् ते च तथैव समरक्षन् इति—

'श्रुतप्रकाशिका भूमौ येनादौ परिरक्षिता।
प्रवर्तिता च पात्रेषु तस्मै श्रेष्ठाय मङ्गलम्॥'

इति देशिककुमारवरदार्यप्रणीतेन श्लोकेनावगम्यते।

## आत्रेयरामानुजाचार्याः

एते च श्रीमद्भाष्यकारदिव्यमाहानसिकानां 'किडाम्बि आच्चान्' इति प्रख्यातानां वेदान्तोदयनबिरुदभूषितानां प्रणतार्तिहराचार्याणां नप्तारः, श्रीमद्वेदान्तदेशिकस्य मातुलपादा आचार्यचरणाश्चेति—

'यो माहानसिको महान् यतिपतेर्नीतश्च तत्पौत्रजा-
नाचार्यानिति रङ्गधुर्य मयि ते स्वल्पावशिष्टो भरः।'
'इति यतिराजमहानसपरिमलपरिवाहवासितां पिबत।
विबुधपरिषन्निषेव्यां वेदान्तोदयनसंप्रदायसुधाम्॥'

इति देशिकसूक्तिभ्यां ज्ञायते। त्रयोदशवादपरिकर्मितः प्रौढः **न्यायकुलिशाख्यो** ग्रन्थः एतैरग्रन्थि। उपलभ्यते चायं मुद्रितः।

## वेदान्तदेशिकाः (1268—1369 A. D.)

पूर्वोत्तरसकलाचार्यापेक्षया अतिशयितवैभवशालिनां संक्षिप्त-विस्तृत-सरलबहुमत-सावधानप्रिय-परफणितिपरिष्कारादिरूपशताधिकप्रबन्धनिर्माणेन विश्वतः

प्रसृत्वरकीर्तिमतां वैराग्यनिधीनाममीषामाचार्यसार्वभौमानां सर्वत्र प्रसिद्धं माहात्म्यमधिकृत्य नास्त्यधिकं वक्तव्यम् । वेदभाष्यकर्तृमाधवाचार्यसमानकालिका एते । एतैरारचिता वेदान्तप्रबन्धाश्च—

## न्यायपरिशुद्धिः

महर्षिगौतमप्रणीतं न्यायदर्शनं किं वेदान्तिभिः स्वीकार्यमुत बहिष्कार्यमितीह विचार्यते । बहिष्कार्यमिति बहवः । यतः 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः । एतेन वेदापरिगृहीतसांख्यपक्षप्रतिक्षेपेण परिशिष्टाश्च वेदापरिगृहीताः कणभक्षाक्षपादक्षपणकभिक्षुपक्षाः क्षपिता वेदितव्याः ' इत्युक्तम्भाष्ये । वेदान्तविरुद्धमुक्तिस्वरूपकर्मेन्द्रियानभ्युपगमादीनां बहूनामर्थानां दर्शनाच्च । देशिकचरणाश्च स्वीकारपक्षमेव समर्थयन्ति । गौतमप्रणीतानि सर्वाणि सूत्राणि न वेदान्ततात्पर्यविषयार्थविरुद्धार्थतात्पर्यकाणि । व्याख्याकृत एवान्यथार्थमवर्णयन् इति तेषामभिप्रायः ।

' तदयं संग्रहः—

उपजीव्यबहुत्वेन विद्यास्थाननिवेशनम् ।
विरुद्धांशैकविषया भाष्यादिषु निराक्रिया ॥'

इत्युक्तमिहानुसंधेयम् । यत्रापि विरुद्धवदवभासते तत्रापि न सूत्रेषु विरोधः अपि तु व्याख्यान एवेति विशदं निरूप्य न्यायदर्शनस्य स्वीकार्यतां न्यरूपयन् । प्रमाणानि विस्तरेण, प्रमेयानि च संग्रहेणेह निरूपितानि ।

## न्यायसिद्धाञ्जनम्

न्यायपरिशुद्ध्यन्ते संग्रहेण निरूपितानि प्रमेयानीह विस्तरेणाभिधीयन्ते । परिच्छेदषट्कात्मायं ग्रन्थः । अन्ते अद्रव्यपरिच्छेदे अल्पेनैव भागेन लुप्तः ।

## तत्त्वमुक्ताकलापः—अधिकरणसारावलिश्च

स्रग्धरावृत्तबद्धौ । आदिमे विशिष्टाद्वैतसिद्धान्तसिद्धानि तत्त्वानि सकलमतपरामर्शपूर्वकं विचार्य निर्धारितानि । 'सर्वज्ञत्वं तत्त्वमुकलापे' इत्युक्तरीत्या ज्ञातव्यास्सर्वेऽपि सिद्धान्तार्थाः वक्तव्यशेषं विना सविस्तरं निरूपिता अत्र ।

यत्र क्वचिदर्थेष्वौदासीन्यं प्रदर्शितमिव लक्ष्यते यत्र वा एक एवार्थः एवं वा तथा वेति संशयपदमिव प्रदर्शितः तेष्वितरैरप्यौदासीन्यमेव वोढव्यं, न कैरप्यन्यैस्तादृशं स्थलमिदमित्थमिति शक्यं निष्कष्टुमित्याचार्याशयः । तादृशस्य विषयस्यातिगहनतायास्सर्वसंमतत्वात् ।

यदाहुरन्ते—

निश्शेषां वस्तुवृत्तिं निपुणमिह मया न्यस्यता क्वापि कोणे
 यत्रोदासि द्विधा वा समगणि गहने संमते सन्मतीनाम् ।
निष्कष्टुं कश्चिदन्यः प्रभवति भगवल्लक्ष्मणाचार्यमुद्रा-
 मक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्तः ॥

इति ।

द्वितीये च शारीरकमीमांसाभाष्यगताधिकरणाध्यायपादसारार्थाः प्रतिपाद्यन्ते । अधिकरणशब्द उपलक्षणमध्यायपादयोरपि । अत एवोक्तमन्ते—

'सन्तोषं ब्रह्मसूत्राधिकरणचरणाध्यायसारावलिर्वः ।'

इति ।

'विश्वं द्रव्यादिभेदाद्विशदमभिहितं तत्त्वमुक्ताकलापे
 व्यूढं शारीरकस्य त्विह दृढघटितं रूपमापादचूडम् ।
तस्मादस्मच्छ्रुताब्धेरमृतमिव समुद्भ्रान्तमश्रान्तबद्ध-
 श्रद्धैरन्योन्यहस्तप्रदमिदमुभयं धार्यमाचार्यवद्भिः ॥'

इति आचार्योक्तरीत्या स्रग्धरामयं द्वयमपि सर्वैरवश्यधार्यम् ।

तत्त्वमुक्ताकलापस्य स्वेनैव रचिता व्याख्या **सर्वार्थसिद्धिः** । देशिककुमारवरदार्यैः कृता अधिकरणसारावलिव्याख्या **चिन्तामणिनाम्नी** ।

**अधिकरणदर्पणः**

अयमिदानीं लुप्तः । अधिकरणसारावलिव्याख्यानरूपोऽयं स्यादित्येके । तथात्वे चिन्तामणिप्रवृत्तिहेत्वभावात् स्वतन्त्र एवायमित्यपरे ।

## सेश्वरमीमांसा

कर्मणामाराध्यभूता देवता नास्ति । अपूर्वद्वारा यागादीनामेव फलजनकतेति मीमांसकाः । नास्मिन्नर्थे जैमिनेस्तात्पर्यम् । ब्रह्मसूत्रेषु बहुषु स्थलेषु जैमिनेर्देवताभ्युपगन्तृताया एव प्रतीतेः । वैश्वानरशब्दस्साक्षादेव परमात्मानमाचष्ट इति जैमिनिर्मन्यते इति वैश्वानराधिकरणे 'साक्षादप्यविरोधं जैमिनिः' इति सूत्रेणोक्तम् । परमात्मासाधारणेन धर्मेण सह मुक्तः आविर्भवतीति जैमिनेराशय इति 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति सूत्रे कथितम् । तथा अर्चिरादिरातिवाहिको गणः परमात्मानमेव प्रापयतीति जैमिनेर्मतमिति 'परं जैमिनिर्मुख्यत्वा'दिति सूत्रेणोक्तम् । जैमिनेर्देवतानभ्युपगन्तृत्वे इमानि सूत्राणि न सङ्गच्छेरन् । तथान्यान्यपि 'सम्पत्तेरिति जैमिनिस्तथा हि दर्शयती' त्यादीनि सूत्राण्यत्रानुसन्धेयानि । आशुतरविनाशिनां कर्मणां कालान्तरभाविफलजकत्वासम्भवात् द्वारं किञ्चित्कल्पनीयमिति यद्याग्रहस्तदा देवताप्रीतिकोपयोरेव तथात्वमस्तु । नैतदतिरिक्तमपूर्वं कल्पनीयम् । मानाभावात् । उक्तं च श्रीवाचस्पतिमिश्रैः फलाधिकरणे **भामत्यां**—

'तस्माद्दृष्टानुगुण्याय यागादिभिरपि देवताप्रसत्तिरुत्पाद्यते । तथा च देवताप्रसादादेव स्थायिनः फलोत्पत्तेरुपपत्तेः कृतमपूर्वेण । एवमशुभेनापि कर्मणा देवताविरोधनं श्रुतिस्मृतिप्रसिद्धम् । ततः स्थायिनोऽनिष्टफलसंभवः' इति ।

श्रीवत्सचिह्नमिश्रैश्च—

यत्त्वत्प्रियं तदिह पुण्यमपुण्यमन्यत्
नान्यत्तयोर्भवति लक्षणमत्र जातु ।
धूर्तायितं तव हि यत्किल रासगोष्ठ्यां
तत्कीर्तनं परमपावनमामनन्ति ॥

(अतिमानुषस्तव—53 श्लो०)

कर्मसु श्रद्धोत्पादनाय पूर्वमीमांसायां देवतानिराकरणम् । अत एव हि देवताधिकरणे भाष्याद्यनुसारेण निरीश्वरपक्षमुपन्यस्याप्यन्ते 'मम त्वेवं वदतोऽपि वाणी दुष्यति इति हरिस्मरणमेव शरणम्' इति मीमांसकसार्वभौमैः खण्डदेवभट्टाचार्यैरभिहितम् ॥

तथा च—

तत्तद्देवतान्तरात्मनावस्थितपरमात्मैव सकलफलप्रद इति निरूपयितुं विशिष्टाद्वैतसिद्धान्तानुसारेण जैमिनिसूत्राणि भाषितुं चायं ग्रन्थः प्रवृत्तः । न सम्पूर्णतयायमुपलभ्यते ।

## मीमांसापादुका

सेश्वरमीमांसाप्रतिपाद्यार्थान् संग्रहेण प्रतिपादयन् पद्यमयोऽयं प्रबन्धः ।

## ईशावास्योपनिषद्भाष्यम्

तत्त्वहितपुरुषार्थानां त्रयाणामपि अस्यां परिमितायामुपनिषदि सुस्पष्टं प्रतिपादितत्वात् तत्प्रकाशयितुं अस्याः परमुपनिषदो भाष्यं प्रणीतमाचार्यैः ।

## शतदूषणी

अयं वादग्रन्थः । पञ्चषष्टिर्वादा एवोपलभ्यन्ते ।

श्रीभाष्यव्याख्या **तत्त्वटीका** गीताभाष्यव्याख्या **तात्पर्यचन्द्रिका** च सर्वातिशायिन्यौ विराजेते ।

## महाचार्याः (A. D. 16th century)

एते अप्पय्यदीक्षितसमकालिकाः । वेदान्तदेशिकादनन्तरं प्रौढापूर्वनानायुक्तिगर्भग्रन्थप्रणेतार एते आचार्या मतमिदं पोषयितुं बहून् ग्रन्थानरचयन् तेषु केचिदेव मुद्रिता अन्ये च प्रतीक्षन्ते मुद्रणम् । शतदूषणीव्याख्या **चण्डमारुतम्**, **अद्वैतविद्याविजयः**, **परिकरविजयः**, **पाराशर्यविजयः**, **ब्रह्मविद्याविजयः**, **सद्विद्याविजयः** इति **विजयपञ्चकम्**, **ब्रह्मसूत्रभाष्योपन्यासः**, **उपनिषन्मङ्गलदीपिकाख्या** उपनिषदां व्याख्या, सर्वार्थसिद्धिव्याख्या **तात्पर्यप्रकाशिका** चैतैर्विरचिताः प्रबन्धाः अतीवोपकारकाः मातृकासूपलभ्यन्ते । एषु चत्वार एव मुद्रिताः ।

## अप्पय्यदीक्षिताः

एतत्प्रणीतो विशिष्टाद्वैतग्रन्थो **नयमयूखमालिका** । एतत्कृतस्य परिच्छेदचतुष्टयमितस्य **चतुर्मतसारसंग्रहस्य** द्वितीयः परिच्छेद एव **नयमयूख-**

मालिकेत्युच्यते । प्रत्यधिकरणं तत्तदधिकरणार्थसंग्रहकारिका चेह वर्तते । अयं च ग्रन्थः श्रीभाष्यपरिचयं वाञ्छतामतीवोपकरोति ।

## रङ्गरामानुजमुनिः

षोडशान्तेऽस्य स्थितिः । विशिष्टाद्वैतानुसारेण उपनिषदां भाष्यकारः । श्रुतप्रकाशिकाव्याख्या **भावप्रकाशिका** श्रीभाष्यसाक्षाद्व्याख्या **मूलभावप्रकाशिका,** श्रीभाष्याधिकरणार्थप्रकाशिका **शारीरकशास्त्रार्थदीपिका, न्यायसिद्धाञ्जनव्याख्या**प्रभृतयश्च एतत्प्रणीता ग्रन्थाः । षष्टिप्रबन्धनिर्मातेत्यस्य प्रसिद्धिः । महाचार्यस्य वार्धकेऽस्य यौवनं वयः ।

## वाधूलश्रीनिवासाचार्यः (17th Century)

महाचार्यशिष्यः । अयमन्नम्भट्ट इव न्यायशास्त्रप्रविविक्षूणामुपकारकं तर्कसंग्रहं, वेदान्तशास्त्रप्रविविक्षूपकारकं सकलार्थगर्भं यतीन्द्रमतदीपिकाख्यं ग्रन्थमग्रथ्नात् ।

## (A. D. 18th Century)

अस्मिंश्च शतके सुरपुरं विद्वांस इति विख्याता अण्णयाचार्याः तद्वंश्याश्च बहुतरान् अत्यन्तमुपकारकान् प्रौढान् सरलांश्च प्रबन्धान् व्यरचयन् । तेषु—

## सुरपुरं—अण्णयाचार्यः

एतत्कृता वेदान्तग्रन्थाश्च—आनन्दतारतम्यखण्डनम्, सव्याख्यः तत्त्वगुणादर्शः, व्यावहारिकसत्यत्वखण्डनसारश्च ।

## सुरपुरं—वेङ्कटाचार्यः I

आनन्दतारतम्यखण्डनं, जगन्मिथ्यात्वखण्डनं, सिद्धान्तरत्नावली, सिद्धान्तवैजयन्तीनामानः एतत्प्रणीता वेदान्तग्रन्थाः ।

## सुरपुरं— श्रीनिवासाचार्यः

सुरपुरं विद्वत्सु अयं श्रीनिवासाचार्य एव बहुतरग्रन्थप्रणेता । सर्वेऽपि ग्रन्था रत्नायमाना अतीवोपकारका मुद्रणं प्रतीक्षमाणाश्च ते यथा—

१. अरुणाधिकरणसरणिविवरणी

२. आनन्दतारतम्यखण्डनम्

३. ओङ्कारवादार्थः or नयमणिकलिका

४. जिज्ञासादर्पणः

५. ज्ञानरत्नप्रकाशिका

६. णत्वदर्पणः

७. तत्त्वमार्ताण्डः

८. प्रणवदर्पणः

९. प्रधानप्रतितन्त्रदर्पणः

१०. नयद्युमणि·, दीपिका च

११. पुच्छब्रह्मवादनिरासः

१२. भेददर्पणः

१३. विरोधनिरोधः or भाष्यपादुका

१४. विरोधवरूथिनीप्रमाथिनी

१५. षष्ठ्यर्थनिर्णयः

१६. सिद्धान्तचिन्तामणिः or उपादानत्वसमर्थनम् (अयं मुद्रितो लभ्यते)

१७. हरिगुणदर्पणम्

१८. दत्तरत्नप्रदीपिका

१९. सुभाषितानि

२०. नीतिशतकम्

## सुरपुरं बुच्चि वेंकटाचार्यः II

वेदान्तकारिकावली अस्य वेदान्तग्रन्थः । मुद्रितश्चायं अडयार् कोशागारे संप्रति लभ्यते ।

## (A. D. 19th Century.)

अस्मिन्नेव शतके बहव आचार्याः तार्किकचक्रचूडामणिगदाधरभट्टाचार्यशैलीमनुकुर्वाणाः नव्यया परिष्कृतया वाचा सिद्धान्तार्थान् प्रकाशयितुमनेकान् प्रबन्धानररचन् । तेषु चानन्तात्वान् वादावलीति प्रख्यातो ग्रन्थः तिरुनारायणपुर वास्तव्यानन्ताचार्यप्रणीतः संप्रति मुद्रितो लभ्यमानोऽतीवोपकरोति वादकुशलानां ।

तथा तिरुप्पुक्कुलिस्वामीति विख्यातैः श्रीकृष्णताताचार्यैः विरचिता अपूर्वनानायुक्तिभरिताः परिष्कृतनवीनतर्कशैलीघटिताः न्यायसिद्धाञ्जनन्यायपरिशुद्ध्यादिव्याख्यानग्रन्थाः, ब्रह्मपदशक्तिवादादिस्वतन्त्रग्रन्थाश्च तथा पुरिशै श्रीरङ्गाचार्यैर्विरचिताः कुदृष्टिध्वान्तमार्तण्डादयो ग्रन्थाश्च सुतरामुपकुर्वन्ति तर्ककर्कशविचारचातुरीधुरीणानाम् ।

अस्मिन्नेव च शतके प्रकृतग्रन्थकर्तारः वाधूलश्रीनिवासाचार्याः जनिमलभन्त । अथैतद्ग्रन्थांश्चरितं चाधिकृत्य किञ्चिदुच्यते ।

## श्रीभाष्यप्रकाशिका

वाधूलश्रीनिवासाचार्यैरचिता । इदानीं प्राकाश्यं नीयमाना । अत्र च तत्तदधिकरणपूर्वपक्षयुक्तयः सिद्धान्तयुक्तयश्च भाष्ये व्याख्याने च वर्तमानाः प्रायेण सर्वा अपि क्रोडीकृत्य प्रदर्श्यन्ते । पूर्वपक्षश्चेदारभ्यते तदुपष्टम्भकयुक्तीः पञ्चम्यन्तैः शब्दैर्विवृत्य एकेन महावाक्येन समाप्यते । तथा सिद्धान्तश्च । शैली चातिहृदयङ्गमा । अधीतश्रीभाष्याणां विदुषां भाष्यप्रविविक्षूणां चातीवोपकारकोऽयं ग्रन्थः । अत्र च ग्रन्थे **श्रुतप्रकाशिका**पङ्क्तयः **अधिकरणसारावली**श्लोकाश्च प्रमाणतया प्रदर्श्यन्ते । तृतीयेऽध्याये प्रथमपादे अनिष्टादिकार्यधिकरणे—'न तस्य यमवश्यता नरकपातभीतिः कुतः' इति व्यतिरेकोक्त्या यमवश्यताया नरकपातशब्दोक्तदुःखानुभवहेतुत्वप्रतीतेः' इति श्रुतिस्थाने देशिकसूक्तिमुदाहरन्तश्चेमे देशिकग्रन्थेषु स्वस्य विद्यमानं गौरवातिशयमाविष्कुर्वन्ति । जन्माद्यधिकरणे **भावप्रकाशिकापाराशर्यविजयौ** मध्वाद्यधिकरणे स्वाचार्यलक्ष्मणाचार्यविरचित**शारीरकभास्कर**श्च नाम्ना उपात्ताः ।

एते च ग्रन्थकर्तारः श्रीवाधूललक्ष्मणाचार्यशिष्याः श्रीनृसिंहार्यतनूजन्मानः महीसारपुरवास्तव्याः श्रीवेङ्कटाचार्यापरनामधेयाश्चेति—

'श्रीनृसिंहं प्रणम्य श्रीलक्ष्मणार्यं च देशिकम् ।
श्रीभाष्यसंग्रहं कुर्वे श्रीनिवासः सतां मुदे ॥'

इत्यनेन नान्दीश्लोकेन, उपसंहारगतेन—

‘ इति श्रीवाधूलकुलतिलक-श्रीलक्ष्मणार्यकरुणाकटाक्ष-
लब्धतत्त्वयाथात्म्येन श्रीमन्नृसिंहार्यतनुजेन
श्रीमहीसारपुरवास्तव्येन श्रीवेङ्कटाचार्या-
परनाम्ना श्रीनिवासदासेन ’

इति वाक्येन चावगम्यते । इतोऽतिरिक्तं किमपि चरितकालादिकं ग्रन्थादस्मान्न प्रतीयते ।

अस्मिंश्च सन्दर्भे ग्रन्थकर्तृश्रीनिवासाचार्यनसारमात्मानं कथयन्तः मही-साराग्रहाराभिजनाः श्रीभक्तिस्वाम्यपरनामक ति.को, वेङ्कटाचार्याः ग्रन्थकर्तृचरित-कालादिकमधिकृत्य कंचिल्लेखं प्रादुः । तं च लेखं तथैवेह वाचकमहाशयानां पुरत उपहरामः ।

“ एष ग्रन्थकर्ता काञ्चीमण्डलमण्डनायमाने भगवतो भक्तिसारमुनेरव-तारेण पवित्रीकृते तिरुमलिशै इति प्रथिते (मल इति नामा चोलः प्रतिष्ठातास्य पुरवरस्य) महीसारपुरे शालिवाहनशकाब्दे १७०१ विकारिनाम्नि संवत्सरे सिंहमासे स्वातीनक्षत्रेऽवतीर्णः । भगवतो रामानुजमुनेः पादुकात्वेन भागिने-यत्वेन च प्रथितयशसः श्रीमतो दाशरथिगुरूत्तमस्य (मुदलियाण्डान्) अवतरणे-नालङ्कृते वंशे (कोयिल्कन्दाडै) इति विश्रुते समुद्भूतः । महावीरचरितो-त्तररामचरितरत्नसारिणी (तत्त्वसारव्याख्या) रहस्यत्रयतात्पर्यचन्द्रिकाद्यनेक-प्रबन्धकर्तुः अण्णावप्पंगार इति विख्यातस्य वाधूलवीरराघवगुरोस्समकालिकः सगोत्रः सतीर्थ्यः ।

विरक्तिवेङ्कटाचार्यः अस्य पिता । स च काञ्चीनगरनिवासिना सुदर्शन-श्रेष्ठिनाम्नान्तेवासिना समर्पितं सहस्रनिष्कपरिमितं द्रव्यं भगवत्कैङ्कर्याय विनि-युञ्जानः असदृशेन वैराग्येण विरक्तिवेङ्कटाचार्य इति प्रथामवाप । एतद्ग्रन्थ-कर्त्रा प्रणीतौ तद्विषयौ श्लोकौ—

‘ श्रीमद्द्रामिडभाष्यदिव्यगमनीसंधुक्षणैकोद्यमे
श्रीमद्रम्यवराभिधे मुनिवरे निस्सीमभक्तिस्थितिः ।

कृत्वा तस्य निकेतमद्भुततमं श्रीभूमिसारे पुरे
तस्यैवाङ्घ्रिमवाप तद्गतमनाः श्रीवेङ्कटार्यो गुरुः ॥

असद्रक्षार्थमत्रावतरणमुपयन् भूमिसाराख्यपुर्यां
आलोड्याशेषशास्त्राण्य [पगत]....विषयासङ्गनिर्वृत्तवृत्ति ।
कैङ्कर्यं भूमिसारे हरितगजपुरे साधयन् स्फीतकीर्तिः
वैराग्यैकान्तसीमा परमपदमगाद्वेङ्कटार्यो विरक्तः ॥ '

इति । एतद्ग्रन्थकर्त्रा प्रणीता इतरे प्रबन्धाः ।

(१) अरुणाधिकरणसिद्धान्तप्रकाशिका (मञ्जरी)
(२) दाशरथिविजयः
(३) भक्तिसाराष्टोत्तरशतनामावलिः

(अयं च) पितुस्सकाशादधिगतसकलशास्त्रार्थः महीसारपुरे पित्रा प्रतिष्ठापिते अद्यापि विराजमाने वरवरमुनिमण्डपे श्रीभाष्यं श्रुतप्रकाशिकां चानेकवारमध्यापयन् षट्सप्ततिवर्षाण्यलमकरोदिमं लोकम् । नलसंवत्सरे चैत्रमासे शुक्लपञ्चम्यां परमपदमवाप । अस्य च ग्रन्थकर्तुस्तनूजः द्वितीयवेङ्कटाचार्यनामा श्रीभागवतदशमस्कन्धव्याख्या इति ग्रन्थकर्ता बृन्दावनादिक्षेत्रेषु स्वसिद्धान्तं प्रकाशयन् बहून् शिष्यानध्यापयन् ' बृन्दावनं वेङ्कटार्य ' इति प्रथितः जेजीयतेस्स-तराम् ' इति ।

इत्थं

**ति. को. वेङ्कटाचार्यः**
**(एतद्ग्रन्थकर्तुः प्रपौत्रः तिरुमलिशै)**

अत्रेदमालोचनीयम् । पूर्वोदाहृतमङ्गलश्लोकोपसंहारवाक्याभ्यां ग्रन्थ-कर्तुर्नाम श्रीनिवासाचार्यः, आचार्यः श्रीलक्ष्मणाचार्यः, पिता च श्रीनरसिंहा-चार्यः इति ज्ञायते वेङ्कटाचार्यपरनामकता च । एतल्लेखावलोकनेन तु अस्य पिता वेङ्कटाचार्यः, स एव च गुरुः, तत्त्वसारव्याख्यारत्नसारिणीप्रणेता वीरराघवगुरुस्सतीर्थ्य इति चावगम्यते । स चेदेतत्सतीर्थ्यः तदा तेन रत्नसारिण्युप-संहारे—

'नारसिंहगुरोः पुत्रो वरदार्यकृपाधनः ।
वीरराघवदासोऽहं तत्त्वसारं व्यवीवरम् ॥' इति,

'इति श्रीमद्वाधूलवेङ्कटार्यसम्भवश्रीवरदगुरुदिव्यकरुणासमधिगतनिगमान्तयुगलहृदयेन वीरराघवदासेन विरचिता'

इति च स्वस्य श्रीवरदगुरुशिष्यत्वकथनं कथमिति च शङ्का जायते । अतस्तत्त्वमिह वाचकमहाशयैर्निर्णेतव्यम् । सर्वथापि क्रैस्तवीये एकोनविंशे शतके भूमण्डलमिमलञ्चक्रुरिति प्रतीयते ।

अस्य च ग्रन्थस्य मुद्रापणे आदर्शतया मद्रनगरीविराजमानराजकीयप्राच्यहस्तलिखितकोशागारस्थः काकदपत्रमयः R. 3850 सङ्ख्याङ्कितः प्रायः शुद्धः सम्पूर्णश्चैक एव कोश उपयुक्तः । अन्या कापि मातृका तदानीं नोपलब्धा । अत्र च मध्ये क्वचित् क्वचित् त्रुटितम् । यथासम्भवं च पूरितम् । तादृशस्थलेषु [ ] एवं रूपं चिह्नं निवेशितम् । मातृकान्तरानुपलम्भाधीना मनुष्यमात्रसाधारणप्रमादाधीनाश्च दोषा यद्यत्र स्युस्ते क्षन्तव्या गुणैकपक्षपातिभिरिति प्रार्थ्यते ।

तदेवमेतद्ग्रन्थमुद्रापणानन्तरं तिरुपतिस्थश्रीवेङ्कटेश्वरप्राच्यलिखितपुस्तकभाण्डागारेऽपि हस्तलिखितपुस्तकात्मकं कोशद्वयं पत्रात्मकमेकमपरं च तालपत्रात्मकमुपलब्धम् । तयोरन्यतरत्पत्रात्मकमेकमसमग्रं (No 7305) तदध्यक्षेणास्मत्प्रार्थनानुरोधमस्मभ्यमनुप्रेषितम् । तेनायं मुद्रितो भागः समतोलि । तत्रोपलब्धः पाठभेदश्चात्रानुबन्धतयान्ते संयोजितः । अपरं तु तालपत्रात्मकमद्यावधि दैवान्नानुप्रेषितमतो न तेनायं तोलितश्च । अन्ततस्तयोरेकमपि वास्मभ्यमनुप्रेष्योपकृतवद्भ्यस्तदध्यक्षेभ्य आवेद्यते मया कृतज्ञता ।

किं चैतद्ग्रन्थमुद्रापणोपयोगिमातृकानिर्माणशोधनादिभिरुपकृतवतां श्रीयुतानां रामानुजवैद्यनाथकल्याणसुन्दरविश्वनाथमुकुन्दानां निर्दिष्टसमये मुद्रणं सम्पादितवतां भारतीविजयमुद्रणालयाधिकृतानां च धन्यवादमावेदयामीति शम् ।

**मद्रनगरी** इत्थं

10—2—56. **ति. चन्द्रशेखरः**

Sri Venkatesvara Oriental Institute, Tirupati, has two copies of the work ŚRĪ BHĀṢYAPRAKĀŚIKĀ. At the request of this library, the Director of that Institution was kind enough to send an incomplete copy of the same bearing No. 7305, practically after the completion of the printing of the work. However, it was collated with the printed copy and the different readings are given as an Appendix. Since the Director of that Institution has not sent the other copy, which happens to be a complete one, it is rather unfortunate that it was not possible to collate the printed matter with this second copy. My thanks, however, are due to the Sri Venkatesvara Oriental Institute, for having sent on loan at least one of the two copies of the manuscript with them.

Madras-5,
19—2—1956.

T. CHANDRASEKHARAN,
*Curator,*
Govt. Oriental Manuscripts Library.

॥ श्रीरस्तु ॥

# ॥ अधिकरणसूचिका ॥

## ॥ प्रथमाध्यायः ॥

## ॥ चतुर्थाध्यायः ॥

### प्रथमः पादः



### द्वितीयः पादः

**॥ आहत्याधिकरणानि १५५ ॥**

**॥ अधिकरणसूचिका समाप्ता ॥**

॥ श्रीरस्तु ॥

# ॥ श्रीभाष्यप्रकाशिका ॥

( श्रीनिवासाचार्यविरचिता )



## ॥ प्रथमोऽध्यायः ॥

## ॥ प्रथमः पादः ॥

### (१) ॥ जिज्ञासाधिकरणम् ॥

श्रीनृसिंहं प्रणम्य श्रीलक्ष्मणार्यञ्च देशिकम् ।
श्रीभाष्यसङ्ग्रहं कुर्वे श्रीनिवासस्सतां मुदे ॥

परमकारुणिको भगवान् रामानुजाचार्यः शारीरकं शास्त्रं शङ्करादिकुदृष्टिभिरतिदूषितं श्रीमद्यामुनाचार्यदिव्याज्ञया सम्यग्व्याचिकीर्षुः चिकीर्षितस्य प्रबन्धस्याविघ्नपरिसमाप्तिसिद्धये विशिष्टशिष्टाचारपरम्पराप्राप्तमिष्टदेवताभिष्टुत्यादिरूपं मङ्गलं शिष्यानुजिघृक्षया प्रबन्धयन् व्याससमासरसिकमहर्षिमर्यादया श्रोतृबुद्धिसौकर्यसमाधित्सया च शास्त्रार्थमपि सङ्गृह्णन् इष्टदेवतां विशिनष्टि— अखिलेत्यादिना प्रथमपद्येन ।

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥

तत्र प्रथमचरणेन पूर्वद्विकार्थस्सङ्गृहीतः । द्वितीयचरणेनोत्तरद्विकार्थः संक्षिप्तः । तृतीयतुरीयाभ्यां तदवान्तरार्थविशेषास्सूचिताः । अखिलेत्यनेन जन्मादिसूत्रतद्विषयवाक्यार्थकार्यवाचिसर्वनामेदंशब्दसङ्कोचबहुवचनाभिप्रेतार्थ उक्तः ।

भुवनशब्देन च तत्रत्येदंशब्दाभिप्रेतविचित्ररचनादिविशेषो दर्शितः । अनेन च पदद्वयेन कर्तुस्सार्वज्ञ्यादिसिद्ध्या चतुर्मुखादिव्यावृत्तिस्सिध्यति । जन्मस्थेम-शब्दाभ्यां प्रयोजकव्यापारभूतसृष्टिरक्षणे लक्ष्येते । प्रयोज्यजगतो[भूतो]त्पत्ति-स्थित्योः प्रयोजकभगवल्लीलात्वानुपपत्तेः । अनेन च सृष्टिवाचिजन्मशब्देन प्रपञ्चाध्यासवादिनिरासः फलितः । काल्पनिकशुक्तिरूप्यादीनां दोषाधीनोत्पत्ति-कतया पुरुषव्यापाराधीनोत्पत्त्यसम्भवात् । भङ्गः संहारः । 'भञ्जो आमर्दने' इति धातोः । आदिशब्देन नियमनं गृह्यते । अनेन समन्वयाध्यायार्थः संगृहीतः । लीला तादात्विकानन्दकरव्यापारविशेषः । तेन "लोकवत्तु लीला-कैवल्यम्" (ब्र० सू० २-१-३३) इति सूत्रार्थस्मरणमुखेनाविरोधाध्यायार्थः सूचितः । जगत्सृष्ट्यादेर्भगवल्लीलात्वोक्त्या प्रपञ्चस्य भगवन्मायाकल्पितत्वनिरास-स्सूचितः । लोके मायिकवस्तुदर्शनस्य विशेषादर्शिजनानन्दकरत्वेन विशेष-दर्शिनो मायाविनस्तथानन्दकरत्वाभावात् ।

विनताः विविधविद्यानिष्ठाः दहरादिभेदभिन्नकल्पितब्रह्मविद्यानिष्ठाः । नतिशब्दोक्तविद्यावैविध्यवाचिविशब्देन निर्गुणब्रह्मोपासनवादे रूपभेदादेर्विद्या-भेदकस्यासम्भवात् 'नाना शब्दादिभेदात्', (ब्र० सू० ३-३-५६) 'विक-ल्पोऽविशिष्टफलत्वात्' (ब्र० सू० ३-३-५७) इति सूत्रार्थविरोधस्सूचितः । विविधाः देवमनुष्यादिभेदभिन्नाः । भूताः सत्तां प्राप्ताः । 'अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः' (तै० अध्याय २. अनु ६) इत्युक्तरीत्या ब्रह्मज्ञानलब्ध-सत्ताकाः । तेषां व्राताः तत्सम्बन्धिव्राताः । षष्ठ्यर्थश्च साक्षात्परम्परासाधारण-स्सम्बन्धः । न विशेषः । ततश्च भगवत्स्वरूपरूपगुणविभूतियाथात्म्याभिज्ञानां तदभिमानान्तःपातिनाञ्च भगवद्रक्षणीयत्वं 'तमेवं विद्वानमृतः' (पुरुष सू०) 'ब्रह्मविदाप्नोति परम्' (तै० २-१)

'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः ।
यं यं स्पृशति पाणिभ्यां यं यं पश्यति चक्षुषा ॥'

(शाण्डिल्य. १-१५)

इत्यादिप्रमाणप्रसिद्धं सूचितम् । दहरादिभेदभिन्नविद्यावाचिनतशब्देन उपास-नानिरूपणपरतृतीयाध्यायार्थो दर्शितः । रक्षाशब्देन 'मुख्यामुख्ययोर्मुख्ये

संप्रत्यय ' इति न्यायेन परमपुरुषार्थलक्षणमोक्षवाचिना 'सम्पद्याविर्भावः स्वेनशब्दात्' (ब्र० सू० ४-४-१) इति सूत्रोक्तनिश्शेषकर्मविनिर्मोकपूर्वकस्वाभाविकापहतपाप्मत्वादिगुणाष्टकाविर्भावोपेतपरिपूर्णभगवदनुभवरूपोपासनफलसूचनेन तुरीयाध्यायार्थो ज्ञापितः ।

उक्तानुक्तार्थेषु प्रमाणं दर्शयन् विशेष्यं विशिनष्टि—**श्रुतिशिरसीति** । शिरश्शब्देन पूर्वोत्तरभागात्मिकायाः श्रुतेर्विशिष्टैकार्थप्रतिपादनेन एकवाक्यत्वलक्षणैकावयवित्वमुत्तरभागस्याभ्यर्हितपुरुषार्थतत्साधनावबोधकतयाभ्यर्हितांशत्वञ्च सूचितम् । विदीप्त इत्यत्रत्येन वैलक्षण्यवाचिविशब्देन भागद्वयेऽपि कर्मब्रह्मणोः प्रतिपत्तौ सत्यामप्येकैकस्मिन्नेकैकस्यैदम्पर्यरूपप्रधानता तत्प्रयुक्तावान्तरार्थभेदनिबन्धना पूर्वोत्तरभागयोस्तद्व्याख्यानरूपकर्मब्रह्ममीमांसयोरवान्तरभेदयोरुपपत्तिश्च सूचिता । श्रुतिशिरसि विदीप्त इति ब्रह्मणो वेदान्तप्रतिपाद्यत्वोक्तिमहिम्ना वेदान्तानां सिद्धार्थव्युत्पत्त्यादिसमर्थनमुखेन ब्रह्मणो वेदान्तप्रतिपाद्यत्वमुखेन ब्रह्ममीमांसारम्भसमर्थनपरजिज्ञासादिसूत्रचतुष्टयार्थस्सूचितः । ब्रह्मत्वविशिष्टवस्तुवाचिना ब्रह्मशब्देन 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' (ब्र० सू० २-२-१०) इति परमाणुकारणवादनिरासपरसूत्रार्थो व्यञ्जितः । परस्मिन्नित्यनेनापरब्रह्मभूतप्रधानकारणवादनिरासपरस्य 'रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च' (ब्र० सू० २-२-१) इति सूत्रस्यार्थो ज्ञापितः । 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' (श्रीसूक्त) इति प्रमाणप्रसिद्धलक्ष्मीपतिरूपदेवताविशेषवाचिना श्रीनिवासशब्देन ब्रह्मरुद्रादिकारणापनोदनपरसर्वव्याख्यानाद्यधिकरणार्थो दर्शितः ।

भक्तिरूपेत्यनेन वाक्यार्थज्ञानमुक्तिहेतुत्वनिरासपरस्य 'आवृत्तिरसकृदुपदेशात्' (ब्र० सू० ४-१-१) इति सूत्रस्यार्थो ज्ञापितः । भक्तिरूपा शेमुषीत्यनेन 'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ० ४-५-६) 'भक्त्या त्वनन्यया शक्यः' (गी० ११ ५४) 'यमेवैष वृणुते तेन लभ्यः' (मु० ३-२-३) इत्यादिप्रमाणप्रसिद्धप्रक्रियया श्रवणादिपरम्परया प्राप्तभक्तिपर्यन्तावस्थापन्नब्रह्मज्ञानहेतु[ता] सिद्धा । श्रीनिवास इति विशेष्यनिर्देशेन सदादिकारणवाक्यस्य नारायणशब्दनिर्दिष्टे देवताविशेषे, भक्तिरूपा शेमुषीत्यनेन ब्रह्मविदाप्नोतीत्यादिवेदनविषयसामान्यशब्दस्य 'भक्त्या लभ्यस्त्वनन्यया' इत्युक्त-

विशेषे च पर्यवसानं छागपशुन्यायसिद्धं सूचितम्। अत्र विनतेत्यनेन स्वनिकर्षावधिकपरोत्कर्षानुसन्धानात्मकनमस्काररूपमङ्गलाचरणं सिद्धम्। भक्तिरूपा भवत्वित्यनेन आशीरूपमङ्गलानुष्ठानसिद्धिः। अखिलेत्यादिसप्तम्यन्तपदजातेन प्रबन्धप्रतिपाद्यवस्तुकीर्तनेन वस्तुनिर्देशरूपमङ्गलाचारस्सिद्ध्यतीति विभावनीयम्॥

द्वितीयश्लोके चिकीर्षितस्वप्रबन्धे तद्व्याख्येये शारीरकशास्त्रे च प्रेक्षावत्प्रवृत्त्यौपयिकमनुबन्धचतुष्टयं दर्शयति—**पाराशर्येति**।

पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसंजीवनीम्।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम्॥

पाराशर्येत्यनेन 'स होवाच व्यासः पाराशर्यः' इति श्रुतिप्रसिद्धा(पति) [आप्तता] सूचिता। आप्तत्वञ्च यथार्थदर्शित्वे सति यथादृष्टार्थवादित्वम्। वचश्शब्देन 'अथातो ब्रह्मजिज्ञासा' इत्यादिः 'अनावृत्तिश्शब्दात्' इत्येवमन्तः सूत्रसन्दर्भोऽभिप्रेतः। तेन च तदर्थो लक्ष्यते। स च सुधात्वेन रूप्यते। मुख्यार्थस्य सूत्रसन्दर्भात्मकवचसस्सुधात्वरूपणसम्भवेऽपि उपनिषद्दुग्धाब्धिमध्योद्धृतत्वादिविशेषणानां सूत्रार्थ एवान्वयस्वारस्यात्तदनुसारेण वचश्शब्दस्यार्थपर्यन्तलक्षणा समाश्रयणीया। शारीरकसूत्रस्य सुधात्वरूपणेन पावनत्वभोग्यत्वयोर्लाभः। उपनिषद्दुग्धाब्धीत्युपनिषदां दुग्धाब्धित्वरूपणादपरिच्छिन्नत्वभोग्यत्वयोर्लाभः। मध्योद्धृतामित्यनेन शारीरकसूत्रार्थजातस्य सारतमांशत्वं लभ्यते।

संसाराग्नीति कर्मबन्धादिरूपसंसृतेरग्नित्वरूपणेनाश्रयनाशकतया कार्त्स्न्येनात्यन्तास्पृश्यत्वादिकं व्यञ्जितम्। स्वर्गादेरपि पतनादिदुःखमिश्रत्वात्। तेन विदीपनं आध्यात्मिकादिविविधतापत्रयम्। तेन व्यपगतोऽत्यन्ताप्राप्तः प्राणः परमात्मा यैस्ते च ते आत्मानश्चेतनाः तेषां सञ्जीवनीं प्राणप्राप्तिकरीं मुक्त्युपयोगिनीमित्यर्थः। शारीरकसूत्रोक्तन्यायावधृततात्पर्योपेतोपनिषदवबोधिततत्त्वहितपुरुषार्थहेतुकोत्तमपुरुषार्थसाधनन्यासोपासनानुष्ठानेन मोक्षप्राप्तिरिति भावः। सुधापक्षेऽग्निदाहे प्राणविश्लेषे सति सुधाघ्राणादिना तत्संश्लेषः पुनर्भव-

तीति ध्येयम्। प्राणशब्दश्च परमात्मनि 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति' (छा० १-११-५) 'प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते' (तै० भृगु० अनु ३.) इत्यादौ प्रसिद्धः। पूर्वाचार्यैः बोधायनटङ्क-द्रमिडगुहदेवनाथयामुनाचार्यप्रभृतिभिरधिकारिविषयोपदेशप्रबन्धप्रणयनादिभिस्स - म्यग्विपरीतार्थनिरसनपूर्वकं समीचीनन्यायैरप्रामाण्यशङ्कानर्हधीस्थीकृताम्। बह्व्यो मतयो बहूनां वा मतयस्तासां परस्परव्याघातेन ताभिस्सह समीचीनार्थस्य व्याघातेन दूरस्थितां अर्वाचीनजनदुरवगमाम्। निजाक्षरैः पाराशर्यवचश्शब्दोक्तसूत्रानु-बन्धिभिरक्षरैः पदप्रत्ययवाक्यात्मकशब्दैः। तानि च सूत्रस्थानि सूत्रव्याख्याना-त्मकतया सूत्रानुबन्धिभाष्याक्षराणि च भवन्ति। ममेत्यनुक्तिश्च भाष्याक्षराणां सूत्रानुरूप्यद्योतनाय सौत्राक्षरसङ्ग्रहाय सुधासम्बन्धिबीजाक्षर्याभाय [भत्वाय] चेति द्रष्टव्यम्। आनीतामाभिमुख्येन प्रापितां ज्ञापितां, बहुमतिव्याघातात् दुरवगमा-र्थजातानां समीचीनन्यायमुखेन व्याघातं परिहृत्य धीगोचरकरणेन व्यक्तीकृतत्वा-दिति भावः। भगवता भाष्यकृता सूत्राक्षराननुगुणान्यपन्यायमूलकानि षण्णव-तिभाष्याणि निराकृत्येदं भाष्यं प्रणीतमिति हि सम्प्रदायः। सुधापक्षे सुधासम्ब-न्धिबीजाक्षरैराहृतामित्यर्थः। सुमनसः समीचीनन्यायविवेचनचतुरमनस्काः। भौमाः भूलोकवासिनः। देवादीनां बोधायनवृत्तिग्रन्था(दयः)[दिभ्यः] शारीर-कार्थावबोधसम्भवेन तेषामेतद्ग्रन्थानपेक्षणेऽपि न वैयर्थ्यमिति भावः। अन्वहं पिबन्तु स्वतो रस्यतातिशयात् 'नयेद्वेदान्तचिन्तया' इति विधेश्चेति भावः।

अत्र भाष्यस्योपनिषदर्थः परमो विषयः। शारीरकसूत्रार्थस्त्ववान्तर-विषयः। परमप्रयोजनं मोक्षः। सूत्रार्थनिर्णयस्त्ववान्तरप्रयोजनम्। मोक्षार्थी परमाधिकारी। सूत्रार्थजिज्ञासुरवान्तराधिकारी। भाष्योपनिषदर्थयोस्सूत्रार्थद्वारा प्रतिपाद्यप्रतिपादकभावः, भाष्यसूत्रार्थयोस्साक्षादित्यनुबन्धचतुष्टयं दर्शितम्। पाराशर्येत्यनेन जन्मोत्कर्षादिगुणकथनेनार्थाद्गुरूपसदनरूपमङ्गलाचारस्सिध्यति॥

अपूर्वभाष्यनिर्माणवैफल्यशङ्कां परिहरन् प्रस्तुतभाष्यस्येतरवैलक्षण्यमाह—

**भगवदिति।**

**भा**॥ भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्सञ्चिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते।

व्या ॥ शब्दतोऽर्थतश्च विस्तीर्णां बोधायनवृत्तिं टङ्कद्रमिडकुहदेवप्रभृतयः सञ्चिक्षिपुः शब्दतोऽर्थतश्च सङ्गृहीतवन्तः । तन्मतानुसारेण तत्सिद्धान्तार्थानामनुसारेण सम्प्रदायपरम्परोपदेशेन तदीयग्रन्थपरिशीलनेन च समीचीनज्ञानेन । 'सृ गतौ' गत्यर्था बुद्ध्यर्थाः । तृतीया च करणे । वाक्यार्थज्ञानस्य व्याख्यानरूपे वाक्ये करणत्वात् । यद्वा 'अध्ययनेन वसती' तिवद्धेतुतृतीया । तत्सिद्धान्तपरिज्ञानार्थं व्याख्यानमिति फलितम् । श्रोतृनिष्ठवाक्यार्थज्ञानस्य वक्तृवाक्यफलत्वात् । प्रथमकल्पे स्वग्रन्थस्य संप्रदायमूलत्वमुक्तं भवति । द्वितीयकल्पे स्वग्रन्थस्य सिद्धान्तार्थज्ञानफलकतया ख्यात्यादिप्रयोजनव्यावृत्तिः ।

**सूत्राक्षराणि व्याख्यास्यन्त** इति । अनेन च स्वव्याख्यानस्य सूत्रतदक्षरोभयानुरूप्यं लभ्यते । ततश्चास्मिन्नर्थे सूत्रं पातयाम इति प्रसिद्धग्रन्थवैलक्षण्यं सूचितम् । व्याख्यास्यन्त इत्यत्र व्याङ्भ्यां विस्तारेषदर्थकाभ्यां अपेक्षितप्रतिपाद्यांशे विस्तारः प्रतिपादकांशे सङ्कोचश्च विवक्षित इति उभयत्र विस्तीर्णात् बोधायनग्रन्थादुभयत्र सङ्कुचितद्रमिडभाष्यादेश्च वैलक्षण्यं सूचितम् । ततश्च समस्तेतरग्रन्थविलक्षणतया नापूर्वभाष्यनिर्माणवैफल्यशङ्का ।

केचित्तु पाराशर्येति द्वितीयश्लोकः सूत्रात्मकशारीरशास्त्रस्यानुबन्धचतुष्टयप्रतिपादनपरः, भगवद्बोधायनेत्यादिग्रन्थोऽपूर्वभाष्यनिर्माणवैफल्यशङ्कासमाधानमुखेन चिकीर्षितग्रन्थस्यानुबन्धचतुष्टयप्रतिपादनपर इत्याहुः ।

## सू० ॥ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

केचिदत्राथशब्दं मङ्गलार्थमाहुः । तदसत् । मङ्गलं जिज्ञासेति मङ्गलरूपतया ब्रह्मजिज्ञासास्तुतिरूपत्वेन सूत्रस्यार्थवादत्वप्रसङ्गात् । मङ्गलमस्तु ब्रह्मजिज्ञासा कर्तव्येत्युक्तावध्याहारवाक्यभेदयोरापातात् । न्यायनिबन्धनात्मकसूत्रेष्वतथाभूतमङ्गलप्रार्थनस्यानुचितत्वात् । मङ्गलकर्तव्यतासमर्थनन्यायपर्यन्ततात्पर्यकल्पनस्य ब्रह्ममीमांसायामसङ्गतत्वाच्च । अथशब्दसन्निधापितार्थगतजिज्ञासाहेतुभावपरातश्शब्दसौरस्यभङ्गप्रसङ्गाच्च ।

अपरे त्वथशब्दमारम्भार्थकमामनन्ति । तदपि न युक्तम् । आरम्भो ब्रह्मजिज्ञासेत्यन्वयवैघट्याद्युक्तदोषप्रसङ्गात् । आरम्भोक्तिं विनैव आरम्भादेवार-

भ्यमाणत्वावगमेन तदुक्तिवैफल्यात् । सिद्धव्युत्पत्त्यादियुक्तितः प्रारम्भयोग्येत्यर्थे चाध्याहृतयोग्यशब्देन निपाताथशब्दार्थस्य आरब्धुं योग्येत्यन्वयबोधायोगात् । न हि 'च योग्ये' त्युक्ते समुच्चेतुं योग्येति प्रतीयते । अथशब्दस्यारम्भणीयतापर्यन्तताश्रयणे च लक्षणाप्रसङ्गात् ।

प्रश्नार्थकतामितरे । तदपि न सुन्दरम् । तदानीं ब्रह्मजिज्ञासा किं कर्तव्येति प्रश्ने प्रतिवचनाभावेन सूत्रस्यापूर्णतापत्तेः । ब्रह्मजिज्ञासा कर्तव्येति प्रतिवचनकल्पने च सौत्रपदावृत्तिप्रसङ्गात् । अथशब्दसन्निधापितार्थगतजिज्ञासाकर्तव्यताहेतुपरातश्शब्दास्वारस्याच्च ।

कात्स्न्यार्थकतां कतिचन कामयन्ते । तदपि कामनामात्रम् । ब्रह्ममीमांसैकदेशकर्तव्यतायाश्शङ्कितत्वाभावेन कात्स्न्यविशेषणवैफल्यात् । पदानां सिद्धार्थविषयव्युत्पत्त्यभावादिना कात्स्न्येनैव ब्रह्मविचारारम्भस्य शङ्कितुमर्हत्वात् अर्धजरतीन्याये बीजाभावात् एकदेशारम्भस्य शङ्कितुमशक्यत्वात् ।

तस्मात्प्रसिद्धिप्राचुर्यादानन्तर्यमेवाथशब्दार्थः । न चानन्तर्यप्रतिसम्बन्धिविशेषालाभान्न तादर्थ्यं युक्तमाश्रयितुमिति वाच्यम् । विद्यास्थानान्तर्गतमीमांसात्वसामान्येनोत्तरभागविचारत्वसामर्थ्येन च ब्रह्मजिज्ञासापदस्मारितपूर्वभागविचारात्मककर्ममीमांसायाः प्रतिसम्बन्धित्वलाभेनोक्तशङ्कानवकाशात् । अथशब्देन प्रसिद्धिप्राचुर्येणानन्तर्योपस्थितौ यत्किञ्चित्प्रतिसम्बन्धि किमस्तीत्यपेक्षायां वृत्तहेतुभावपरतसिलन्तैतच्छब्देन वृत्तसामान्ये समर्पिते वृत्तविशेषापेक्षायामुक्तरीत्या ब्रह्मजिज्ञासापदस्मारितधर्मजिज्ञासाया अतिलङ्घने कारणाभावेन तस्या एवानन्तर्यप्रतिसम्बन्धिविशेषत्वौचित्यात् । न च प्रतिसम्बन्धिविशेषेणैवानन्तर्यबोधपर्यवसाने वृत्तसामान्यप्रतिसम्बन्धिसमर्पणमनपेक्षितमिति वाच्यम् । आकाङ्क्षाक्रमायातसामग्रीक्रमप्रयुक्तसामान्यविशेषबोधद्वयस्य दुस्त्यजत्वात् । अन्यथा सामान्यशास्त्रवैफल्यप्रसङ्गात् । तसिलन्तैतच्छब्दप्रसिद्धिप्राचुर्येण वृत्तसामान्यहेतुभावावगतौ विशेषापेक्षायां ब्रह्मजिज्ञासापदस्मारितधर्मजिज्ञासायास्सामर्थ्येन हेतुत्वावगतौ कार्यभूतब्रह्मजिज्ञासान्विताथशब्दार्थानन्तर्यापेक्षितप्रतिसम्बन्धित्वेनान्वयस्वारस्याच्च ।

कथं कर्मब्रह्मविचारयोर्हेतुहेतुमद्भाव इति चेदित्थम् :—

‘ उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥ (मनु. २-१४०)
कृष्णपक्षे तथाङ्गानि ’ (मनु)

इत्यादिप्रमाणप्रक्रियया वेदविदाचार्योपनीतस्याधीतसाङ्गसशिरस्कवेदस्य साङ्गाध्ययनसिद्धपदपदार्थज्ञानमूलकस्वाध्यायार्थगोचरापातप्रतीतियुक्तस्य तन्निर्णयाय स्वयमेव प्रवर्तमानस्यानादिसम्प्रदायसिद्धाध्ययनक्रमात् अनादिवासनामूलत्रैवर्गिकविषयप्रथमप्रावण्यातिशयाच्च कर्मविचारे प्रथमं प्रवृत्तस्य कर्मविचारसमधिगतकेवलकर्माल्पास्थिरफलनिर्णयोपेतस्यानन्तापातप्रतीतोपरितनभागार्थनिर्णयाय ब्रह्मविचारे प्रवृत्तिर्भवतीति तयोः पौर्वापर्यनियमादवश्यपूर्वभाविनः कर्मविचारस्यैव उक्तरीत्या सन्निहितस्य पूर्वभावित्वं युक्तम् । किञ्च ‘ यज्ञेन दानेने ’ (बृ. ४-४-२२) त्यादिवेदान्तवाक्यार्थनिर्णये यज्ञादेः पदार्थत्वेन तन्निर्णयस्य हेतुतया तस्य च कर्मविचाराधीनतया वेदान्तविचारेण उक्तवेदान्तवाक्यार्थनिर्णये जनयितव्ये पदार्थभूतयज्ञादिनिर्णयार्थं तन्निर्णायककर्मविचारो नियमेनापेक्षित इति पूर्वभावपदार्थभूतयज्ञादिज्ञानहेतुकर्मविचारो नियमेन ब्रह्मविचारपूर्वभावीति तदेव पूर्ववृत्तं वक्तव्यम् ।

एतेनाथशब्दस्यानन्तयार्थिकत्वमभ्युपगच्छन्त एव साधनचतुष्टयस्यानन्तर्यप्रतियोगित्वं वर्णयन्तः शङ्करादयः प्रत्युक्ताः । सौत्रब्रह्मजिज्ञासापदसन्निधापितकर्मजिज्ञासातिलङ्घनेन कथञ्चिदुपस्थितसाधनचतुष्टयस्यानन्तर्यप्रतियोगित्ववर्णनस्य तत्सन्निधिवैधुर्यकृत्यत्वात् । नित्यानित्यवस्तुविवेकादेस्साधनचतुष्टयान्तर्गतस्य कर्मविचाराधीनत्वेनावश्यकतया तदानन्तर्यस्यैव वक्तुमुचितत्वाच्च ।

‘ तदैक्षत बहु स्यां प्रजायेयेति ’ (छा० ६-२-३) ‘ अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ’ (छा० ६-३-२) ‘ सन्मूलास्सोम्येमास्सदायतनास्सत्प्रतिष्ठाः ’ (छा० ६-८-६) ‘ ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा ’ (छा० ६-८-७) ‘ यतो वा इमानि भूतानि जायन्ते ’ (तै-भृगु० १-१) ‘ आत्मन आकाशस्सम्भूतः ’ (तै० २-१) ‘ सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किञ्च ।

तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' (तै० २-६) 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छा० ३-१४-१) 'तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते' (मु० १-१-९)

'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे० ६-८)

'एष आत्मापहतपाप्मा (छा० ८-१-५) दिव्यो देव एको नारायणः' (सुबा० ७) 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' (तै० आरण्य० ११-२०) 'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टः' (श्वे० १-६)

'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे० १-१०)

'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे० १-९)

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥' (श्वे० ४-६)

'यस्य पृथिवी शरीरं यस्यापश्शरीरं (बृ० ३-७-३) यस्याक्षरं शरीरं यस्य मृत्युश्शरीरं एष त आत्मान्तर्याम्यमृतः' (सुबा० ७) 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छा० ८-१-१) 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः' (छा० ८-१-५) 'सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिः' (बृ० ४-४-२२) 'एष सर्वेश्वर एष भूतपाल एष सेतुर्विधृतिरेषां लोकानामसम्भेदाय' (बृ० ४-४-२२)

'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः ॥'
(मु० १-१-६)

'ब्रह्मविदाप्नोति परम्' (तै० २-१) 'आत्मानमेव लोकमुपासीत' (बृ० १-४-१५) 'तमेवैकं जानथात्मानं' (मु० २-२-५) 'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासित्व्यः' (बृ० २-४-५)

2

'भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥' (मु० २-२-८)

'यमेवैष वृणुते तेन लभ्यः' (मु० ३-२-३) 'क्रियावानेष ब्रह्मविदां वरिष्ठः' (मु० ३-१-४)

'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ।'

'सत्त्वात्सञ्जायते ज्ञानं' (गीता० १४-१७) 'मनसा तु विशुद्धेन' 'नाविरतो दुश्चरितात्' (कठोप-२-२३) 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' (छा० ८-१५-१) इत्यादिना सूक्ष्मचिदचिद्विशिष्टं सकलजगन्निमित्तोपादानभूतं तदुपयोगिज्ञानशक्त्यादिपरिपूर्णं सकलजगदन्तरात्मभूतं सकलचेतनाचेतनगतदोषासंस्पर्शं निखिलहेयप्रत्यनीकस्वभावं सत्यसङ्कल्पत्ववशित्वाद्यसङ्ख्येयकल्याणगुणगणं सकलजगन्नियमननिरतं परं ब्रह्म सकलवेदान्तवेद्यं, वेदनञ्च जगत्कारणभूतज्ञानशक्त्याद्युक्तगुणोपेतब्रह्मविषयं ध्यानोपासनादिशब्दवाच्यमनभिसंहितफलनित्यनैमित्तिककर्मनिर्मलीकृतान्तःकरणनिष्पाद्यं अहरहरभ्यासाधेयवैशद्यापरपर्यायदर्शनसमानाकारतापन्नं ध्येयवस्तुरस्यतातिशयाहितप्रीतिरूपतापत्त्या भक्तिशब्दवाच्यं मुक्त्युपायभूतं प्रतिपादितमिति ब्रह्मज्ञानं कर्मापेक्षम् । अतः कर्मज्ञानार्थं कर्मविचारापेक्षणे, टीकोक्तरीत्या पाठक्रमादिना तस्य पूर्वभावावश्यम्भावे पूर्वोक्तरीत्या आनन्तर्यप्रतिसम्बन्धित्वं तस्यैवोचितमित्यन्यत्र विस्तरः । तस्मात् प्रसिद्धिप्राचुर्यात् अतश्शब्दशिरस्कत्वात् ब्रह्मजिज्ञासापदसमभिव्याहाराच्च कर्मविचारानन्तर्यमेवाथशब्दार्थ इति सिद्धम् ॥

अतश्शब्दोऽपि प्रसिद्धिप्राचुर्यादथशब्दपूर्वकत्वात् ब्रह्मजिज्ञासापदसमभिव्याहाराच्च कर्मविचारहेतुत्वमाह । तथाहि—'अतः पर्वतो वह्निमान्, अतोऽयमर्थो निष्पन्नः, अतोऽभिलाषे प्रथमं तथाविधे, 'अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजञ्चकार', अथातो ब्रह्मजिज्ञासा, 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा', अथातश्शेषलक्षणम्, अत एव प्राणः, अत एव च स ब्रह्म, हस्तादयस्तु स्थितेऽतो नैवम्' इत्यादिबहुतरप्रयोगेण प्रकृते वृत्ते प्रत्ययस्य हेतुभावे प्रसिद्धिप्राचुर्यं लोकसिद्धवृत्तसामान्याक्षेपेणाथशब्दस्तदुपष्टम्भकः, ब्रह्मजिज्ञासापदं

कर्मजिज्ञासाक्षेपमुखेन विशेषसमर्पकतया तदुपष्टम्भकमित्यथशब्दब्रह्मजिज्ञासापदोपोद्बलितप्रसिद्धिप्राचुर्येणातश्शब्देन कर्मविचारहेतुत्वमवगम्यते । ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तकर्मविचारस्य ब्रह्मजिज्ञासाहेतुत्वोक्तिबलादेव कार्यभूतब्रह्मजिज्ञासायाः स्वकारणीभूतकर्मविचारानन्तर्यसिद्धावपि आनन्तर्ये व्यवधाननैरपेक्ष्यद्योतनमुखेन कर्मब्रह्मविचारमध्यकाले शास्त्रान्तरानवकाशव्यञ्जनेन शास्त्रान्तरावसेयनित्यानित्यवस्तुविवेकादिपूर्ववृत्तत्वव्युदासार्थतयाथशब्दस्य साफल्यम् । तथा अथशब्देन कर्मविचारानन्तर्योक्त्या कर्मविचारस्य ब्रह्मविचारहेतुत्वसिद्धिसम्भवेऽपि अथशब्दाक्षिप्तस्य कर्मविचारसमधिगतकेवलकर्माल्पास्थिरफलनिर्णयविशिष्टब्रह्मज्ञानानन्तस्थिरफलापातप्रतीतिरूपस्य हेतोर्वक्ष्यमाणसूत्रकाराभिप्रेतपूर्वपक्षयुक्तिमूलासिद्धिशङ्कापरिहारयुक्तिसिद्धहेतुत्वप्रतिपादनपर्यन्तपरतयातश्शब्दस्यापि साफल्यं, पुनः कीर्तनरूपनिगमनस्याबाधितत्वादिपर्यन्तपरतया साफल्यवदिति सुधीभिर्विभावनीयम् ।

पूर्वोक्तविशिष्टापातप्रतीतिरूपहेतोस्सन्प्रत्ययप्रकृतिभूतज्ञाधात्वर्थतर्करूपज्ञानफलभूतविपरीतशङ्कानर्हब्रह्मगोचरवेदान्तवाक्यजन्यशाब्दनिर्णयं प्रति वेदान्तापेक्षिततात्पर्यनिर्णयौपयिकन्यायनिर्णयजनकसूत्रात्मकशारीरकशास्त्रगोचरप्रवृत्तिजननद्वारेण निष्पादकत्वमेव । 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणः' ब्रह्मज्ञानानन्तस्थिरफलापातप्रतीतियुक्तः सांसारिकफलनिर्विण्णः तद्विज्ञानार्थं तस्यापातप्रतीतस्य विलक्षणज्ञानार्थं विपरीतशङ्कानर्हशाब्दनिर्णयार्थं शारीरकशास्त्रे तन्निर्णयौपयिकतात्पर्यनिर्णायकयुक्तिज्ञानसाधने स्वयमेव प्रवर्तत इति महानयं घण्टापथः ॥ ५।१२।६४

ब्रह्मजिज्ञासेत्यत्र प्रथमासमासस्यार्धपिप्पल्यादौ नियमितत्वादनवकाशः । 'कर्मणि द्वितीया' इति विहितद्वितीयायाः कृद्योगषष्ठ्या बाधितत्वेन न द्वितीयासमासस्याप्यवकाशः । शङ्कुलाखण्ड इतिवत्तृतीयासमाससम्भवेऽपि ब्रह्मणो विषयत्वप्रयोजनत्वयोरलाभेन विषयप्रयोजनपरसूत्रे तस्यापरिग्राह्यत्वात्, ब्रह्मणे जिज्ञासेति चतुर्थीसमासस्य प्रकृतिविकारभाव एव नियमितत्वात्, निरादीनामेव क्रान्ताद्यर्थे पञ्चमीसमासविधानाद्विषयत्वाद्यलाभाच्चात्र तदनुपपत्ते., शेषषष्ठीसमासस्य विलम्बतः कर्मत्वादिबोधकतयात्रानादरणीयत्वात, वक्ष्यमाणनीत्या झटिति

तद्बोधकषष्ठीसमाससम्भवे तत्त्यागायोगात्, सप्तमीति योगविभागात्समासाश्रयणे विषयत्वलाभेऽपि प्रयोजनत्वालाभान्न तत्स्वीकारो युक्त इति समासान्तरानुपपत्तिं मन्वानेन भगवता भाष्यकृता भाषितम्—

"ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्मण इति कर्मणि षष्ठी। 'कर्तृकर्मणोः कृती'ति विशेषविधानात्। न च 'प्रतिपदविधाना षष्ठी न समस्यत' इति समासनिषेधः शङ्कनीयः। 'कृद्योगविहिता षष्ठी समस्यते' इति प्रतिप्रसवसम्भवात्" इति॥

'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म'

'बृहत्वाद्बृंहणत्वाच्च गुणयोगाच्च शार्ङ्गिणि।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने॥'

इति प्रमाणप्रसिद्धयोगरूढ्या 'मुख्यामुख्ययोर्मुख्ये संप्रत्यय' इति न्यायेन योगार्थपौष्कल्येन च स्वभावतो निरस्तनिखिलदोषानवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽत्र ब्रह्मशब्दार्थः। निखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणज्ञानानन्दस्वरूपस्य कल्याणगुणपरिपूर्णस्य परब्रह्मण एवाध्यात्मिकादिसांसारिकतापत्रयाभितप्तचेतनजिज्ञासौचित्येन च स एवात्र ब्रह्मशब्दार्थो न प्रधानादिः। ब्रह्मशब्दस्यौपचारिकत्वप्रसङ्गात् पूर्वोक्तार्थस्वभावविरोधाच्च।

ज्ञातुमिच्छा जिज्ञासा। सनो धात्वर्थगोचरेच्छावाचित्वेन प्रकृतिप्रत्ययात्मकावयवशक्त्यैव प्रयोगप्रत्ययोपपत्तौ 'प्रोक्षणीन्यायेन' समुदायशक्तिकल्पनानुपपत्तेः। क्वचिदवयवार्थसम्बन्धिनि प्रयोगेऽपि तस्य लक्षणया निर्वाह्यत्वेन शक्त्यसिद्धेः।

न चैवं ब्रह्मजिज्ञासायां तज्ज्ञानेच्छारूपायां अथातश्शब्दार्थकर्मविचारानन्तर्यतद्धेतुत्वयोरनन्वयः, विषयसौन्दर्यायत्तत्वादिच्छाया इति वाच्यम्। अथायमसिना जिघांसतीत्यत्राथशब्दार्थानन्तर्यतृतीयार्थहेतुत्वयोर्धात्वर्थहननान्वयवदत्रापि ज्ञाधात्वर्थज्ञानेऽन्वयसम्भवात्।

न च ब्रह्मजिज्ञासा कर्तव्येति विध्यनन्वयः, पुरुषव्यापारपरतन्त्रत्वाभावादिच्छाया इति वाच्यम्। 'स्वर्गी जात' इत्यादौ सविशेषणे हीति न्यायेन जननस्य विशेषणभूतस्वर्गान्वयवत् 'दध्ना जुहोती'त्यादौ दधिविशिष्टहोमे वाक्यान्तरप्राप्तविशेष्यभूतहोमान्वयमलभमानस्य विधेरप्राप्तविशेषणीभूतदध्यन्वयवच्च सन्नर्थविशेषणीभूतज्ञाधात्वर्थज्ञाने विध्यन्वयोपपत्तेः। सन्प्रत्ययस्यान्यत्र स्वार्थविशेष्यकत्वेऽपि 'अश्वेन जिगमिषति, असिना जिघांसति, दण्डेन निनीषती'त्यादिबहुतरप्रयोगानुरोधेन हेतुत्ववाचिविभक्तिसमभिव्याहृतसन्प्रत्ययप्रातिपदिकस्य स्वार्थविशेष्यबोधन[विशेष्यकबोधजनकत्व]व्युत्पत्त्या विशेष्यभूते ज्ञाधात्वर्थे विध्यन्वयसम्भवाच्च। इच्छाया इष्यमाणसाध्यकत्वेन तत्प्रधानकत्वेनेच्छायाश्शाब्दप्राधान्येऽप्यार्थप्राधान्यप्राबल्येन तत्र विध्यन्वयोपपत्तेश्च।

न च कर्मविचारसमधिगतकेवलकर्माल्पस्थिरफलनिर्णयोपेतब्रह्मज्ञानानन्तस्थिरफलापातप्रतीतिपूर्वके विचारानुगृहीतवेदान्तवाक्यजन्ये ब्रह्मविषयशाब्दप्रमितिरूपे परोक्ततत्त्वमस्यादिवाक्यजन्यवाक्यार्थप्रमितिवत् पुरुषव्यापारपरतन्त्रत्वाभावेनाविधेयतया कथं वा विध्यन्वयसम्भव इति वाच्यम्। फलभूतोक्तब्रह्मज्ञानस्यापि इच्छावदविधेयत्वेन विशेषापेक्षायां ज्ञानसामान्यवाचिनस्सन्नन्तधातोः तात्पर्यतो विधानसमुचितविचारात्मकज्ञानपर्यवसानस्य न्याय्यतया तत्र विध्यन्वयसम्भवात्।

न च विचारे रागतः प्रवृत्तेरङ्गीकारात्कथमप्रवृत्तप्रवर्तनरूपविधिसम्भव इति वाच्यम्। तथाप्यज्ञातज्ञापनरूपविधिसम्भवात्।

न चात्र किमज्ञातं ज्ञापनीयम् समीहितसाधनत्वाज्ञाने रागतः प्रवृत्त्यनुपपत्तेरिति वाच्यम्। वेदान्तवाक्यजन्यापातप्रतीतौ तन्निर्णयेच्छायां निर्णयसाधनत्वेनावगते विचारात्मकज्ञानेऽपीच्छया प्रवृत्तस्य एतत्पूर्वपक्षानुसन्धानेन 'आस्माकीना वेदान्तवाक्यजन्या विशिष्टप्रतीतिर्भ्रम' इत्यापातप्रतीतौ भ्रमत्वज्ञाने तन्निर्णयहेतुविचारानारम्भणीयत्वबुद्धौ न्यायेन तदारम्भणीयताज्ञापनेन अज्ञातज्ञापनसम्भवात्। पूर्वपक्षानुसन्धाने विचारप्रवृत्त्यपेक्षणेऽप्यापातप्रतीतिमूलकप्रवृत्तौ पूर्वपक्षानुसन्धानाद्यनपेक्षणेनान्योन्याश्रयानवकाशाच्च। तटस्थस्य कार्यव्युत्पत्तिविमर्शनात् सिद्धार्थविषयविचाराशक्यत्वशङ्कायां जातायां सिद्धान्तन्यायेनाज्ञातस्य

सिद्धार्थविषयविचारशक्यत्वस्य ज्ञापनसम्भवाच्चान्योन्याश्रयाप्रसक्तेः। सिद्धव्युत्पत्तिनिबन्धनविचारशक्यत्वज्ञानमूलकविचारप्रवृत्तेः सिद्धव्युत्पत्त्यभावमूलकविचाराशक्यत्वबुद्धेश्च भिन्नपुरुषनिष्ठत्वेन शक्यत्वशङ्कायाः विचारप्रवृत्त्यनपेक्षणात्। न हि सौत्रन्यायव्युत्पादनं सर्वं शास्त्राधिकृतं प्रत्येवेति नियमस्सम्भवति। मुमुक्षोः शास्त्राधिकृतस्य बौद्धादिसिद्धान्तश्रद्धानिबन्धनशङ्कानवकाशेन तं प्रति तन्मतनिराकरणाय सूत्रन्यायाव्युत्पादनप्रसङ्गात्। तटस्थशङ्कानिरासमुखेन स्वमतप्रतिष्ठापनार्थत्वात्। सन्प्रत्ययेन ज्ञानस्येष्यमाणत्वमुखेन तद्विषयस्य ब्रह्मणः तत्प्रयोजकनिखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणापरिमितगुणगणापरिच्छिन्नानन्दस्वरूपद्योतनेन वेदान्तानां पूर्वपक्ष्यभिमतकर्मशेषभूतकर्तृस्वरूपपरत्वनिरासकतया तत्साफल्यम्। तदेवं, दृष्टादृष्टसकलप्रतिबन्धकरहितस्य समीचीनकर्मविचारसमधिगतकेवलकर्मल्पास्थिरफलनिर्णयविशिष्टब्रह्मज्ञानान्तस्थिरफलापातप्रतीतिमतः तन्निर्णयसाधनं न्यायानुसन्धानरूपविचारपदाभिधेयं ज्ञानं साधयितुं शक्यमिति न्यायानुसन्धानसाधनं सूत्रसमुदायात्मकं शास्त्रमारम्भणीयम्, विषयप्रयोजनाधिकारिसम्बन्धलाभादिति सूत्राभिप्रेतोऽर्थः।

तत्र पूर्वपक्षी मन्यते—शब्दानां बोधकत्वशक्तेर्मध्यमोत्तमव्यवहारैकग्राह्यतया प्रथमं कार्यरूपार्थ एव बोधकत्वशक्त्यवधारणात् प्रथमगृहीतकार्यशक्त्यनुरोधेन तदुपजीविषु 'पुत्रस्ते जात' इत्यादिषु पाश्चात्यप्रयोगेषु कार्यवाचिपदाध्याहारात् कार्य एव सर्वशब्दानां व्युत्पन्नतया वेदान्तवाक्यानामपि कार्यबोधकत्वावश्यम्भावे सति, उपासनकार्यपरतायां दृष्टिविधिवत् ध्येयसत्तानवश्यम्भावेन प्रामाण्यासिद्ध्या कर्मविधिशेषतयैव प्रामाण्यावश्यम्भावे कर्मसु कर्तृभूतजीवस्वरूपज्ञानद्वारा कर्मविध्येकवाक्यत्वे कर्मविचारविषयतया तेनैव न्यायेन निर्णीतार्थतया निर्णायकन्यायान्तरानपेक्षणेन तन्निबन्धनरूपं शास्त्रमनारम्भणीयं विषयाद्यलाभादिति।

सिद्धान्तस्तु—किं सर्वशब्दानां कार्ये स्वारिका शक्तिः? किं वाऽऽनुभाविकी? नाद्यः; लिङादिर्लभ्येत [दिलभ्ये तत्र] तत्र पदान्तराणां शक्त्यनवकाशात्। सर्वशब्दानां लिङादितुल्यशीलतया सर्वकार्यबोधसम्भवेन सिद्धार्थे शब्दानामप्रामाण्यासिद्धेश्च। सर्वशब्दानां नानार्थत्वापाताच्च। न द्वितीयः;

लिङादिसमभिव्याहारलभ्यतया कार्यबोधस्य तत्र तच्छक्तेरप्रामाणिकत्वात्। अन्यथा कारकेऽपि सर्वशब्दानां शक्तिप्रसङ्गात्। कार्य इव कारकेऽपि वृद्धव्यवहारस्य तुल्यत्वात्। विभक्तिसमभिव्याहारलभ्यत्वेन तत्र शक्त्यभावे कार्येऽपि लिङादिलभ्यतया शक्त्यनवकाशात्।

किञ्च क्रियाकार्ये वा? क्रियातिरिक्ते नियोगापरपर्यायापूर्वे वा? नाद्यः—अपसिद्धान्तादपूर्वासिद्धिप्रसङ्गाच्च। नान्त्यः—तस्यालौकिकत्वेन लोकव्यवहाराविषयत्वेन ततस्तत्र शक्तिग्रहस्य दुश्शकत्वात्।

ननु वृद्धव्यवहारेण लोकोपक्रान्ता कार्यव्युत्पत्तिर्वेदे यागाद्याशुविनाशिधात्वर्थेष्विष्टसाधनत्वरूपकार्यान्वयितावच्छेदकत्वरूपयोग्यताज्ञानविरहेण लोकव्युत्पन्नकार्यान्वयानुपपत्तौ अप्राप्तार्थकविधौ प्रमाणान्तरप्राप्तोपपन्नार्थविषयलक्षणानवकाशेन स्वर्गार्थस्थायिव्यापारे पर्यवसानमाकांक्षन्ती फलव्यावृत्तं यागपाकादिक्रियानुगतं कार्यरूपं प्रवृत्तिनिमित्तमलभमाना नान्तरीयकदुःखसाधनधात्वर्थयागादिव्यावृत्तं स्वतस्सुन्दरस्वर्गादिफलव्यावृत्तञ्च सुखैकसाधनत्वप्रयुक्तोद्देश्यतायां विशिष्य कस्यचिदुत्कर्षरूपज्ञानविशेषस्यान्यस्य वा निर्वक्तुमशक्यतया क्रियाफलव्यावृत्तमुद्देश्यतावच्छेदकं सुखैकसाधनत्वमेवेति तेन रूपेण शक्यत्वापत्तौ कार्यत्वेन कार्यज्ञानं प्रवर्तकं कार्यान्वयितावच्छेदकञ्चेष्टसाधनत्वमिति रीत्यापूर्वसिद्ध्युपपादनव्याघातापातात्। सुखैकसाधनत्वस्य दुःखासाधनत्वे सति सुखसाधनत्वरूपतया दुःखसाधनत्वज्ञानस्य प्रवृत्तिप्रतिबन्धकतया तदभावस्य कारणत्वेऽपि दुःखासाधनत्वज्ञानस्य कारणत्वे प्रमाणाभावेन तद्घटितसुखैकसाधनत्वज्ञानस्य प्रवृत्तावकारणतया तस्य विध्यर्थत्वायोगाच्च। प्रवर्तकज्ञानविषयस्यैव विध्यर्थत्वमिति सर्वसंमतत्वात्। औपादानिकत्वोद्देश्यत्वरूपप्रकृतिविषयताव्यतिरिक्तसाध्याख्यविषयताशालिपाकादिविषयककृतिसाध्यताज्ञानस्यैव चिकीर्षाद्वारा प्रवर्तकत्वेन त्वदुक्तकृत्युद्देश्यत्वरूपकार्यत्वप्रकारकज्ञानस्य चिकीर्षाद्वारा प्रवृत्त्यहेतुत्वेन तथाविधकार्ये विधिशक्तेरप्रामाणिकत्वाच्च। तस्मान्न कार्यं विध्यर्थः।

किञ्च सिद्धार्थपरपुराणकाव्यादिप्रबन्धेभ्योऽनुभूयमानसंसर्गानुभवतत्कार्यहर्षविषादादेरपलापोऽतिसाहस एव। न चासंसर्गाग्रहमात्रेण तदुपपत्तिः।

सर्वत्र तथात्वापत्त्या शब्दप्रामाण्यमात्रभङ्गापातात् । लाघवादैकरूप्याच्च संसर्गग्रहनिबन्धनत्वस्यैवोचितत्वात् ॥

किञ्च मध्यमोत्तमव्यवहारमन्तरेणापि शब्दानां बोधकत्वशक्तिं निश्चिन्वन्ति । बाला हि मातापितृप्रभृतिभिः शब्दार्थसम्बन्धबोधनाय प्रवृत्तैः अम्बातातमातुलादीन् शशिपशुपक्ष्यादींश्चाङ्गुल्या निर्दिश्य एनमवेहीदमवधारयेति तत्तच्छब्दैस्तत्तदर्थेषु बहुशश्शिक्षिताः शनैश्शनैः तत्तदर्थेषु स्वात्मनां बोधोत्पत्तिमनुभवन्तो धूमवह्न्योरिव बोध्यबोधकभावनिर्वाहकसम्बन्धमाकांक्षमाणास्तादृशानुगतानतिप्रसक्तसम्बन्धान्तरमलभमानाः कार्यगोचरव्यवहारस्थले शब्दार्थयोर्बोधकत्वशक्तेर्दर्शनाच्च बोधकत्वशक्तिरूपसम्बन्धमवधार्य परेषां तत्तदर्थबोधनाय तत्तदर्थावबोधि वाक्यजातं सिद्धार्थविषयमिह नगः, तव पिता ज्ञानशक्त्यादिपूर्णश्चतुरङ्गबलपरिवृतो महासम्पन्नो वर्तत इत्यादि वाक्यजातं प्रयुञ्जते । श्रोतारश्चार्थं बुद्ध्वा पुत्रादयः प्रीता भवन्ति । तस्मात्सिद्धेऽपि शब्दानां बोधकत्वशक्तिरस्त्येव । ततश्च 'सदेव सोम्येदमग्र आसीत्तदैक्षत' (छा० ६-२-१) 'तत्तेजोऽसृजत' (छा० ६-२-३) 'सन्मूलास्सोम्येमाः' (छा० ६-८ ४) ऐतदात्म्यमिदं सर्वं' (छा० ६-८-७) 'सत्यं ज्ञानमनन्तम्', (तै० २-१) 'एष आत्मापहतपाप्मा' 'न नश्यति स आत्मा अपहतपाप्मा', 'अजामेकां लोहितशुक्लकृष्णां',(श्वे० ४-५) 'ब्रह्मविदाप्नोति' (तै० २-१) 'वेदाहमेतम्', (तै० आरण्य ३-१२-१३) 'तमेवं विद्वानमृत इह भवति' (तै० आरण्य) इत्यादिवेदान्तवाक्यैस्सिद्धचेतनाचेतनेश्वरविषयापातप्रतीतौ सिद्धान्तानुसन्धानेन भूमत्वभ्रमनिवृत्तौ तन्निर्णयापेक्षायां तन्निर्णायकन्यायानुसन्धानेन शक्यत्वान्न्यायनिबन्धनात्मकं शारीरकं शास्त्रमारम्भणीयम् । विषयाधिकारिसम्बन्धलाभात् ॥

कार्यपराणामेव प्रामाण्येऽपि वेदान्तानां ब्रह्मस्वरूपरूपगुणविभूत्यादौ प्रामाण्यमक्षतमेव । 'ओमित्यात्मानं ध्यायथ' (मु० २-२-६) 'आत्मानमेव लोकमुपासीत', (बृ० १-४-१५) 'निदिध्यासितव्यः', इत्यादिविधिविषयस्य ध्यानस्य ध्येयैकनिरूपणीयतया ध्येयापेक्षायां सन्निहितात्मन एवान्वये तस्य तत्प्रकाराकाङ्क्षायां तत्तद्वाक्योपस्थापितस्वरूपरूपगुणविभूत्यादेर्विधिवशीकृतत्वेन दुःखसम्भिन्नदेशविशेषरूपस्वर्गादिवत् रात्रिसत्रप्रतिष्ठावच्च कार्योपयोगि-

तयैव सिद्धेः । न च दृष्टिविधिवत् ध्यानविधेर्ध्येयसत्यतानपेक्षणात् नार्थसत्ता सिध्यतीति वाच्यम् । ध्येयसत्यतां विना ध्यानस्य मुक्त्युपायत्वानुपपत्तेः । मुक्तेस्तत्त्वज्ञानसाध्यत्वस्य सर्वसंमतत्वात् । न च निर्विशेषमेव तत्त्वम् । तज्ज्ञानमेव मुक्त्युपाय इति युक्तम् । तथापि सिद्धे निर्विशेषे वेदान्तानां प्रामाण्यानपायेन विचारारम्भणीयत्वसिद्धेः भाष्याद्युदाहृतश्रुतिस्मृतिसूत्रस्वारस्येन सविशेषब्रह्मैव तत्त्वं तदुपासनमेव मोक्षोपाय इति टीकादावुपदर्शितत्वाच्च । तस्मात् ब्रह्ममीमांसायाः अपवर्गसाधनीभूतब्रह्मनिर्णयजनकवेदान्तभागतात्पर्यनिर्णायकन्यायकलापः प्रतिपाद्यार्थः, तन्निर्णयार्थी चाधिकारी, न्यायनिर्णयश्च प्रयोजनमिति विषयप्रयोजनाधिकारिसम्बन्धरूपानुबन्धचतुष्टयलाभेन वेदान्तभागार्थनिर्णयौपयिकतात्पर्यनिर्णायकन्यायप्रतिपादकं शारीरकं शास्त्रमारम्भणीयम् ।

अत्रैवं सङ्गतिरनुसन्धेया । शास्त्रकाण्डद्विकाध्यायपादपेटिकानन्तराधिकरणसूत्रभेदादष्टविधासु वेदार्थनिर्णयौपयिकतात्पर्यनिर्णायकन्यायनिबन्धनरूपत्वान्मीमांसाशास्त्रसङ्गतिः । वेदान्तार्थनिर्णयौपयिकतात्पर्यनिर्णायकन्यायप्रतिपादकतया ब्रह्मकाण्डसङ्गतिः । सिद्धविषयवेदार्थनिर्णायकन्यायप्रतिपादकतया सिद्धविषयपूर्वद्विके सङ्गतिः । सिद्धविषयवेदान्तवाक्यानां ब्रह्मणि प्रतिपादकत्वरूपसमन्वयपर्यवसानात् प्रथमे समन्वयाध्याये सङ्गतिः । वेदान्तवाक्यानां ब्रह्मणि प्रतिपादकत्वसमन्वयप्रतीतिद्वारा चेतनाचेतनविलक्षणजगत्कारणवस्तुसिद्ध्या तदयोगव्यवच्छेदपर्यवसानात् आद्यपादे सङ्गतिः । वेदान्तशास्त्रारम्भणीयत्वसाधकन्यायप्रतिपादकतया शास्त्रारम्भपेटिकायां सङ्गतिः । ब्रह्मविषयप्रतिपत्तिसम्भवसाधकन्यायप्रतिपादकतया पेटिकापूर्वभागे सङ्गतिः । 'अन्ते हरौ तद्दर्शनात् स विष्णुराह हि तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति देवताकाण्डान्तिमाधिकरणप्रस्तुतसर्वदेवतान्तर्यामिरूपविष्णुपरवेदान्तविषयशारीरकशास्त्रारम्भसमर्थनन्यायप्रतिपादकतयानन्तराधिकरणेन प्रसङ्गसङ्गतिः । द्विरुक्त्या प्राधान्येन प्रतिपन्नब्रह्मपदार्थस्य जिज्ञास्यत्वप्रतिपादनात्सौत्री सङ्गतिः ॥

**॥ इति जिज्ञासाधिकरणम् ॥**

---

## (२) ॥ अथ जन्माद्यधिकरणम् ॥

## सू०॥ जन्माद्यस्य यतः ॥ २ ॥

जन्माद्यधिकरणे—'यतो वा इमानि भूतानि' (तै० ३-१) इत्यादिवाक्यावगतजन्मस्थितिलयास्तत्कारणत्वानीव ब्रह्म लक्षयितुं शक्नुवन्ति नवेति संशय्य, तेषां विशेषणत्वेन लक्षकत्वे विशेषणानां स्वस्वाश्रयभेदकत्वस्वाभाव्येन स्वाश्रयभूतब्रह्मनानात्वापातात्, श्यामत्वयुवत्वादीनामाश्रयैक्यग्राहकप्रत्यक्षबाधेन भेदकत्वाभावेऽपि प्रमाणान्तरागोचरे ब्रह्मणि बाधकानवतारात्, 'खण्डो मुण्डो गौ' रित्यत्र गोशब्दैक्येऽपि खण्डत्वादिना भेदप्रतीतिवदिह ब्रह्मशब्दैक्येऽपि जन्मादिविशेषणभेदेन ब्रह्मव्यक्तिभेदस्य दुर्वारत्वात्, खण्डत्वादीनां विरुद्धत्ववज्जायन्त इत्यादिवर्तमाननिर्देशावगतैककालीनानां भूतनिष्ठजन्मादीनां विरोधात् स्वाश्रयापृथक्सिद्धप्रकारितासम्बन्धेन एकधर्मिनिवेशासम्भवेन ब्रह्मव्यक्तिनानात्वस्यानिवार्यत्वात तादृशजन्मादिकारणत्वान्यपि विरुद्धानीति ब्रह्मनानात्वापत्त्या तेषामपि ब्रह्मलक्षणत्वासम्भवात्, 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इति न्यायेनानुन्मत्तस्य बुद्धिमतः पुंसः स्रष्टृत्वरक्षकत्वसंहर्तृत्वानां विरोधाच्च तेषां विशेषणत्वेन लक्षकत्वस्यासम्भवात्; उपलक्षणत्वस्य उपलक्ष्यातिरिक्तोपलक्षणीयगतधर्मान्तरनियतत्वेन प्रकृते तथाविधाकाराभावेन तेषामुपलक्षणविधयापि ब्रह्मलक्षणत्वासम्भवात्, वाक्यान्तरेणाऽऽकारान्तरप्रतीतावुच्यमानायां तत्राप्युक्तरीत्या विशेषणत्वपक्षदूषणेनोपलक्षणत्वस्याश्रयणीयतया तत्राप्याकारप्रतिपत्तये वाक्यान्तराश्रयणे तत्रापि तथेत्यनवस्थापातादेतद्वाक्याश्रयणे परस्पराश्रयप्रसङ्गाच्च शब्दानां सिद्धे व्युत्पत्तावपि व्यावृत्तब्रह्मविषयापातप्रतीत्यसम्भवनिबन्धना[धि]कारिदौर्लभ्यादिना शारीरकं शास्त्रमनारम्भणीयमिति प्राप्ते—

सिद्धान्त उच्यते। जन्मादीनामुपलक्षणतयैव ब्रह्मलक्षणत्वम्। न चोपलक्षणोपलक्ष्यातिरिक्ताकाराप्रतिपत्तिदोषः। यतो वेत्यादिवाक्यस्य यद्वृत्तयोगेनानुवादतया पुरोवादवाक्ये 'सदेव' (छा० ६-२-१) इत्यादाववगतकारणत्वाक्षिप्तसर्वज्ञत्वादेराकारान्तर[स्य]प्रतिपन्नस्य सत्त्वात्। सर्वज्ञत्वसर्वशक्तत्वादेरविरोधेन विशेषणत्वमेवेति न तदुपलक्षणत्वप्रयुक्तान्योन्याश्रयणादिदोषगन्धोऽपि।

तथा जन्मादीनां विशेषणतया ब्रह्मलक्षणत्वमुपपद्यते । न च विशेषणानां स्वाश्रयभेदकतया ब्रह्मनानात्वापत्तिदोषः । भिन्नाश्रयत्वेन निर्धारितानामेव तथात्वेऽपि एकाश्रयत्वेनावगतानां श्यामत्वादीनामिव सदादिपुरोवादवाक्ये सन्मूला इत्यादिना सदेकाश्रयत्वेनावगतस्थित्यादीनामाश्रयभेदकत्वाप्रसक्त्या ब्रह्म-नानात्वानवकाशात् । न चैककालीनानां तेषां विरोधश्शङ्क्यः ।

' निद्राति स्नाति भुङ्क्ते चलति कचभरं शोधयत्यन्तरास्ते '

इत्यादावेकावान्तरस्थूलोपाधिप्रयुक्तैकस्थूलकालमादाय निद्राद्यनेकक्रिया-वर्तमानत्ववदत्रापि जन्मादीनामेकस्थूलकालमादायैकधर्मिणि विरोधानवकाशात् । सस्यादिविषये कर्षकादेरेकस्यैव बुद्धिमतस्सस्याद्युत्पादकत्वरक्षकत्वलावकत्ववत् पित्रादीनां हितैषिणां पुत्रादिविषये रोगापराधादिभूयस्त्वे सति निगलबन्धक-त्वादिशिक्षकत्ववत् सार्वभौमस्योद्यानादिविषये तत्तत्कालानुगुण्येनोत्पादकत्वादिवच्च भगवतोऽपि स्रष्टृत्वादिसम्भवात् । तस्माज्जन्मादीनामविरुद्धतया विरुद्धानामेव भेदकत्वात् विशेषणत्वेन चेतनाचेतनव्यावर्तकतया वेदान्तानां व्यावृत्तब्रह्मस्वरूप-विषयापातप्रतीतिसम्भवेनाधिकारिलाभात् शारीरकं शास्त्रमारम्भणीयम् । विशेषण-त्वोपलक्षणत्वनिर्वचनतत्फलभेदादिकं **टीकाभावप्रकाशिकापाराशर्यविजयादौ** द्रष्टव्यम् ।

**॥ इति जन्माद्यधिकरणम् ॥**

---

## (३) ॥ अथ शास्त्रयोनित्वाधिकरणम् ॥

## सू०॥ शास्त्रयोनित्वात् ॥ ३ ॥

शास्त्रयोनित्वाधिकरणे — महीमहीधरमहीरुहादिकमदृष्टद्वारकजन्यकृत्य-जन्यम् ; जन्यं अदृष्टप्रागभावव्याप्यप्रागभावप्रतियोग्युपादानगोचरज्ञानेच्छा-कृतिमज्जन्यं भावत्वे सति प्रागभावप्रतियोगित्वात् घटवदित्यनुमानेन सावयवत्वा-नुमितप्रागभावप्रतियोगित्वरूपकार्यत्वलिङ्गकेन घटादाववच्छेदकैकत्वलाघवावधृत-कार्यत्वकर्तृत्वावच्छिन्नकार्यकारणभावाख्यानुकूलतर्कसहकृतेन क्लृप्तत्वलाघवादपि

बलवदेकत्वलाघवसहकृतेन जीवातिरिक्तकर्तृसिद्धौ लाघवेन कृत्यादेरपि नित्यत्वैकत्वसिद्धौ जन्यकृतिरूपकार्याभावेन तत्कारणीभूतशरीरेन्द्रियप्राणाद्यभावसिद्धौ तन्मूलकजरामृत्युशोकजिघत्साभावे च सिद्धे कर्मनिबन्धनप्रतिहत्यभावेन सत्यसङ्कल्पत्वे सत्यकामत्वे च सिद्धे कर्तृत्वेनोपादानत्वाभावे सिद्धे वात्सल्यादेः पितृपुत्रस्वामिभृत्यादिशरीरसम्बन्धनिबन्धनतया शरीराद्यभावादेव वात्सल्याद्यभावे सिद्धे शक्तेः कायिकधर्मतया तदभावादेव तदभावे च सिद्धे वियदादेर्निरवयवत्वेनानुत्पन्नत्वे च सिद्धे केषाञ्चिद्वेदान्तवाक्यानां प्राप्तार्थकतया केषाञ्चिदनुमानबाधितार्थकतया च न त्वदभिमते ब्रह्मणि प्रामाण्यं सम्भवति । 'यतो वा इमानि' (तै० ३-१) इत्यत्र यद्वृत्तयोगेन जगत्कारणमनूद्य निरतिशयब्रह्मत्वं विधीयत इत्यङ्गीकारेण पुरोवादापेक्षायां 'सदेव' (छा० ६-२-१) 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छा० ३-१४-१) 'ब्रह्म वा' (बृ० १-४-१०) 'आत्मा वा' (ऐत० १-१) 'एको ह वा' (महो० १-१) इत्यादिवाक्यानामेवकारवैकारादिप्रतिहतविधिशक्तिकानां पुरोवादत्वासम्भवादनुमानस्यैव प्रापकप्रमाणतया धर्मिग्राहकानुमानस्योपजीव्यतयाऽस्मदुक्तधर्मसाधकबाधकानुमानानामुपजीव्यजातीयतया प्राबल्येन श्रुत्या बाधायोगात्। तथा च स्वरूपरूपगुणविभूतिचेष्टितादिप्रतिपादकवेदान्तानां केषाञ्चिदनुमानप्राप्तार्थकतया केषाञ्चिदनुमानबाधितार्थकतया च प्रामाण्यासम्भवात् वेदान्तविचारात्मकं शास्त्रमनारम्भणीयमिति प्राप्ते—

क्लृप्तत्वलाघवादेकत्वलाघवप्राबल्यवादस्य केवलमन्त्रपाठत्वात् प्रत्युत शीघ्रतरबुद्ध्यवरोहणौपयिकतया प्रमाणप्रसिद्धिपर्यवसायिक्लृप्तत्वलाघवस्यैव प्राबल्यौचित्यात् धर्मिकल्पनातो धर्मकल्पनालाघवाच्च उपचितपुण्यविशेषायत्तसृष्ट्यौपयिकज्ञानादिमच्चेतनविशेषेष्वनुमानपर्यवसानेनार्थान्तरदुष्टत्वात् घटादिकार्येष्व-(घटकत्वादिजात्यन्त)? वच्छेदकलाघवमूलकतया नानाकार्यकारणस्यैव प्रामाणिकतया तुल्यशरीरतायामेव सामान्यविशेषन्यायावतारेण कर्तृत्वकार्यत्वाभ्यां कार्यकारणभावासम्भवेन उक्तानुमानस्याप्रयोजकत्वात्, क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात् प्रसिद्धकर्तृकभिन्नत्वात् गगनादिवदित्यनेन सत्प्रतिपक्षत्वात् कार्योपयोगिज्ञानकृत्यादिवत् तदुपयोगिसत्त्वरजस्तमोगुणादेरपि साधनापत्त्या सिषाधयिषितविपरीतार्थसाधकत्वेन विरुद्धत्वाच्चानुमानतः कारणवस्तुनो न प्राप्तिः । किञ्चाभिन्ननिमित्तोपादानत्वस्य चिदचिद्वस्तुशरीरकत्वस्य सृष्टिस्थिति-

संहारकर्तृत्वस्यापरिच्छिन्नज्ञानानन्दस्वरूपस्यास्मदभिमतवेदान्तवेद्याकारस्य नानुमानतः कथञ्चिदपि प्राप्तिस्सम्भवति ।

न च केषाञ्चिद्धर्माणामनुमानतो बाध उक्त इति वाच्यम् । धर्मिग्राहकानुमाननिरासेन त्वदुक्तधर्मबाधकानुमानानामुपजीव्यजातीयत्वनिबन्धनप्राबल्यानवकाशेन तेषामेवापौरुषेयश्रुत्या बाधस्य न्याय्यत्वात् ।

न च केषाञ्चिदपहतपाप्मत्वादिधर्माणामनुमानतः प्राप्तिरुक्तेति वाच्यम् । स्वयमलावण्यस्य काष्ठखण्डस्य रुमासम्बन्धेन लावण्यवत् स्वयमपहतपाप्मनोऽपि पापाकरचेतनसंसर्गेण संसर्गजपापप्रसक्तौ कर्दमस्थकीटन्यायेन पापानर्हत्वरूपापहतपाप्मत्वस्य अपहतः पाप्मा येनेति व्युत्पत्तिसिद्धनिश्शेषपापविमोचकत्वरूपस्य च शरीराभावलिङ्गेन प्राप्त्ययोगात् विजरत्वादिकमपि जरानर्हत्वजराविरूपमोचकत्वादिरूपं न प्रमाणान्तरप्राप्त्यर्हम् । अत एव 'नास्यैतज्जरया जीर्यते न वधेनास्य हन्यते' (छा० ८-१-५) इत्युच्यते । तस्मात्स्वरूपरूपगुणविभूत्यादिमध्ये वेदान्तवेद्याकारेण कस्याप्यप्राप्तेः 'अप्राप्ते शास्त्र'मिति न्यायेन वेदान्तानां स्वरूपादितात्पर्यकतया स्वरूपादिगोचरापातप्रतीतौ उक्ताधिकारिविषयादिलाभेन वेदान्तार्थनिर्णयौपयिकतात्पर्यनिर्णायकन्यायनिबन्धनात्मकं शारीरकशास्त्रमारम्भणीयमिति सिद्धान्तितम् ।

**॥ इति शास्त्रयोनित्वाधिकरणम् ॥**

---

## (४) ॥ अथ समन्वयाधिकरणम् ॥

## सू० ॥ तत्तु समन्वयात् ॥ ४ ॥

प्रकारान्तरेण वेदान्तानां ब्रह्मणि तात्पर्यासम्भवमुखेन शास्त्रस्यानारम्भणीयत्वमाशङ्क्य निराक्रियते तत्तु समन्वयादित्यत्र ।

प्रत्यक्षादिप्रमाणस्य यथातथात्वेऽपि परप्रतीत्यर्थस्य शब्दस्य स्वाध्यायविध्यध्यापितप्रयोजनस्य वैदिकवाक्यस्य च विशिष्य प्रयोजनवदर्थपरत्वावश्यम्भावात्तस्य च प्रवृत्तिनिवृत्त्यन्यतरान्वयिफलतत्साधनप्रतिपादनायत्ततया ध्यान-

विशेषणतया प्रवृत्त्यन्वयेऽपि ध्यानस्य ध्येयसत्तानवश्यम्भावेन ध्येयभूतब्रह्मस्वरूपादिसत्यत्वासिद्ध्या वस्तुसत्ता[धीन]स्य साक्षात्परम्परया वा प्रवृत्त्यन्वयस्य प्रवृत्तिव्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वरूपस्य ब्रह्मस्वरूपादावसम्भवेन तत्र वेदान्तानां तात्पर्यासम्भवेन तात्पर्यज्ञानरूपसहकारिविरहेण वेदान्तवाक्यैरापातप्रतीत्यसम्भवेनाधिकारिदौर्लभ्यादनारम्भणीयं शारीरकशास्त्रमिति प्राप्य्य—

अखिलहेयप्रत्यनीककल्याणैकतानमपरिच्छिन्नानन्दरूपं वात्सल्यसौशील्यसौलभ्यसौहार्दाद्यपरिमितगुणगणं सकलचेतनैस्सदानुभाव्यं सदानुभूयमानमप्यपूर्ववदानन्दावहं परं ब्रह्म प्रतिपादयतो वेदान्तवाक्यस्यातिभङ्गुरपरिमितस्वर्गादिसुखतत्साधनादिप्रतिपादनविरहप्रयुक्तप्रयोजनवैधुर्योक्तेस्सार्वभौमस्याकिञ्चनजनसम्बन्धाभावायत्तदारिद्र्यवादवदश्रद्धेयत्वेन परमपुरुषार्थभूते परे ब्रह्मणि साक्षात्प्रतिपाद्ये वेदान्तवाक्यं प्रयोजनपर्यवसाय्येव। पश्चादेवंभूतं ब्रह्म कथं प्राप्यत इत्यपेक्षायां ‘ब्रह्मविदाप्नोति परम्’ (तै० २-१) ‘आत्मानमेव लोकमुपासीत’ (बृ० १-४-१५) इति वेदनादिशब्दैरुपासनं तादृशब्रह्मप्राप्त्युपायतया विधीयते। न हि कश्चिद्विषयसत्तानिश्चयं विना प्रवर्तते। बालोपच्छन्दनादिवाक्यादपि विषयसत्तां निश्चित्यैव प्रवर्तते। निश्चयश्च भ्रान्तिः प्रमा वेत्यन्यदेतत्। तथा स्ववेश्मनि कुतश्चित्प्रमाणान्निधिसत्तां निश्चित्य तदुपादाने प्रवर्तते तथा च कश्चिद्राजकुमारः क्रीडासक्तया देशान्तरगतः स्वपितरमजानन् कालान्तरे कुतश्चिदाप्तात् स्वपितरं जीवन्तं गुणविशेषशालिनं महासम्पन्नं श्रुत्वा तद्दर्शनप्राप्त्यादौ प्रवर्तते तद्वत्। तदेवं पश्चात्तनबाधाभावेन ब्रह्मस्वरूपरूपगुणविभूत्यादिविषयस्मृत्यवश्यम्भावेन वेदान्तवाक्यानां तत्र तात्पर्यानपवादेन तत्परिकर्मितवेदान्तवाक्यजन्यापातप्रतीतिमतोऽधिकारिणो विषयप्रयोजनयोश्च लाभाद्वेदान्तार्थनिर्णयौपयिकतात्पर्यनिर्णायकन्यायनिबन्धनरूपं शारीरकं शास्त्रमारम्भणीयमिति चतुस्सूत्र्या व्युत्पत्त्यभावप्रतिपत्तिदौस्थ्यमानान्तरप्राप्तिनैष्फल्यशङ्कानिरसनपूर्वकं शारीरकशास्त्रारम्भस्समर्थितः।

॥ इति समन्वयाधिकरणम् ॥

॥ समाप्ता चतुस्सूत्री ॥

---

## (५) ॥ अथ ईक्षत्यधिकरणम् ॥

सू०॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥

सू०॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

सू०॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

सू०॥ हेयत्वावचनाच्च ॥ ८ ॥

सू०॥ प्रतिज्ञाविरोधात् ॥ ९ ॥

सू०॥ स्वाप्ययात् ॥ १० ॥

सू०॥ गतिसामान्यात् ॥ ११ ॥

सू०॥ श्रुतत्वाच्च ॥ १२ ॥

इदानीं ईक्षतेर्नाशब्दमित्याद्यनावृत्तिश्शब्दादित्येवमन्तं शारीरकशास्त्रमारभते । अत्रास्य सङ्गतिविशेषाः । वेदार्थौपयिकतात्पर्यनिर्णायकन्यायनिबन्धनरूपत्वान्मीमांसाशास्त्रसङ्गतिः । वेदान्तार्थनिर्णयौपयिकतात्पर्यनिर्णायकन्यायप्रतिपादकतया ब्रह्मकाण्डसङ्गतिः । सिद्धरूपब्रह्मपरवेदान्तार्थनिर्णयानुकूलतात्पर्यनिश्चायकन्यायसन्दर्भरूपत्वेन पूर्वद्विकसङ्गतिः । कारणत्वपरवेदान्तवाक्यार्थनिर्धारकतात्पर्यग्राहकोपक्रमादिलिङ्गाभिधानमुखेन ब्रह्मणि कारणवाक्यसमन्वयपर्यवसानात् समन्वयाध्यायसङ्गतिः । सूक्ष्मचिदचिद्विलक्षणकारणवस्तुपरत्वसाधनमुखेन तदयोगव्यवच्छेदरूपेक्षत्यानन्दमयाधिकरणार्थान्तर्गतसूक्ष्माचिद्विलक्षणवस्तुपरत्वसमर्थनन्यायप्रतिपादनमुखेन तदयोगव्यवच्छेदपर्यवसानात्पेटिकासङ्गतिः । सद्विद्यावाक्यानुरोधेन सर्ववेदान्तानां प्रधानप्रतिपादकत्वेनानवधिकातिशयानन्दपरब्रह्मलक्षणपुरुषार्थपर्यवसानं पूर्वाधिकरणोक्त[मयुक्त]मित्युत्थितेरनन्तराधिकरणसङ्गतिराक्षेपिकीति ॥

तत्रेक्षत्यधिकरणे—काचित्कगोमयवृश्चिकादिविषयदृष्टकार्यविलक्षणकारणकल्पनादपि बहुतरमृत्सुवर्णघटकुड्यादिविषयादृष्टकार्यकारणसालक्षण्यानुरोधिनो लाघवप्रकाशादिकार्यसिद्धसत्त्वरजस्तमोगुणयुक्तजगद्रूपकार्यसलक्षणत्रिगुणमयप्रधानकारणतात्पर्यकल्पनस्यैवोचितत्वात् प्रतिज्ञादृष्टान्तवाक्यसमभिव्याहाररूपानुमान-

वाक्यसारूप्येणानुमानिकप्रधानकारणवस्तुतात्पर्यावगमाच्च सद्विद्यावाक्यस्य प्रधान-कारणपरत्वसिद्धौ गतिसामान्यन्यायेन सर्वेषामेव वेदान्तानां प्रधानैककारणपरत्वा-वश्यम्भावात् नोक्तरूपविलक्षणकारणवस्तुसिद्धिरिति परिचोद्य—

बहुभवनसङ्कल्परूपेक्षणजीवद्वारकभूतानुप्रवेशनामरूपव्याकरणसङ्कल्प-सर्वात्मत्वादिचेतनैकान्तधर्मवाचिबहुतरपदसमभिव्याहारविरोधेन सलक्षणकारण-वस्तुतात्पर्यापवादात् श्रोतृबुद्धिसमाधानार्थत्वेन प्रतिज्ञायाः प्रतिपिपादयिषितार्थसुख-प्रतिपत्त्यर्थत्वेन दृष्टान्तवाक्यस्य च लोकवेदयोर्बहुशः प्रयोगदर्शनेनानुमानवाक्यै-कान्तत्वाभावात् तदसाधारणहेत्ववयवाप्रयोगाच्च आनुमानिकप्रधानकारणतात्पर्य-कल्पनानुपपत्तेश्च तद्विलक्षणयथोक्तलक्षणकारणवस्तुपरत्वसिद्धावन्येषामपि तथात्व-मिति पूर्वोक्तपुरुषार्थपर्यवसायित्वं वेदान्तानामक्षतमेवेति परिहृतम् ।

॥ इतीक्षत्यधिकरणम् ॥

---

## (६) ॥ अथ आनन्दमयाधिकरणम् ॥

**सू०॥ आनन्दमयोऽभ्यासात् ॥ १३ ॥**

**सू०॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १४ ॥**

**सू०॥ तद्धेतुव्यपदेशाच्च ॥ १५ ॥**

**सू०॥ मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥**

**सू०॥ नेतरोऽनुपपत्तेः ॥ १७ ॥**

**सू०॥ भेदव्यपदेशाच्च ॥ १८ ॥**

**सू०॥ कामाच्च नानुमानापेक्षा ॥ १९ ॥**

**सू०॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥**

चेतनैकान्तेक्षणादिधर्मेणाचित्प्रधानवैलक्षण्येऽपि कारणवस्तुनो न चिद्वै-लक्षण्यमित्युत्थितेस्सङ्गतिः ।

आनन्दमयाधिकरणे—'ब्रह्मविदाप्नोति परं' (तै० २-१) इत्युपक्रान्तब्रह्मस्वरूपतदुपासनतत्फलप्रकारान् 'सत्यं ज्ञानमनन्तं' (तै० २-१) इत्यादिनोपदिश्य 'आत्मन आकाशः' (तै० २-१) इत्यादिना तदुपयोगित्वेनाकाशाद्युत्पत्तिमुक्त्वा तस्य सुखप्रतिपत्त्यर्थं स्थूलारुन्धतीन्यायेनान्नशब्दितशरीरप्राणमनोविज्ञानमयेषु ब्रह्मबुद्धिमवतार्य आनन्दमयानन्तरमन्तरात्मानुपदेशेन प्रस्तुतब्रह्मशब्दितकारणवस्तुभूतान्तरात्मबुद्धेः 'तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः' (तै० २-५) इत्युक्तानन्दमय एव परिसमाप्त्यवगमेन तस्मिंश्च 'तस्यैष एव शारीर आत्मा' (तै० २-६) इति कर्मानुबन्धिशरीरसम्बन्धप्रतीत्या शरीरप्राणादितत्तदन्तरवस्त्वनुक्रमपाठलक्षणस्थानप्रमाणेन शरीरादिजीवोपकरणप्रायपाठेन सद्विद्यायां तत्त्वमसीति सच्छब्दवाच्यकारणवस्तुनो जीवैक्योपदेशेन तत्रेक्षणादिसम्भवेन च आनन्दवल्लीसद्विद्ययोश्चेतनपरत्वसिद्धावन्येषामपि तथात्वमिति कारणवस्तुनो न सूक्ष्मचिद्वैलक्षण्यसिद्धिरिति प्राप्ते—

'सैषाऽऽनन्दस्य मीमांसा भवति' (तै० २-८) इत्यारभ्य 'ते ये शतम्' (तै० २-८) इत्यादिना 'यतो वाचः' (तै० २-९) इत्यन्तेन शतगुणितोत्तरक्रमेणाभ्यस्यमाननिरतिशयदशाशिरस्कानन्दविशेषस्य सुखलवभागिनि प्रत्यगात्मन्यसम्भावितस्याऽऽनन्दमये श्रवणात्, 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः' (तै० २-५) इति विज्ञानमयशब्दितज्ञानगुणकाज्जीवादन्यत्वेन आनन्दमयस्य व्यपदेशाच्च, आनन्दमयस्य जीवान्यत्वे निश्चिते, निरतिशयानन्दरूपलिङ्गेन स्थानादेरेव बाधौचित्यात्, तत्त्वमसीति जीवैक्योपदेशस्य शरीरात्मभावनिबन्धनत्वावश्यम्भावात् जगच्छरीरके परमात्मनि शरीरप्रतिसम्बन्धित्वरूपशारीरत्वोपपत्तेश्च चिद्विलक्षणचेतनकारणपरत्वमानन्दवल्ल्या इति गतिसामान्यन्यायात्सर्वेषामपि वेदान्तानां सूक्ष्मचिदचिद्विलक्षणकारणपरत्वमिति सिद्धान्तितम्।

**॥ इत्यानन्दमयाधिकरणम् ॥**

## (७) ॥ अथ अन्तराधिकरणम् ॥

### सू०॥ अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

### सू०॥ भेदव्यपदेशाच्चान्यः ॥ २२ ॥

स्थूलचिदचिद्विशेषवैलक्षण्यं पादशेषेण निरूप्यते।

अन्तरादित्याधिकरणे—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' (छा० १-६-६, ७) इति छान्दोग्यवाक्ये आदित्यशब्दितमण्डलान्तर्वर्तिनः पुरुषस्य 'रमणीयचरणा रमणीयां योनिमापद्येरन्, (छा० ५-१०-७) इति श्रुतिप्रसिद्धरीत्या पुण्यकर्मसाध्यविलक्षणकरचरणाद्यवयवसङ्घातात्मकशरीरोपकरणित्वरूपशारीरत्वस्य चक्षुरादिशब्दस्वारस्यावगतस्य जगन्नियन्तरि नियन्तृत्वरूपजगच्छरीरसम्बन्धिन्यपहतपाप्मनि त्वदभिमतब्रह्मणि कथञ्चिदप्यसम्भवात्, 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इत्युक्तज्योतिष्टोमाद्युपचितपुण्यविशेषशालिनि आदित्याख्यदेवताविशेषे तथाविधशरीरोपकरणित्वरूपशरीरित्वसम्भवात्, 'सर्वेभ्यः पाप्मभ्य उदितः' (छा० १-६-७) इत्युक्तपापातीतत्वस्य प्रभूतपुण्यविशेषस्य सम्भवात्, स्वोपासकानां स्वपुण्यविशेषवैभवेन पापमोचकत्वादिसम्भवाच्चादित्यमण्डलान्तर्वर्तिनो जीवात्मत्वे निश्चिते सत्यानन्दवल्ल्यां 'स यश्चायं पुरुषे यश्चासावादित्ये' (तै० २-८) इत्यादित्यमण्डलान्तर्वर्तिपुरुषैक्योपदेशेनानन्दमयस्यापि जीवविशेषत्वसिद्धौ पुण्यविशेषायत्तोत्कृष्टातिशयानन्दसम्भवाद्विज्ञानमयादन्य इति विज्ञानमयशब्दितबुद्धिव्यतिरिक्तत्वस्य आदित्याख्यजीवे सम्भवात्, पुण्यविशेषेण जगत्कारणत्वतदुपयोगिज्ञानशक्त्यादिसर्वधर्मोपपत्तेश्च जगत्कारणब्रह्म पुण्यविशेषप्राप्तधर्मभूतज्ञानद्वारकबृहत्त्वादिशालिदेवताविशेष एव नातिरिक्तमिति प्राप्तस्य—

'सर्वेभ्यः पाप्मभ्य उदित' (छा० १-६-८) इत्युक्तस्य वेदान्तप्रसिद्धपुण्यपापोभयवाचिबहुवचनान्तसर्वशब्दविशेषितपाप्मशब्दोक्ताशेषपुण्यपापरूपकर्मात्यन्तासंस्पृष्टत्वस्य कर्मानिबन्धनस्य स्वरूपप्रयुक्तस्य कामेशत्वसत्यसङ्कल्पत्वसर्वान्तरत्वादेः कर्मवश्यादित्याख्यजीवासम्भावितस्य आदित्यान्तर्वर्तिपुरुषे श्रूयमाणस्य

कर्मवश्यजीवेष्वसम्भवात् 'सर्वेभ्यः पाप्मभ्य उदितः' इत्यपहतपाप्मत्वोक्तिपूर्वकं प्रतिपादितस्य हिरण्मयश्रुत्यादि[ति]विलक्षणशरीरस्य कर्मविशेषायत्तत्वासम्भवेन 'आदित्यवर्णं तमसः परस्तात्' (पुरुषसूक्त) 'अजायमानो बहुधा विजायते' (पुरुषसूक्त) 'जन्म कर्म च मे दिव्यम्' (गीता० ४-९) 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' (महाभारत-उद्योगपर्व) 'इच्छागृहीताभिमतोरुदेहः' (विष्णुपु० ६-५-८४) इत्यादिवेदान्तप्रसिद्धाप्राकृतदिव्यमङ्गलविग्रहस्य कर्मवश्यादित्यदेवताविशेषेऽत्यन्तासम्भवाच्चादित्यमण्डलवर्तिपुरुषस्य चेतनविलक्षणत्वे सिद्धे 'स यश्चायं पुरुषे यश्चासावादित्ये' (तै० २-८) इत्यानन्दवल्ल्यामपि तदैक्येन चेतनविलक्षणत्वावश्यम्भावात् वाङ्मनसापरिच्छेद्यनिरतिशयानन्दस्य जीवासम्भावितया आनन्दमयस्य 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै० २-१) इत्युक्तजगत्कारणवस्तुनः चेतनविलक्षणत्वसिद्धौ गतिसामान्यादीक्षणादिचेतनधर्मश्रवणाच्चादित्यादिचिदचिद्विलक्षणकारणमेव ब्रह्म वेदान्तप्रतिपाद्यमिति सिद्धान्तितम् ।

॥ इत्यन्तरादित्याधिकरणम् ॥

---

## (८) ॥ अथ आकाशाधिकरणम् ॥

## सू०॥ आकाशस्तल्लिङ्गात् ॥ २३ ॥

कारणवस्तुनश्चिद्विशेषवैलक्षण्यमुक्त्वा अथाचिद्विशेषवैलक्षण्यमुच्यते ।

'आकाशस्तल्लिङ्गा'दित्यत्र — सदादिसामान्यशब्दसमर्पितकारणवस्तुनो विशेषाकाङ्क्षायां छागपशुन्यायेन 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छा० १-९-१) इति वाक्यस्थाकाशपदश्रुतिसमर्पितभूताकाशपर्यवसानमेव युक्तम् । रूढ्या स्वार्थोपस्थापकतया पदश्रुतेः स्वतो बलीयस्त्वात् ईक्षणादिलिङ्गानां श्रुत्यधीनसिद्धिकतयोपजीव्यजातीयत्वेन आकाशश्रुतेर्बलीयस्त्वादाकाशश्रुतेरभ्यस्तत्वाच्च तदनुसारेणेक्षणादीनामेव गौणेक्षणविषयतया नेयत्वात् स्ववाक्यश्रुतानामपि परायणत्वज्यायस्त्वादीनामवकाशहेतुत्वकारणत्वप्रयुक्तज्येष्ठत्वादिविषयतया कथञ्चिन्नेतुं शक्यत्वात् ।

न च 'एको ह वै नारायण आसीत्' (महोप० १-९) इत्युक्तविशेषपर्यवसानं शङ्क्यम्। नारायणपदस्य योगरूढतया योगार्थावच्छिन्नरूढ्यर्थबोधस्य योगशक्तिमूलकवाक्यार्थतापन्नावयवार्थबोधसापेक्षतया विलम्बितत्वेन केवलरूढाकाशपदसमर्पितविशेषपर्यवसानस्य प्रथमभावितया तत एव निराकाङ्क्षत्वात्।

शिवादिशब्दानामप्यनेकार्थसाधारणतया सदादिशब्दतुल्यत्वेन नियतैकव्यक्तिपर्यवसानमशक्यम्। 'एतस्माज्जायते प्राणः' (मु० २-१-३) इत्यादिना कार्यान्तर्गततया प्रतीतप्राणवायुपर्यवसानमप्यशक्यशङ्कम्। 'आत्मन आकाशस्सम्भूतः' (तै० २-१) इति तु सूक्ष्माकाशादात्मनः स्वस्मात् स्थूलाकाशस्सम्भूत इति वा स्वस्मात्स्वोत्पत्तेरनुत्पन्नत्वपर्यवसानमिति वा सम्भवेन तत्र पर्यवसानं युज्यत एव। ज्योतिरिन्द्रादिशब्दनिर्दिष्टे कारणत्वकण्ठोक्त्यभावेन तत्रापि पर्यवसानमशक्यमिति सदादिशब्दनिर्दिष्टं कारणमाकाशपदश्रुतिसमर्पितो भूताकाश एवेति न तद्विलक्षणवस्तुसिद्धिरिति पूर्वः पक्षः।

सिद्धान्तस्तु—नात्राकाशपदवाच्यो भूताकाशः। किन्तु तद्विलक्षणः परमात्मा। तस्मिन्नाकाशे 'अस्य लोकस्य का गतिः' (छा० १-९-१) इत्यादिना श्रूयमाणानां सर्वलोकगतित्वपरायणत्वसर्वज्यायस्त्वापहतपाप्मत्वादीनामचेतनाकाशेऽत्यन्तानुपपन्नतया पदानां समभिव्याहृतपदान्तरार्थान्वययोग्यार्थबोधकत्वस्वाभाव्यात्, 'वह्निना सिञ्चति' 'आदित्यो यूपः' इत्यादाविव श्रुतिप्राबल्यानवकाशात्।

न च 'आदित्यो यूपः' इत्यादौ श्रुतिद्वयविरोधेऽन्यतरबाधाङ्गीकारे प्रकृते श्रुत्या लिङ्गबाधे को विवाद इति वाच्यम्। पुरोवादतया स्वोपजीवकाकाशवाक्याननुरोधिसद्विद्यावाक्यस्थबहुतरेक्षणादिलिङ्गप्रतिपादकवाक्यघटकानेक - श्रुत्यबाधानुसारेणानुवादगतैकाकाशश्रुत्यन्यथानयनस्यैव युक्तत्वात्। श्रुतिलिङ्गाधिकरणे तु लिङ्गबोधकमन्त्रस्थपदश्रुत्यनुरोधेन विनियोगविधिस्थगार्हपत्यपदस्येन्द्रलक्षणायां विधिवैयर्थ्यापत्त्या श्रुतिप्राबल्यस्यैव न्याय्यत्वात्।

किञ्चेह—वाशब्दसमभिव्याहारेणाकाशवाक्यस्यानुवादतया तत्पुरोवादे सद्विद्यावाक्ये च नैकान्तेक्षणादिना चेतनसामान्यकारणत्वे तद्विशेषापेक्षाया-

मचेतनविशेषपर्यवसानासम्भवात् तदनुरोधेन आसमन्तात् काशत इति योगाश्रयणमेव न्याय्यम्। अनुवादस्य पुरोवादानुयायित्वस्वाभाव्यात् सद्विद्यावगतचेतनस्य कारणवस्तुनो विशेषापेक्षायां 'स एषोऽनन्तः' इत्येतद्वाक्यस्थानन्तपदेन भगवति रूढेन विशेषसमर्पणसम्भवात्। स एष इति प्रकृतमाकाशमनूद्यानन्तत्वरूपविष्णुत्वविधेः स्फुटं प्रतीयमानत्वात्। तस्माद्भूताकाशविलक्षणः परमात्मा जगत्कारणमिति सिद्धान्तः।

॥ इत्याकाशाधिकरणम् ॥

---

## (९) ॥ अथ प्राणाधिकरणम् ॥

## सू०॥ अत एव प्राणः ॥ २४ ॥

पूर्वाधिकरणोक्तन्यायातिदेशादातिदेशिकी सङ्गतिः।

'अत एव प्राणः' इत्यत्र—'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' (छा० १-११-५) इत्युदाहृत्य देवतिर्यङ्मनुष्यस्थावरेषु प्राणाधीनप्रवृत्तिकत्वदर्शनेन तत्र च देवत्वतिर्यक्त्वादीनां प्राणप्रवर्त्यतावच्छेदकत्वकल्पनायां गौरवेण लाघवात् कार्यत्वस्यैव तदवच्छेदकतया मूर्छितादिशरीर इव शिलाकाष्ठादावपि प्राणानुपलम्भसम्भवेन कार्यमात्रस्य प्राणाधीनप्रवृत्त्यर्हत्वेन प्राणस्य सर्वाचेतनकार्यजातं प्रति उपचयापचयात्मकस्थूलसूक्ष्मावस्थाप्रापणार्हत्वरूपं कारणत्वमस्ति। सूक्ष्माचिद्विशिष्टचेतने स्थूलाचिद्विशिष्टत्वावस्थाप्रापकत्वेन प्राणस्य चेतनं प्रत्यपि कारणत्वमस्त्येव। 'प्राणमेवाभिसंविशन्ति' (छा० १-११-५) इति प्राणस्य लयाधिष्ठानत्वव्यपदेशस्तु लोके प्राणविगमे सति लयव्यवहारनिबन्धनो गौणः। 'एतस्माज्जायते प्राणः' (मु० २-१-३) इति च एतच्छब्देन निर्दिष्टात् प्राणसहचरितत्वसम्बन्धेन लक्षितापानोत्पत्तिं वदति। तदेवं 'सर्वं [यदि] प्राणाधीनप्रवृत्ति न स्यात् कार्यं न स्यादिति' तर्कोपोद्बलितस्ववाक्यविरोधिलिङ्गानपोदितप्रसिद्धिकप्राणपदश्रुतिबलेन प्राणरूपकारणे निश्चिते सत्येतदैककण्ठ्याय सर्वकारणवाक्यानामेतादृश-

कारणपरत्वे सिद्धे सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि सादृश्यादिनोपपादनीयमिति एतादृशमेव कारणत्वं लक्षणं वेदान्ताभिप्रेतं न त्वभिन्ननिमित्तोपादानत्वमप्रसिद्धम् । अतस्त्वदभिमतं लक्षणमसम्भवीति पूर्वः पक्षोऽधिकः ॥

सिद्धान्तोऽप्यधिकोऽभिधीयते । देवमनुष्यादिष्ववयवोपचयापचयात्मकविजातीयावयवसंयोगस्य प्राणव्यापकत्वावधारणात् शिलाकाष्ठादिषु व्यापकोपचयादिनिवृत्त्या व्याप्यस्य प्राणस्यापि निवृत्त्या मूर्छितशरीर इवानुपलब्धप्राणकल्पनायां मानाभावेन कार्यत्वस्य प्राणप्रवर्त्यतावच्छेदकत्वानुपपत्तेर्मनुष्यत्वादिकमेव तदवच्छेदकम् । गौरवं च प्रामाणिकम् । ततोऽचेतनकृत्स्नकार्यं प्रति प्राणस्य नोक्तरीत्या कारणत्वम् । चेतनकारणत्वन्तु दूरत एव । 'एतस्माज्जायते' (मु० २-१-३) इति कार्यान्तर्गतस्य प्राणस्य 'सर्वाणि ह वा इमानि भूतानि' (छा० १-११-५) इति बहुवचनान्तसर्वशब्दविशेषितभूतशब्दावगतकृत्स्नकारणत्वञ्च न सम्भवति। 'प्राणमेवाभिसंविशन्ति' (छा० १-११-५) इति श्रुतं लयाधिष्ठानत्वञ्च नोपपद्यते। उपादानत्वनिबन्धनद्रव्यैक्याधीनमेकविज्ञानमप्यनुपपन्नम्। प्राणस्यावस्थान्तरप्रापकत्वेऽप्यनुपादानत्वात् । हवाशब्दसिद्धानुवादभावस्यास्य पुरोवादसदादिवाक्यस्थचेतनैकान्तानेकेक्षणादिलिङ्गप्रतिपादकवाक्यघटकबहुतरपदश्रुतिबाधश्च । तस्मादाकाशन्यायेन प्राणयतीति वा अपर्यवसानवृत्त्या वा प्राणशब्दोऽयमीक्षणावच्छिन्नानन्दापहतपाप्मत्वाप्राकृतविग्रहत्वपरायणत्वजगदुपादानत्वादि - कृत्स्नोक्तधर्मयोगिविलक्षणचेतनविशेषमेव जगत्कारणं वक्तीति सिद्धम् । अन्यदपि सर्वं कारणवाक्यं तथाविधमेव कारणवस्तु प्रतिपादयतीति ।

॥ **इति प्राणाधिकरणम्** ॥

---

## (१०) ॥ अथ ज्योतिरधिकरणम् ॥

एवमधिकरणपञ्चकेन कारणत्वकण्ठोक्तिमद्वाक्यमुदाहृत्य ब्रह्मपरत्वं स्थापितम् । अथ कारणत्वज्ञापकधर्मविशेषयुक्तार्थान्तरप्रसिद्धपरसमभिव्याहृतवाक्यमुदाहृत्य ब्रह्मपरत्वमधिकरणद्वयेन चिन्त्यते । तत्राकाशप्राणरूपभूतविशेषप्रसङ्गान्महाभूततृतीयविषये चिन्त्यते ।

सू०॥ ज्योतिश्चरणाभिधानात् ॥ २५ ॥

सू०॥ छन्दोऽभिधानान्नेति चेन्न तथा
चेतोऽर्पणनिगमात्तथा हि दर्शनम् ॥ २६ ॥

सू०॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

सू०॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

ज्योतिरधिकरणे—'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वा व तद्यदिदमन्तःपुरुषे ज्योतिः' (छा० ३-१३-७) इत्यत्र आदित्यादिषु ज्योतिश्शब्दप्रसिद्धिप्राचुर्यात् आकाशप्राणवाक्यवत् प्रसिद्धिप्राचुर्यापवादकपरायणत्वासङ्कुचितसकलजगत्कारणत्वादिलिङ्गाभावात् 'त्रिपादस्यामृतं दिवि' (छा० ३-१२-६) इति सप्तमीनिर्देशावगतद्युलोकस्थस्य 'यदतः परो दिवो ज्योतिः' इति पञ्चमीनिर्देशावगतद्युलोकोपरिस्थस्य च रूपभेदेन पूर्ववाक्यप्रतिपन्नार्थप्रत्यभिज्ञानवकाशात्, कौक्षेयज्योतिषैक्योपदेशस्य तेजस्त्वजातितेजःकार्यत्वादिनिबन्धनस्य तत्रैवोपपन्नत्वाच्च। विश्वतः= सर्वभूमिप्रदेशात्। पृष्ठेषु= बहिर्भूतेषु। सर्वतः= अन्तरिक्षप्रदेशात्। पृष्ठेषु = बहिर्भूतेषु। अनुत्तमेषु= स्वस्मादुत्तमरहितेषु। उत्तमेषु श्रेष्ठेषु द्युलोकादिषु दीप्यत इति रूपव्याप्तरूपवदादित्यादितेजस्युपपत्तेरादित्यादितेजसां रश्मिद्वारा 'विश्वतः पृष्ठेषु' इत्याद्युक्तलोकव्याप्ति [बलात्] ज्योतिश्शब्दार्थो भौमकादित्यादिज्योतिरेव। तथा च 'न तत्र सूर्यो भाति' 'तस्य भासा सर्वमिदं विभाति' (कठोप० ५-१५) इति प्रकरणे 'तथाक्षरात्सम्भवतीह विश्वम्' (मु० १-१-७) इति निरतिशयदीप्तियुक्तवस्तुनः कारणत्वश्रवणात् तादृग्दीप्तिमतोऽत्र श्रवणेनास्य वाक्यस्य जगत्कारणविषयत्वमिति अक्षरवाक्यैकार्थ्यापन्नैस्तद्वाक्यानुसारात् 'यतो वा इमानि भूतानि' (तै० ३-१) इत्यादिलक्षणवाक्यस्यापि भूतशब्दार्थमचेतनमात्रमङ्गीकृत्य तादृशजगत्कारणत्वमेव लक्षणमिति महाभूततृतीयसूक्ष्मावस्थाभिप्रायेणैव सकलमपि जगत्कारणवादिवाक्यं नेतव्यम्। लक्षणवाक्यानुसरणावश्यम्भावात्।

न च 'न तत्र सूर्यो भाति' (कठोप० ५-१५) इत्यादिवाक्यप्रतिपाद्यसूर्याद्याच्छादकतेजसा कथमेतद्वाक्यप्रतिपाद्यज्योतिश्शब्दार्थादित्यादेरैक्याभ्युपगमः विरोधादिति वाच्यम्। आदित्यादिप्रसिद्धतेजोग्रहणस्यात्र महाभूततृतीयसूक्ष्मावस्थोपलक्षकतया तत्रैव तात्पर्यमित्यभावात्। सूक्ष्मत्वाच्छादकचतुर्मुखलोकप्रसिद्धतेजसः सूक्ष्मभूततृतीयोपादेयतया तदैक्यसम्भवाच्च। कौक्षेयकज्योतिरैक्योपदेशज्योतिश्शब्दप्रसिद्धिदीप्तिश्रुतिभिः पुरुषसूक्तप्रतिपाद्यपरमपुरुषप्रत्यभिज्ञापकसर्वभूतपादवत्वादिबाधेन पूर्ववाक्यस्यापि भूततृतीयसूक्ष्मपरत्वेन नेयत्वात्। अस्य भूततृतीयस्य सर्वाणि भूतानि हेयानि स्थूलावस्थानि, पादस्तुरीयांशः, अस्य भूततृतीयस्य भोग्यं स्पृहणीयांशजातं त्रिपात्, त्रिगुणितं इति मुख्यवृत्त्यैव नयनसम्भवात्। तस्मान्महाभूततृतीयमेव सूक्ष्मावस्थं वेदान्तगतकारणवाक्यप्रतिपाद्यं न तद्विलक्षणं त्वदभिमतं इति प्राप्ते—

स्ववाक्ये परमपुरुषप्रत्यभिज्ञापकलिङ्गाभावेऽपि पुरुषसूक्तोक्तलिङ्गस्य विश्वभूतपादवत्त्वस्यामृतत्रिपात्कत्वस्य चोपक्रमे 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' (छा० ३-१२-६) इत्यत्र प्रतीयमानतया पुरुषसूक्तस्य **श्रुतप्रकाशिकादौ** विस्तरेण भगवत्परत्वस्थापनात् उपक्रमस्थपुंसूक्तोक्तलिङ्गावगतपरमपुरुषभावस्य द्युसम्बन्धिन एव 'अथ यदतः परो दिवः' (छा० ३-१३-७) इत्यनुवादेन 'अहं वैश्वानरो भूत्वा' (गीता० १५-१४) इत्यादिप्रमाणप्रसिद्धं जाठरानलशरीरकत्वमुपासनार्थमुच्यते। रूपव्यापदीप्तियोगाश्च अन्तरादित्यविद्यासिद्धाप्राकृतदिव्यविग्रहद्वारा आदित्यवर्णमित्यादिवदुपपद्यन्ते। ज्योतिष्ट्वञ्च विग्रहद्वारा परमपुरुषस्य युज्यते। चरणाभिधानहेत्वसिद्धिशङ्कापरिहारौ गुणसूत्र**भाष्यटीकादौ** द्रष्टव्यौ। तस्माज्ज्योतिर्वाक्यं चिदचिद्विलक्षणाक्षरवाक्यसिद्धनिरतिशयदीप्तियुक्तासङ्कुचितजगत्कारणवस्तुविषयमिति सर्वमपि' यतो वेत्यादिकारणवाक्यं चिदचिद्विलक्षणं जगत्कारणं ब्रह्म प्रतिपादयतीति राद्धान्तितम्॥

**॥ इति ज्योतिरधिकरणम् ॥**

---

## (११) ॥ इन्द्रप्राणाधिकरणम् ॥

### सू०॥ प्राणस्तथानुगमात् ॥ २९ ॥

### न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ ३० ॥

### सू०॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३१ ॥

### सू०॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥

निरतिशयदीप्तियोगाक्षिप्तासङ्कुचितजगत्कारणताशालिज्योतिश्शब्दनिर्दिष्टं चिदचिद्विलक्षणमित्युक्तमनुपपन्नम् । प्रज्ञातजीवभावेन्द्रस्य मुमुक्षूपास्यत्वाक्षिप्तकारणत्वप्रतीतेरिति पूर्वाधिकरणाक्षेपेणोत्थितेराक्षेपिकी सङ्गतिः ।

'प्राणस्तथानुगमात्' इत्यत्र—'प्रतर्दनो ह वै दैवोदासिः' (कौषी० ३-१) इत्युपक्रम्य 'त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' (कौषी० ३-१) इति प्रतर्दनेन प्रार्थितस्येन्द्रस्य वचने 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्व' (कौषी० ३-२) इति मुमुक्षूपास्यतया निर्दिष्टो हीन्द्राख्यवक्तृवाचकास्मत्पदश्रुते(र्वक्तृहीनना)[स्त्वाष्ट्रहनना]-द्युपक्रमस्थलिङ्गात् आकाशप्राणज्योतिर्वाक्येष्विवापवादकाभावात् प्रसिद्धेन्द्र एवेति सद्विद्यावगतकारणत्वव्याप्तमुमुक्षूपास्यत्वाक्षिप्तकारणत्वमपि तस्यैवेति तत्रैव कारणवाक्यानां सर्वेषां पर्यवसानमिति न तद्विलक्षणकारणवस्तुसिद्धिरिति प्राप्तय—

'स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः' (कौषी० ३-९) इति पूर्ववाक्योक्तमुपास्यं एष इति परामृश्य जीवासम्भावितानां निरुपाधिकासङ्कुचितत्वाऽऽनन्दत्वाजरत्वामृतत्वसाध्वसाधुकर्मकारयितृत्वचेतनाचेतनसर्ववस्त्वाधारत्वलोकाधिपतित्वसर्वेश्वरत्वादीनां जीवासम्भावितानां परमात्मनि सम्भवतां बहूनामुपसंहारे श्रुतत्वात् भूयोऽनुग्रहन्यायेनोपक्रमगतत्वाष्ट्रहननादिलिङ्गान्यथानयनस्यैव युक्ततया सर्वशब्दानां वेदान्तसिद्धपरमात्माभिधायित्वव्युत्पत्त्या 'अहं मनुरभवम्' (बृ० १-४-१०) इत्यादितत्त्वज्ञवामदेवादिव्यपदेशवदहंशब्दस्य स्वान्तर्यामि-

पर्यन्ताभिधानदृष्ट्या 'मामुपास्स्व' इत्युपदेशोपपत्त्या प्रसिद्धेन्द्रप्राणशरीरकपरमात्मोपासनप्रतिपिपादयिषया जीवमुख्यप्राणलिङ्गानां परमात्मस्वरूपगतानन्दत्वादीनाञ्च त्रिविधोपासनायोपदेश इति मुमुक्षूपास्यत्वमत्र नेन्द्रस्येति तदाक्षिप्तं कारणत्वमपि प्रसिद्धेन्द्रविलक्षणस्येति सूक्ष्मासूक्ष्मचिदचिद्विलक्षणं जगत्कारणभूतं ब्रह्म वेदान्तवेद्यमेवेति सिद्धान्तितम् ॥

**इति श्रीलक्ष्मणार्यकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**प्रथमस्याध्यायस्य**
**प्रथमः पादः**

**अधिकरणानि ११. सूत्राणि ३२.**

---

श्रीरस्तु

# ॥ द्वितीयः पादः ॥

## (१) ॥ सर्वत्रप्रसिद्ध्यधिकरणम् ॥

सू०॥ सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

सू०॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥

सू०॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

सू०॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

सू०॥ शब्दविशेषात् ॥ ५ ॥

सू०॥ स्मृतेश्च ॥ ६ ॥

सू०॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

सू०॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

प्रथमे पादे चिदचिद्विलक्षणवस्तुसमर्थनेन तदसिद्धिप्रसक्तजन्मादिसूत्रोक्तजगज्जन्मादिब्रह्मलक्षणायोगव्यवच्छेदो निर्णीतः । त्रिपाद्यां तल्लक्षणस्यातिव्याप्तिपर्यायान्ययोगव्यवच्छेदो निर्धायते । तत्र द्वितीये पादे हेतुतावच्छेदकरूपेणाशाब्दत्वरूपास्पष्टताकजीवादिलिङ्गकवाक्यान्युदाहृत्य चिन्त्यते ।

सर्वत्रप्रसिद्ध्यधिकरणे—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छा० ३-१४-१) 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूप आकाशात्मा' (छा० ३-१४-१, २) इत्यत्र 'सर्वं खल्विदं ब्रह्म' इति सर्वात्मतया ब्रह्मशब्दनिर्दिष्टः किं जीवः परो वेति संशय्य, इदं सर्वमितीदंशब्दनिर्दिष्टदेवादिस्थावरान्तशरीरात्म(क)भावस्यानादिकर्मप्रवाहपरिपाकानुसारिदेवतिर्यङ्मनुष्यादिजन्मभेदेन नानादेहपरिग्रहेण

जीव एव सम्भवात् पूर्वपादोक्तलक्षणजगदुपादानत्वस्य निर्वाहकतया सिद्धजगच्छरीरत्वेन परस्मिन्नपि सर्वपदसामानाधिकरण्योपपत्तावपि ब्रह्मसार्वात्म्यस्य वेदान्तमात्रप्रसिद्धतया जीवे च तस्य लोकवेदप्रसिद्धतया खलुशब्दासङ्कोचेन उभयविधप्रसिद्धदेवादि(तादर्थ्य)[तादात्म्य]स्यैवाभिप्रेतत्वौचित्येन तथाविधतादात्म्यस्य जीवलिङ्गत्वानपायात् ब्रह्मशब्दस्य 'द्वे ब्रह्मणी' इत्यादिना जीवपरयोः प्रयोगानुसारात् परं ब्रह्मेत्यादौ विशेषणोपादानानुगुण्याच्च जीवपरसाधारणगुणबृहत्त्वस्य शक्यतावच्छेदकत्वसम्भवात् बद्धदशायामपि 'स चानन्त्याय कल्पते' (श्वे० ५-९) इति ब्रह्मत्वयोग्यतायास्सत्त्वात् निष्कृष्टस्वरूपस्य च मुमुक्षूपास्यत्वविशुद्धमनोग्राह्यत्वादिरूपमनोमयत्वाद्युपपत्तेः स्वरूपस्याणुत्वेनाणीयस्त्वार्भकौकस्त्वोपपत्तेरिति शाण्डिल्यविद्याया जीवपरत्वे तज्जलानित्युक्तजगत्कारणत्वलक्षणं तत्रातिव्याप्तमिति पूर्वपक्षे प्राप्ते—

'सर्वं खल्विदं ब्रह्म' (छा० ३-१४-१) इति 'तज्जलान्' (छा० ३-१४-१) इति च प्रथमश्रुतसर्वशब्दासङ्कोचबहुवचनप्राप्तचिदचिदात्मकसर्ववस्तुशरीरकत्वसर्वकारणत्वयोः 'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः' (छा० ६-८-४) 'ऐतदात्म्यमिदं सर्वं' (छा० ६-८-७) इत्यादिषु परमात्मनि प्रसिद्धस्यात्रोपदेशान्मनोमयादिशब्दविवक्षितहेयप्रत्यनीकत्वाप्राकृतविग्रहत्वादिगुणानां परमात्मन्योवोपपत्तेरणीयस्त्वाल्पायतनत्वयोरुपासकहृदयौपाधिकयोः परमात्मनि सम्भवात् 'एष आत्मान्तर्हृदये' (छा० ३-१४-३) इत्युपास्योपासकयोः प्रथमाषष्ठीभ्यां व्यतिरेकनिर्देशात् 'एतमितः प्रेत्याभिसम्भवितास्मि' (छा० ३-१४-४) इति कर्मकर्तृभावव्यपदेशाच्च सर्वं खल्विति सर्वात्मकतया निर्दिष्टं ब्रह्म परमात्मैवेति सिद्धान्तितम् ।

**॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥**

---

## (२) ॥ अथ अत्त्रधिकरणम् ॥

### सू०॥ अत्ता चराचरग्रहणात् ॥ ९ ॥

### सू०॥ प्रकरणाच्च ॥ १० ॥

### सू०॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

### सू०॥ विशेषणाच्च ॥ १२ ॥

अत्त्रधिकरणे—कठवल्ल्यां

'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥' (कठ० २-२४)

इति श्रूयते। तत्रौदनोपसेचनशब्दसूचितो यच्छब्दनिर्दिष्टोऽत्ता जीवः परो वेति संशय्य ब्रह्मक्षत्रशब्दितदेहिषु ओदनशब्दमुख्यार्थान्वयानुपपत्तौ बहिरङ्गसंहार्यत्वाकारेण गौणवृत्तिकल्पनादन्तरङ्गभोग्यत्वाकारेण तत्कल्पनस्य न्याय्यत्वेन भोग्यपरौदनसमभिव्याहृतेन यस्येति षष्ठ्यन्तेन भोक्तृत्वप्रतीत्या तस्य च 'तयोरन्यः पिप्पलं स्वाद्वत्ति' (मु० ३-१-१) 'भोक्ता भोग्यम्' (श्वे० १-१२) इत्यादिना जीव एव प्रसिद्धत्वात् 'अनश्नन्नन्यः' (मु० ३-१-१) इत्युक्ते परमात्मनि भोक्तृत्वासम्भवात् स्त्रीपुंनपुंसकभेदभिन्नब्रह्मक्षत्रयोर्मध्ये स्त्रीणां भोग्यत्वस्य पुंनपुंसकयोर्भृत्यादिरूपेण भोग्यत्वस्य चानुभविकत्वात् भोक्तुः पुरुषस्य स्त्रीपुंनपुंसकभिन्नब्रह्मक्षत्रभोक्तृताया ब्रह्मक्षत्रयोर्भोग्यभावस्य च भोक्तृजीवानादिकर्ममूलता....ममत्वमृत्योरात्मस्वरूपाबाधकत्वमुपसेचनशब्देनोपचर्यते। तथा चानादिकर्मप्रवाहमूलब्रह्मक्षत्रवस्तुभोक्तायमत्ता जीव एव न पर इति पूर्वः पक्षः।

सिद्धान्तस्तु—नायमत्ता भोक्ता जीवः किन्तु जगत्संहर्ता परः। ब्रह्मक्षत्रशब्दवाच्यानां देहिनां यस्येत्येकवचनान्तपदोपस्थापितमेकं चेतनं प्रति भोक्तृत्वाभावात् भोग्यत्वाभावाच्च ओदनशब्दस्य भोग्यत्वरूपान्तरङ्गाकारेण उपचारो न युज्यत इति बहिरङ्गेणापि संहार्यत्वेन गुणेनो(पाध्यो)[पचारो] युक्त इति संहार्यवचनौदनपदसमभिव्याहृतषष्ठ्या संहर्तैव हि प्रतीयते।

किञ्च 'मृत्युर्यस्योपसेचनं' (कठ० २-२४) इत्यत्र लोष्ठादिसाधारणाकारमबाधकत्वं परित्यज्य स्वयमदनीयत्वे सत्यन्यादनहेतुत्वरूपान्तरङ्गाकारेणैव 'उद्गातृचमसमेकः श्रुतिसंयोगात्' (मी. सू. ३-५-२३) इति न्यायेनोपसेचनशब्दो गौणो नेतव्यः। तथाच यस्य मृत्युः स्वयं संहार्यस्सन्नन्यसंहारहेतुरिति वाक्यार्थावगतौ संहारकर्मीभूतान्यपदार्थः क इत्यपेक्षायां सन्निहितवाक्यस्थब्रह्मक्षत्रपदार्थान्वयौचित्येन तत्सिद्ध्यर्थमोदनपदस्य संहार्यत्वगुणेनोपचारावश्यम्भावे संहार्यवचनौदनपदसमभिव्याहृतषष्ठ्यन्तपदात् संहर्तैवावगम्यते।

न च प्रथमश्रुतौदनपदोपचारस्वारस्यानुसारेण चरमश्रुतोपसेचनपदस्य बाधकत्वेनोपचारास्वारस्यं सह्यमिति वाच्यम्। ब्रह्मक्षत्रयोर्मृत्योश्च ओदनोपसेचनभावरूपणान्मृत्योरुपसेचनदध्यादितौल्यं प्रतीयते। ब्रह्मक्षत्रयोरोदनभावरूपणेनौदनसादृश्यञ्च दध्योदनयोरदनान्वयश्च दृश्यते। ब्रह्मक्षत्रयोर्मृत्योश्च तथाविधसम्बन्धलाभाय हि तथाभावरूपणम्। तथाविधवाक्यतात्पर्यविषयीभूतसम्बन्धलाभश्च उपसेचनपदस्य स्वयं संहार्यत्वे सत्यन्यसंहारहेतुत्वरूपान्तरङ्गाकारेण गौणवृत्तिं, ओदनपदस्य प्रथमश्रुतस्यापि संहार्यत्वरूपबहिरङ्गाकारेण गौणवृत्तिञ्च विना न सम्भवति। ओदनोपसेचनपदयोर्द्वयोरपि गौणवृत्तावाश्रयणीयायां वाक्यतात्पर्यानुगुणवृत्तेरेव युक्ततया प्रथमश्रुतेऽप्योदनपदे बहिरङ्गाकारेण गौणवृत्तिर्न दोषः।

न चैवमपि ब्रह्मक्षत्रपदयोर्न चराचरलक्षणा समाश्रयणीया; मृत्युसंहारपूर्वककृत्स्नब्रह्मक्षत्रसंहर्तृत्वमात्रस्य परमात्मत्वहेतुत्वसम्भवादिति वाच्यम्। 'विशेषविधिश्शेषनिषेधं गमयति' इति न्यायेन ब्रह्मक्षत्रेतरनिषेधवारणाय कृत्स्नलाभार्थं चराचरलक्षणाङ्गीकारात्। यस्य चेत्यस्य वाक्यस्य यच्छब्दयोगेनानुवादतया पुरोवादे च सद्विद्यावाक्ये 'सदायतनास्सत्प्रतिष्ठाः' (छा० ६-८-४) इति कृत्स्नसंहार्यत्वावगमात् तदनुसारेण लक्षणाश्रयणाच्च। तस्मादोदनोपसेचनसूचितोऽत्ता चराचरसंहर्ता परमात्मैव।

॥ इति अत्त्रधिकरणम् ॥

## (३) ॥ अथ अक्ष्यन्तराधिकरणम् ॥

**सू०॥ अन्तर उपपत्तेः ॥ १३ ॥**

**सू०॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥**

**सू०॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥**

**सू०॥ अत एव च स ब्रह्म ॥ १६ ॥**

**सू०॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥**

**सू०॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ १८ ॥**

अक्ष्यन्तराधिकरणे—'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदभयममृतमेतद्ब्रह्म एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति एष एव वामनिः एष एव भामनिः' (छा० ४-१५-१) इत्यत्र यदेतच्छब्दावगतप्रत्यक्षसिद्धत्वदृश्यत्वयोः प्रमाणान्तरागोचरे ब्रह्मणि कथञ्चिदप्यसम्भवात् प्रतिपदं प्रथमश्रुतप्रत्यक्षसिद्धपरैतच्छब्दबलेन सङ्कोचनीयामृतत्वादीनामितिकरणावगतारोपितात्मत्वस्य च प्रतिबिम्बादौ कथञ्चित्सम्भवाच्चायमक्ष्याधारः प्रतिबिम्बजीवादित्यान्यतम एवेति प्राप्तय—

'मनो ब्रह्म' (छा० ३-१८-१) इत्यादिस्थले विभिन्नार्थकसमानाधिकरणपदद्वयसमभिव्याहृतेतिकरणस्यारोपावगमकत्वेऽपि इत्यब्रवीदित्यादाविवाप्तसंवादावगमकतयाप्युपपत्तेरात्मत्वस्य तात्त्विकत्वासिद्धेरमृतत्वाद्यनेकसङ्कोचायोगात् श्रुतिप्रसिद्धिमादाय यदेतच्छब्दयोः योगिदृश्यत्वेन दृश्यत इत्यस्य च ब्रह्मण्युपपत्तेश्चक्षुः स्थित्यादेः प्रतिबिम्बादावसम्भवाच्चायमक्ष्याधारः परमात्मेति सिद्धान्तितम्।

॥ इत्यक्ष्यन्तराधिकरणम् ॥

---

## (४) ॥ अथान्तर्याम्यधिकरणम् ॥

**सू०॥ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् । १९ ॥**

**सू०॥ न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥**

**सू०॥ उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥**

अन्तर्याम्यधिकरणे—'य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' (बृ० ३-७-२) इत्युपक्रम्य 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः' (बृ० ३-७-३) इत्यादिना काण्वमाध्यन्दिनपाठयोः श्रूयमाणोऽन्तर्यामी जीव एव । 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता' (बृ० ३-७-२३) इत्यादिवाक्यशेषे श्रूयमाणस्य चक्षुरादिकरणायत्तज्ञानवत्स्वरूप-द्रष्टृत्वादेः 'न तस्य कार्यं करणञ्च विद्यते' (श्वे० ६-८) 'अवर्णमचक्षुः-श्रोत्रम्' (मु० १-१-६) इति करणरहितत्वेनावगते परमात्मन्यसम्भवात् । 'यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' (छा० ८-१२-४) इत्यादिप्रजापतिवाक्योक्तरीत्या जीव एव द्रष्टृत्वादिधर्मान्वयात् 'अनेन जीवेना-त्मनानुप्रविश्य' (छा० ६-३-२) इति जीवद्वारकानुप्रवेशे जीवानुप्रवेशावश्य-म्भावेन कर्मद्वारा देहादिनियमनसम्भवेन चान्तःप्रविश्यनियन्तृत्वरूपान्तर्यामित्वस्य जीवेऽपि सम्भवात्, समुदायाभिप्रायेण 'यः पृथिव्यां' (बृ० ३-७-३) इत्येकवचनोपपत्तेश्च । तथा च तत्र तत्र कल्पेषु उपचितपुण्यविशेषो जीव एवान्तर्यामी । तादृशं विनान्यस्य पृथिव्यादिविपुलपदार्थनियमनशक्त्ययो-गात् । जनकेन मुमुक्षूपास्यब्रह्मनिष्ठाय गोसहस्रदानकर्तव्यताबुद्ध्या दीय-मानगोसहस्रप्रतिग्रहाधिकारस्तव कथं नु स्यात् किं त्वया तादृशान्तर्यामिब्रह्म-स्वरूपं ज्ञातमित्युद्दालकेन याज्ञवल्क्यं प्रति पृष्टे पृथिव्यादेस्तव च यन्निरुक्तान्तर्यामि-जीवस्वरूपं तदेव मुमुक्षूपास्यं ब्रह्मेति तेनोत्तरमुक्तं भवतीति मुमुक्षूपास्यत्वस्य जगत्कारणत्वव्याप्यतया तत्र जगज्जन्मादिकारणत्वलक्षणा(दि)[ति]व्याप्तिरिति पूर्वः पक्षः ।

सिद्धान्तस्तु—'य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति तमन्तर्यामिणं ब्रूहि' (बृ० ३-७-२) इति सामान्यतस्सर्वा-

न्तर्यामिणमेकं ज्ञातवतोद्दालकेनान्तर्यामिविशेषप्रश्ने कृते तदुत्तरतया प्रवृत्ते 'यः पृथिव्यां तिष्ठन्' (बृ० ३-७-३) इत्यादिपर्याये एकस्यैव चेतनाचेतनसर्ववस्त्वन्तर्यामित्वसर्वशरीरत्वसर्वान्तरत्वसर्वविद्यत्वसर्वात्मत्वनिरुपाधिकामृतत्वानां बहूनां सुबालोपनिषदि नारायणे प्रसिद्धानामिह स्वरसतः प्रतीयमानानामबाधाद्वाक्यशेषोक्तानां द्रष्टृत्वादीनां लाघवेन, रूपसाक्षात्काराश्रयत्वशब्दसाक्षात्काराश्रयत्वादिरूपाणां सर्वसाक्षात्कर्तरि परमात्मन्युपपत्तेः 'द्वे ब्रह्मणी वेदितव्ये' इति परमात्मस्वरूपवत्प्रत्यगात्मस्वरूपस्यापि वेदितव्यत्वेनोपदेशेन परमात्मश्रवणादौ स्वस्यापि श्रवणादिसत्त्वेन 'अश्रुतः श्रोता' (बृ० ३-७-२३) इत्यादौ श्रवणाद्यकर्मत्वे सति श्रवणादिकर्तृत्वरूपश्रोतृत्वाद्युक्त्यनुपपत्तेः काण्वमाध्यन्दिनपाठयोरुभयोरपि 'य आत्मनि तिष्ठन्' 'यो विज्ञाने तिष्ठन्' (बृ० ३-७-२२) इति भेदाद्दाधाराधेयभावोपपादनेनान्तर्यामिणः प्रत्यगात्मभेदाधीतेः 'नान्योऽतोऽस्ति द्रष्टा' (बृ० ३-७-२३) इत्यादिना द्रष्टृत्वादिमतश्चेतनस्य सत्त्वेऽपि समानमितरच्चे ...... वैशेषिकाङ्गसजातीयवैशेषिकाङ्गलाभवदिहापि निषेध्यपरमात्मतुल्यस्य द्रष्ट्रन्तरादेर्निषेधोपपत्तेश्च अयमन्तर्यामी परमात्मैवेति ।

॥ इत्यन्तर्याम्यधिकरणम् ॥

---

## (५) ॥ अथ अदृश्यत्वाधिकरणम् ॥

### सू०॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥

### सू०॥ विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ॥ २३ ॥

### सू०॥ रूपोपन्यासाच्च ॥ २४ ॥

**अदृश्यत्वाधिकरणे—**

'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥'
(मु० १-१-६) इति

तथा—

'दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥' (मु० २-१-२)

इति च मुण्डके श्रूयते । तत्र किं भूतयोन्यक्षरं प्रधानं, किं वा अक्षरात्परश्चतुर्मुखः किमुभयत्र परमात्मेति सन्देहे अबालोऽयमतरुणोऽयमित्यादाववस्थान्तरापन्नपुरुषप्रतीतेरानुभाविकत्वेन नञिवयुक्तन्यायाददेश्यमित्यादौ अवस्थान्तरापन्नसूक्ष्माचेतनप्रतीतेः, अद्रेश्यमित्यादिनिषेधानां धर्मिसापेक्षाणामुपस्थितसूक्ष्माचेतनधर्मिकत्वमेव न्याय्यमिति भूतयोन्यक्षरं प्रधानमेव । तथा 'दिव्यो ह्यमूर्तः पुरुषः' इति वाक्ये 'स बाह्याभ्यन्तरो ह्यजः' इति चतुर्मुखप्रसिद्धाजपदश्रुतिसामानाधिकरण्यात् स्वविकारेभ्यः परतो भूतयोन्यक्षरात्परश्चतुर्मुख इत्यस्मिन्प्रकरणे अधिष्ठेयाधिष्ठातृप्रधानचतुर्मुखयोस्सकलप्रदर्शनमिति चतुर्मुखाधिष्ठितं प्रधानमपि जगत्कारणमिति पूर्वपक्षं प्राप्य—

'यथोर्णनाभिः सृजते गृह्णते च' (मु० १-१-७) इत्यादिना 'तथाक्षरात्सम्भवतीह विश्वम्' (मु० १-१-७) इति विश्वशब्दोक्तकृत्स्नचेतनाचेतनप्रपञ्चकारणत्वस्य 'यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः' (मु० १-१-९) इति सर्वज्ञत्वस्य तपश्शब्दितसङ्कल्पस्य 'तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते' (मु० १-१-९) इति ब्रह्मशब्दोक्तप्रधानकारणत्वस्य च परमात्मधर्मस्यादृश्यत्वादिधर्मिण्युक्तत्वात 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्' (मु० १-१-१) इत्यादिना एकविज्ञानेन सर्वविज्ञानादिसन्निहितवाक्यसमाम्नातानेकचेतनाचेतनव्यावर्तकधर्मव्यपदेशात् अक्षरात्प्रधानात्परतः परस्माज्जीवात्पर इत्यनध्याहारयोजनास्वारस्यावगतप्रत्यगात्मादिभेदव्यपदेशात्, 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' (मु० २–१–४) इत्यादिपरमात्मरूपस्य श्रुतिस्मृत्यादिप्रसिद्धस्यात्रादृश्यत्वादिगुणके प्रतिपादनाच्च भूतयोन्यक्षरमक्षरात्परतः परश्च परमात्मेति सिद्धान्तितम् ।

॥ इत्यदृश्यत्वाधिकरणम् ॥

---

## (६) ॥ अथ वैश्वानराधिकरणम् ॥

**सू०॥ वैश्वानरस्साधारणशब्दविशेषात् ॥ २५ ॥**

**सू०॥ स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥**

**सू०॥ शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २७ ॥**

**सू०॥ अत एव न देवता भूतञ्च ॥ २८ ॥**

**सू०॥ साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥**

**सू०॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥**

**सू०॥ अनुस्मृतेर्बादरिः ॥ ३१ ॥**

**सू०॥ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३२ ॥**

**सू०॥ आमनन्ति चैनमस्मिन् ॥ ३३ ॥**

वैश्वानराधिकरणे—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छा० ५-१८-१) इत्यत्र—

'अयमग्निर्वैश्वानरः येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यदेतत्कर्णावपिधाय शृणोति' (बृ० ५-९-१) इति जाठराग्नौ,

'विश्वस्मा अग्निं भुवनाय देवाः । वैश्वानरं केतुमह्नामकृण्वन्' इति महाभूततृतीये,

'वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः' (यजु-का० १-५-११) इति देवतायां,

'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' (प्रश्न० १-७)

इति परमात्मनि च वैश्वानरशब्दस्य प्रयोगदर्शनात् चतुर्ष्वप्यर्थेषु साधारण्यात् केकयेन पृष्टैः प्राचीनशालादिभिर्द्युप्रभृतिषु वैश्वानरात्मदृष्टेर्वर्णिततया 'को न आत्मा किं ब्रह्म' (छा० ५-११-१) इति तदीयवाक्यगतात्मशब्दब्रह्म-

शब्दयोरपि दृष्टिविषयत्वमाश्रित्याब्रह्मविषयत्वौचित्याच्च, त्रेताग्निपरिकल्पनादेरपि ज्ञानरूपतयाग्निभिन्नेऽपि सम्भवेनाग्न्यसाधारणलिङ्गत्वाभावात् अयमेव वैश्वानर आत्मेत्यशक्यनिर्णय इति प्राप्ते—,

'को न आत्मा किं ब्रह्म' (छा० ५-११-१) इति जीवात्मनामात्मभूतवैश्वानरात्मस्वरूपं जिज्ञासमानानां अन्योन्योपास्यद्युप्रभृतिषु वस्तुतस्तथाभूतं ब्रह्म किमेतेषामन्यतममन्यद्वेति निर्दिधारयिषया तदभिज्ञं केकयमुपसन्नानां तेन च राज्ञा समुपदिष्टवैश्वानरस्वरूपाणां स्वस्वभ्रमनिवृत्तिं प्राप्तानां प्राचीनशालादीनां वाक्यस्थात्मब्रह्मदृष्टिविषयत्वेन गौणत्वशङ्कानवकाशात् 'सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा० ५-२४-२,३) इति ब्रह्मानुभवसर्वपापप्रदाहरूपफलश्रवणात् त्रैलोक्यशरीरकत्वश्रवणाच्चायं वैश्वानर आत्मा परमात्मैवेति सिद्धान्तितम् ॥

**इति श्रीमल्लक्ष्मणार्यंकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचिताय**
**श्रीभाष्यप्रकाशिकायां**
**प्रथमस्याध्यायस्य**
**द्वितीयः पादः**

**अधिकरणानि ६. सूत्राणि ३३.**

---

## ॥ तृतीयः पादः ॥

### (१) ॥ द्युभ्वाद्यधिकरणम् ॥

सू०॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

सू०॥ मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥

सू०॥ नानुमानमतच्छब्दात्प्राणभृच्च ॥ ३ ॥

सू०॥ भेदव्यपदेशाच्च ॥ ४ ॥

सू०॥ प्रकरणात् ॥ ५ ॥

सू०॥ स्थित्यदनाभ्यां च ॥ ६ ॥

तृतीये पादे हेतुतावच्छेदकरूपेण शाब्दत्वरूपस्पष्टताकजीवादिलिङ्गकानि वाक्यान्युदाहृत्य चिन्त्यन्ते ।

द्युभ्वाद्यधिकरणे—

'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः ।
तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ।
अरा इव रथनाभौ संहता यत्र नाड्यस्स एषोऽन्तश्चरते बहुधा जायमानः ।'

(मु० २-२-५, ६)

इति मुण्डके श्रूयते । मनःपदसमभिव्याहारात् बहुवचनान्तप्राणशब्दात् ओतशब्दबलाच्च करणित्वरूपं जीवलिङ्गं शाब्दम् । तथा 'अरा इव रथनाभौ' इति दृष्टान्तेन संहता इत्यनेन च नाडीबद्धत्वं जीवलिङ्गं स्फुटम् । तथा अन्तश्चरत इत्युक्तं हृदयस्थत्वं बहुधाजायमानत्वञ्च जीवलिङ्गम् । तत्र करणित्वं नाडीबद्धत्वञ्च विलक्षणसम्बन्धघटितं हेतुतावच्छेदकत्वरूपेण शाब्दं स्पष्टमेव । शिष्टं लिङ्गद्वयमभ्युच्चयरूपम् । तत्र द्युपृथिव्याद्यायतनं जीवः परमात्मा वेति संशय्य मनःप्राणोपकरणित्वनाडीबद्धत्वहृदयस्थत्वबहुधाजायमानत्वलिङ्गैरदृष्टद्वारा द्युपृथिव्याद्याधारभूतो जीवः प्रकृतिविनिर्मुक्त उपास्य इति शङ्कायां—

'तमेवं विद्वानमृतः' (पुरुषसूक्तं) इत्यादावमृतशब्दस्य मुक्तौ प्रसिद्धिप्राचुर्यात् 'अमृतस्यैष सेतु' रित्युक्तमुक्त्युपायत्वस्य परमात्मासाधारण्यात् अविशेषितात्मशब्दस्यासङ्कोचवृत्त्या सर्वनियन्तृत्ववाचिनः परब्रह्मासाधारणत्वात् द्युपृथिव्याद्याधारत्वस्य प्रथमश्रुतस्य तत्रैव युक्तत्वात्, सर्वाधारे परमात्मनि 'सन्ततं सिराभिः' (तै० नारायणानु-१३) इत्युक्तनाड्याधारत्वस्य देवाद्यवताररूपेण बहुधाजायमानत्वस्य 'एष आत्मान्तर्हृदये' (छा० ३-१४-३) 'हृद्देशेऽर्जुन तिष्ठति' (गीता० १८-६१) इत्यादिरीत्या हृदयस्थ[त्वस्या]न्तश्चरणस्य च परमात्मन्युपपत्तेर्भूतयोन्यक्षरप्रकरणाच्च द्युपृथिव्याद्यायतनं परब्रह्मैवेति समाहितम् ॥

॥ इति द्युभ्वाद्यधिकरणम् ॥

---

## (२) ॥ अथ भूमाधिकरणम् ॥

## सू०॥ भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥
## सू०॥ धर्मोपपत्तेश्च ॥ ८ ॥

भूमाधिकरणे—'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा० ७-२४-१) इत्यत्र 'तरति शोकमात्मवित्' (छा० ७-१-३) इति प्रक्रान्तस्यात्मोपदेशस्य वागादिप्राणपर्यन्तेषु प्रश्नप्रतिवचनाभ्यामनुवर्तमानस्य प्राणादुपरि प्रश्नप्रतिवचनाभावेन प्राणे परिसमाप्त्यवगमात् प्राणसहचारी प्रत्यगात्मैव 'तरति शोकमात्मवित्' (छा० ७-१-३) इत्युपक्रान्त इत्यवगम्यते। तथा 'प्राणो हि पिता प्राणो भ्राता' (छा० ७-१५-१) इति पितृत्वभ्रातृत्वादिलिङ्गात् प्राणशब्दोक्तः प्रत्यगात्मा न प्राणवायुमात्रमिति गम्यते। तथा 'स यदि पितरं वा मातरं वा' (छा० ७-१५-२) इत्यादिना सप्राणेषु पितृप्रभृतिषूपक्रोशकारिणि 'पितृहा वै त्वमसि' (छा० ७-१५-२) इत्यादिना हिंसकत्वनिमित्तोपक्रोशवचनात् विगतप्राणेषु पित्रादिषु 'यद्यप्येनानुत्क्रान्तप्राणान्' (छा० ७-१५-३) इत्यादिना उक्तादत्यन्तोपक्रोशकारिणि 'नैनं ब्रूयात्पितृहासि' (छा० ७-१५-३) इत्यादिनोपक्रोशाभाववचनाच्च परमात्मनो हिंसकत्वोत्क्रान्त्योरभावेन हिंसोत्क्रमणान्वयार्हः प्रत्यगात्मा प्राणशब्द-

निर्दिष्ट इत्यवगम्यते। ततश्च 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' (छा० ७-१५-४) इति प्राणवेदिनमतिवादिनं 'एष तु वा अतिवदति यस्सत्येनातिवदति' (छा० ७-१६-१) इत्येतच्छब्देन [अनूद्य] तस्य तुशब्देनाङ्गविशेषविशिष्टतासूचनमुखेन सत्यवदनरूपाङ्गविशेषं विधाय प्राणयाथात्म्यविज्ञानसिद्ध्यर्थं मननश्रद्धादीनुपदिश्य तदारम्भाय प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य विपुलसुखरूपत्वोपदेशौचित्यात् भूमगुणविशिष्टः प्रत्यगात्मेति पूर्वपक्षे—

'एष तु वा अग्निहोत्री यस्सत्यं वदति' इत्यादिषु अग्निहोत्र्यन्तराभावेनागत्या तुशब्दस्याङ्गविशेषविशिष्टतारूपवैलक्षण्यमात्रावगमकत्वाङ्गीकारेऽप्यत्रातिवदतीत्युक्तातिवादिसमानाधिकरणैतच्छब्दसमभिव्याहृततुशब्दस्वारस्यावगतातिवाद्यन्तरस्य सत्यवेदिनस्सम्भवेन क्लिष्टगत्याश्रयणासम्भवात्, सत्याख्योपास्यान्तरस्य सत्यवेद्यतिवदननिमित्तस्यातिक्रान्तस्वोपास्यवस्तुवदनरूपप्राणवेद्यतिवदननिमित्तभूतात् प्राणशब्दार्थप्रत्यगात्मनः संप्रसाददधिकतया अतिरिक्ततयोपदेशात्तस्यैव सत्याख्योपास्यस्य प्राप्यत्वाय 'यत्र नान्यत्पश्यति' (छा० ७-२४-१) इत्यत्र निरतिशयसुखरूपता प्रतिपाद्यत इति प्रक्रान्तोऽयमात्मा भूमगुणविशिष्टः सत्याख्यः परमात्मैवेति सिद्धान्तः।

॥ इति भूमाधिकरणम् ॥

---

## (३) ॥ अथ अक्षराधिकरणम् ॥

**सू०॥ अक्षरमम्बरान्तधृतेः ॥ ९ ॥**

**सू०॥ सा च प्रशासनात् ॥ १० ॥**

**सू०॥ अन्यभावव्यावृत्तेश्च ॥ ११ ॥**

अक्षराधिकरणे—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ० ३-८-८) इत्यत्र किमक्षरं प्रधानं, जीवः, परमात्मेति संशये प्रधानपरमात्मनोरुभयोरक्षरशब्दप्रयोगे सत्यपि प्रमाणान्तर-

प्रसिद्धश्रुतिप्रसिद्ध्योः प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीततया तदतिलङ्घने कारणा- भावात् अक्षरमत्र प्रधानमेव। 'क्षरं प्रधानममृताक्षरं हरः' (श्वे० १-१०) 'कूट- स्थोऽक्षरः' (गीता० १५-१६) इत्यादौ अक्षरशब्दस्य प्रत्यगात्मन्यपि प्रयोगात्, अदृष्टद्वारा सकलकार्याधारत्वसम्भवात्, अस्थूलत्वादिधर्मोपपत्तेश्चाक्षरं प्रत्यगात्मा वेति प्रापय्य—

'यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतञ्च प्रोतञ्च' (बृ० ३-८-६) इति सकलविकाराधारविशेषप्रश्नस्योत्तरे 'आकाश एव तदोतञ्च प्रोतञ्च' (बृ० ३-८-६) इति वाक्ये विकारान्तर्गतभूताकाशस्य सकलविकाराधारत्वायोगेन आकाशशब्दस्य कार्यवाचिनः कारणीभूतप्रधानपरत्वावश्यम्भावेन प्रधानस्याप्या- धारप्रश्नोत्तरे 'एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (छा० ३-८-११) इति वाक्ये सकलविकाराश्रयाकाशशब्दोक्तप्रधानस्याप्या- धारतया निर्दिश्यमानमक्षरं न प्रधानं भवितुमर्हति स्वस्य स्वाधारत्वायोगात्। प्रमाणान्तरप्रसिद्धत्वाभावात् सूक्ष्मस्य प्रधानस्य प्रथमप्रतीतत्वमसिद्धम्। सूक्ष्मस्यातीन्द्रियत्वात् प्रत्यक्षाविषयत्वात्। साङ्ख्योक्तानुमानस्य निराकरिष्य- माणतयानुमानाविषयत्वाच्च। व्युत्पत्तिकाले प्रधानस्य प्रथमप्रतीतावपि शाब्दकाले प्रमाणान्तरनैरपेक्ष्येण तत्कृतवैषम्यायोगात्। 'एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (छा० ३-८-९) इत्यादिना प्रशासनपूर्वकधा- रणस्याचेतने प्रधाने कर्मप्रतिबद्धज्ञानशक्तिसङ्कल्पादिके प्रत्यगात्मनि चासम्भवात्, 'अदृष्टं द्रष्टृ अश्रुतं श्रोतृ नान्योऽतोऽस्ति द्रष्टृ' (छा० ३-८-११) इत्यादि- वाक्यशेषोक्तनिरुपाधिकसर्वद्रष्टृत्वादीनां प्रधानप्रत्यगात्मनोरसम्भवाच्च नाक्षरं प्रधानं प्रत्यगात्मा वेति राद्धान्तितम्।

॥ इत्यक्षराधिकरणम् ॥

---

## (४) ॥ अथ ईक्षतिकर्माधिकरणम् ॥

## सू०॥ ईक्षतिकर्म व्यपदेशात्सः ॥ १२ ॥

ईक्षतिकर्माधिकरणे—'यः पुनरेतं त्रिमात्रेण ओमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तस्ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (प्रश्न० ५-५) इत्यत्र एकमात्रद्विमात्राकारप्रणवकरणकोपासनफलतया निर्दिष्टमनुष्यलोकान्तरिक्षलोकसहपाठेन ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरतया चतुर्मुखलोकगतेन त्रिमात्रप्रणवोपासननिष्ठपुरुषेणेक्ष्यमाणत्वलिङ्गादीक्षतिकर्म सत्यलोकाधिपतिश्चतुर्मुख एव। देहेन्द्रियादिभ्यः पराज्जीवघनात् जीवसङ्घातात्परत्वमपि तस्य सम्भवतीति पूर्वपक्षं कृत्वा—

'यत्तच्छान्तमजरममृतमभयं परञ्च' (प्रश्न० ५-७) इत्यनन्तरश्लोकोक्ताजरत्वादीनां परमात्मधर्माणां व्यपदेशाज्जीवघनशब्दोक्तजीवसङ्घातान्तर्गतस्य चतुर्मुखस्य जीवघनात्परत्वायोगात् 'यथा पादोदरस्त्वचा विनिर्मुक्तः' (प्रश्न० ५-५) इत्युक्तसर्वपापप्रहाणात्मकफलकीर्तनात् 'यः पुनरेतं त्रिमात्रेण' (प्रश्न० ५-५) इत्यादिपरमात्मोपासनप्रकरणाच्च बलवदनेकलिङ्गप्रकरणानुरोधेन प्रायपाठस्य बाध्यत्वेन द्युलोकादिव्यवधानेन प्रायपाठासिद्ध्या चात्र ध्यायतीक्षतिकर्म परमात्मेति सिद्धान्तितम् ॥

॥ **इतीक्षतिकर्माधिकरणम्** ॥

---

## (५) ॥ अथ दहराधिकरणम् ॥

## सू०॥ दहर उत्तरेभ्यः ॥ १३ ॥

## सू०॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च ॥ १४ ॥

## सू०॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥

## सू०॥ प्रसिद्धेश्च ॥ १६ ॥

**सू०॥ इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १७ ॥**

**सू०॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥**

**सू०॥ अन्यार्थश्च परामर्शः ॥ १९ ॥**

**सू०॥ अल्पश्रुतेरिति चेत्तदुक्तम् । २० ॥**

**सू०॥ अनुकृतेस्तस्य च ॥ २१ ॥**

**सू०॥ अपि स्मर्यते ॥ २२ ॥**

'दहर उत्तरेभ्यः' इत्यत्र—'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छा० ८-१-१) इत्यत्र दहराकाशो भूताकाश एव। परमात्मनि 'यदेष आकाश आनन्दो न स्यात्' (तै० २-७) इत्यादौ आकाशशब्दप्रयोगेऽपि भूताकाशे रूढिशक्तेः प्रसिद्धिप्राचुर्याच्च। 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (छा० ८-१-१) इत्यन्वेष्टव्यान्तराधारत्वेन श्रुतत्वात्परमात्मन्यन्वेष्टव्यान्तराभावाच्च। न च 'एष आत्मा अपहतपाप्मा' (छा० ८-१-५) इत्यादिश्रुतापहतपाप्मत्वाद्यनुपपत्तिर्भूताकाश इति वाच्यम्। तस्य आसमंतात्काशत इति व्युत्पत्त्या प्रकाशगुणयोगेन आकाशपदप्रवृत्तेश्च तस्मिन्यदन्तरित्युक्तान्वेष्टव्यपरमात्माधारत्वसम्भवाच्च, प्रजापतिवाक्योक्तरीत्यापहतपाप्मत्वादिसम्भवाच्च।

सिद्धान्तस्तु—नायं भूताकाशः किन्तु परमात्मा। 'यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' (छा० ८-१-३) इत्याद्युत्तरवाक्यावगताकाशौपम्यसर्वाधारत्वब्रह्मपुरत्वकामशब्दितगुणाकरत्वापहतपाप्मत्वादिधर्मेभ्यः। न चैतेषामन्वेष्टव्यगतत्वं वक्तुं शक्यम्। 'तावानेषोऽन्तर्हृदय आकाशः' (छा० ८-१-३) इति दहराकाशस्यैव परमार्शेनान्वेष्टव्यगतत्वप्रतीतेः।

किञ्च दहराकाशः परमात्मा, तदन्तर्वर्ति च गुणजातमिति श्रुतिरेव व्यभाङ्क्षीत्। तथा हि 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (छा० ८-१-१) इत्युक्तं दहराकाशमन्तर्वर्ति च विवरीतुं 'किं तदत्र विद्यते यदन्वेष्टव्यम्' (छा० ८-१-१) इत्युपक्षिप्य 'यावान्वायमाकाशस्तावानेषोऽन्त-

हृदय आकाशः' (छा० ८-१-३) इति बाह्याकाशौपम्येन दहराकाशस्य भूताकाशाद्यतिरिक्ततां महत्ताञ्च दर्शयित्वा 'उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' (छा० ८-१-३) इति द्यावापृथिव्यादिसर्वाधारत्वमुक्त्वा 'नास्यैतज्जरया जीर्यति' (छा० ८-१-५) इत्यादिना शरीरान्तर्वर्तिनोऽपि दहराकाशस्य शरीरजरादिप्रयुक्तजरादिराहित्यमुक्त्वा, 'सत्यं ब्रह्मपुरम्' (छा० ८-१-५) इति निषादस्थपतिन्यायेन ब्रह्मैव पुरमिति ब्रह्माख्यपुरत्वञ्चोक्त्वा 'अस्मिन् कामास्समाहिताः' (छा० ८-१-५) इति तदन्तर्वर्ति च गुणजातमिति कामशब्देनोक्त्वा 'एष आत्मापहतपाप्मा' (छा० ८-१-५) इत्यादिना अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तं गुणजातमिति विविच्य 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' (छा० ८-१-६) इति दहराकाशात्मनो गुणजातस्य चोपासनं मोक्षरूपफलेन सहोपसंहृतम् । तस्मान्न दहराकाशो भूताकाशस्तदन्तर्वर्ति च परमात्मा । तत एव च न दहराकाशः प्रत्यगात्मा । अपि तु परमात्मा दहराकाशस्तदन्तर्वर्ति च गुणजातमिति ॥

**॥ इति दहराधिकरणम् ॥**

---

## (६) ॥ अथ प्रमिताधिकरणम् ॥

### सू०॥ शब्दादेव प्रमितः ॥ २३ ॥

### सू०॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥

प्रमिताधिकरणे—

'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥' (कठ० ४-१२)

इत्यादावङ्गुष्ठप्रमितः, प्रत्यगात्मा परमात्मा वेति विशये, परममहति परमात्मनि प्रत्यगात्मन्यणुस्वरूपे चाङ्गुष्ठप्रमितत्वस्य हृदयौपाधिकत्वाविशेषेऽपि, जीवे अङ्गुष्ठमात्रत्वस्य 'प्राणाधिपस्सञ्चरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः' (श्वे० ५-७, ८)

इति श्रुत्यन्तरप्रसिद्धतया प्रथमश्रुताङ्गुष्ठप्रमितत्वस्यैव (श्रुतौ प्रसिद्ध) बलादीशानत्वं देहेन्द्रियादिसावधिकं जीवेऽपि सङ्कुचितं भवतीति प्रमितः प्रत्यगात्मेति शङ्कायाम्—,

'ईशानो भूतभव्यस्य' (कठ० ४-१३) इत्युक्तासङ्कुचितसमस्तचिदचिन्नियन्तृत्वस्य 'अन्तः प्रविष्टश्शास्ता जनानाम्' (तै० आरण्यक) इत्यादौ परमात्मनि प्रसिद्धस्य सङ्कोचे भूतभव्यशब्दार्थसङ्कोचदोषापातेन प्रमितत्वप्रसिद्धिपरित्यागे अङ्गुष्ठमात्रशब्दार्थसङ्कोचदोषा(भावेन)[पातेन] प्रमितत्वप्रसिद्धेरेव त्यागौचित्यात् परमात्मनोऽप्युपासकहृदयस्थत्वेन हृदयोपाधिकस्य अङ्गुष्ठप्रमितत्वस्य सम्भवात्प्रमितः परमात्मा इति समाहितम् ॥

॥ इति प्रमिताधिकरणम् ॥

---

(७) ॥ अथ देवताधिकरणम् ॥

**सू०॥ तदुपर्यपि बादरायणस्सम्भवात् ॥ २५ ॥**

**सू०॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २६ ॥**

**सू०॥ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम ॥ २७ ॥**

**सू०॥ अत एव च नित्यत्वम ॥ २८ ॥**

**सू०॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ २९ ॥**

'तदुपर्यपि बादरायणः' इत्यत्र—देवानां ब्रह्मविद्यायामधिकारोऽस्ति न वेति प्रसङ्गाच्चिन्त्यते। नास्त्यधिकारो देवानामर्थित्वाद्यभावात्। तदभावश्च देवतानां चैतन्यादौ प्रमाणाभावात्। तथा हि न तावच्चोदना तत्र प्रमाणं, तस्याः कर्मकरणेतिकर्तव्यतारूपांशत्रयविशिष्टभावनाबोधकतयैव चरितार्थत्वेन देवताचैतन्यादावप्रमाणत्वात्। प्रवर्तको हि विधिः प्रवृत्त्यनुकूलमेवार्थं विषयीकरोति। देवताचैतन्यादिकञ्च न तथाभूतम्। नाप्यर्थवादः तत्र प्रमाणम्। पूर्व-

तन्त्रोक्तार्थवादाधिकरणन्यायेन विध्यपेक्षितप्राशस्त्यसमर्पकतयैव स्वाध्यायविध्यवगतप्रयोजनवदर्थवत्तावश्यम्भावेनानपेक्षितनिष्फलदेवताचैतन्यादौ तात्पर्यासम्भवात् । नापि मन्त्रभागास्तत्र प्रमाणम् । तेषामपि मन्त्राधिकरणोक्तन्यायेनानुष्ठेयार्थस्मारकतयैव लब्धप्रयोजनानां अनुपयुक्तदेवताचैतन्यादौ तात्पर्यायोगात् । नामधेयानामपि विहितधात्वर्थपरिच्छेदकतया देवताचैतन्यादिबोधकतायामसमर्थत्वात् । आकाशाद्यचेतनसृष्टिवत् इन्द्रादिदेवतासृष्टेरप्युपपन्नतया सृष्टिवाक्यादपि देवताचैतन्याद्यसिद्धेश्च । विद्यासन्निधावाम्नातानां 'प्रतर्दनो ह वै दैवोदासिः' (कौषी० ३-१) इत्याद्याख्यानानां पारिप्लवार्थाधिकरणन्यायेन विद्यास्तावकतया विद्यार्थानां देवताचैतन्यादिपरतायां मानाभावात् । प्रत्युत देवतानां विग्रहादिमत्त्वे युगपदाहूतानामनेकयज्ञवाटेषु सन्निधानानुपपत्तिः । तस्माद्देवानां चैतन्ये विग्रहादिमत्त्वे च प्रमाणाभावेन मुमुक्षारूपार्थित्वाभावात् पटुतरदेहेन्द्रियादिमत्त्वरूपसामर्थ्याभावात् (अध्ययनतिरस्कृत) स्वाध्यायसम्पादितार्थज्ञानवत्तारूपविद्वत्ताभावाच्च न देवानां विद्याधिकार इति पूर्वपक्षः ।

राद्धान्तस्तु—देवानामप्यस्ति विद्याधिकारः । तेषां विध्यर्थवादादिभिः चैतन्यविग्रहादेः स्फुटमवगमात् । विधिना तावत् 'सोमेन यजेत' इति यजिना याग उच्यते । यागश्च देवपूजा । 'यज देवपूजाया' मित्यनुशासनात् । देवपूजा च देवताप्रीतिजनकव्यापारः । प्रीतिश्च देवतायाश्चैतन्यं विग्रहादिमत्त्वञ्च विना न सम्भवतीति विधेश्चैतन्यादिसिद्धिः । तथार्थवादैश्च तेषां चैतन्यादिस्सिध्यति । लोके स्तुत्येषु नरपतिप्रभृतिषु गाम्भीर्यशौर्यवीर्यधैर्यसौन्दर्यादिगुणकथनेनैव स्तुतिबुद्धिजननवत् वेदेऽपि स्तुत्येन्द्रवाय्वादिषु गुणसौन्दर्यकथनेन विना स्तुतेरनुत्पत्त्या तद्बोधावश्यम्भावे पश्चात्तनबलवत्तरबाधकप्रमाणाभावेन चैतन्यविग्रहादिसिद्धेरप्रत्यूहत्वात् । अत एव हि सतामसतां वा गुणानां कीर्तनात्प्ररोचनेति न्यायविदां वादो दृश्यते । तथा मन्त्रैरपि तेषां तत्सिद्धिरनिवार्या । मन्त्राधिकरणन्यायेन तेषां विहितार्थस्मारकतया निर्विकल्पकस्मरणस्याननुभवनिरस्तत्वेनानुष्ठानाननुकूलत्वेन च सप्रकारकत्वावश्यम्भावे मन्त्रप्रतिपाद्यगुणविग्रहादिप्रकारमतिलङ्घ्य अप्रामाणिकप्रकारान्तरकल्पनस्यातिजघन्यत्वात् मन्त्राणामनुष्ठेयार्थस्मृत्यर्थमेव मन्त्रप्रतिपाद्यविग्रहादिपरतावश्यमभ्युपेया । 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६-३-२)

'नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥' (वि० पु० १-५-६३)

इत्यादिबहुतरवचनेषु देवादीनां शरीरसृष्टिप्रतिपादनात् अचेतनाकाशादिसृष्टि-तुल्यसृष्टिवचनमज्ञानकार्यमेव । देवानां विग्रहादिमत्त्वे युगपदनेकदेशसान्नि-ध्योपपत्तिश्च सौभर्यादिवदनेकशरीरपरिग्रहविशेषादुपपादनीया । तस्माद्देवादीना-मपि चैतन्यादिमत्तयार्थित्वादिसम्भवादस्ति विद्यायामधिकारः ॥

॥ इति देवताधिकरणम् ॥

---

## (८) ॥ अथ मध्वाद्यधिकरणम् ॥

### सू०॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३० ॥
### सू०॥ ज्योतिषि भावाच्च ॥ ३१ ॥
### सू०॥ भावं तु बादरायणोऽस्ति हि ॥ ३२ ॥

मध्वाद्यधिकरणे—'असौ वा आदित्यो देवमधु' (छा० ३-१-१) इत्युपक्रम्य वस्वादिपदप्राप्तिफला वस्वाद्युपास्यविषया मधुविद्या छान्दोग्ये समाम्नाता । तत्र मधुविद्यादौ वस्वादीनामधिकारोऽस्ति न वेति संशये वस्वा-दीनां सतां वस्वादिपदप्राप्तिरूपफलस्य सिद्धतया तत्रेच्छानुपपत्त्यार्थित्वासम्भवात् स्वस्यैव स्वोपासने उपास्यत्वोपासितृत्वरूपकर्मकर्तृभावविरोधाच्च तथाविधविद्या-विशेषेषु तादृशानां वस्वादीनां नाधिकार इति प्राप्ते—

वस्वादीनां सतामपि कल्पान्तरे पुनरपि वस्वादिपदप्राप्तिविषयेच्छास-म्भवात्, वस्वादिपदप्राप्तिपूर्वकभगवत्प्राप्तीच्छायास्सम्भवात्, वस्वाद्यन्तर्यामिपर-मात्मोपासने पूर्वोक्तकर्मकर्तृविरोधाभावाच्चास्ति वस्वादीनां मधुविद्यादिष्वधिकार इति अस्मदाचार्यचरणलक्ष्मणाचार्यविरचिते **मध्वचन्द्रिकाखण्डने शारीरक-भास्करे** विस्तरेणोपपादितम् ।

॥ इति मध्वाद्यधिकरणम् ॥

---

(९) ॥ अथापशूद्राधिकरणम् ॥

**सू०॥ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३३ ॥**

**सू०॥ क्षत्रियत्वगतेश्च ॥ ३४ ॥**

**सू०॥ उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥**

**सू०॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥**

**सू०॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥**

**सू०॥ श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥**

**सू०॥ स्मृतेश्च ॥ ३९ ॥**

'शुगस्य तदनादरश्रवणात्' इत्यत्रापशूद्राधिकरणे—शूद्राणामग्निविरहेण तत्साध्यकर्मानधिकारेऽपि वर्णाश्रमधर्माङ्गकेषु मनोवृत्तिमात्रसाध्येषु ब्रह्मोपासनेषु 'श्रावयेच्चतुरो वर्णान्' (भारते० शान्ति० मोक्ष) इत्यनुशिष्टेतिहासादिश्रवणसिद्धब्रह्मस्वरूपगुणादिज्ञानवत्तया पूर्ववर्णशुश्रूषादिधर्मवत्तया च आध्यात्मिकादितापत्रयाभिहत्या मुमुक्षासम्भवेनार्थित्वादिसद्भावात्, छान्दोग्ये संवर्गविद्यायां 'आजहारेमाश्शूद्रानेनैव मुखेनालापयिष्यथाः' (छा० ४-२-५) इत्यत्र शूद्रेति शिष्यामन्त्रणलिङ्गात् विदुरादीनां ब्रह्मविद्यानिष्ठादर्शनाच्च तेषामपि ब्रह्मविद्याधिकारोऽस्तीति प्राप्ते—

न तावत्तेषां ब्रह्मविद्याधिकारस्सम्भवति। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' (भारत० आदि० १-२७३) इत्यनेन इतिहासोपबृंहितवेदान्तजन्यब्रह्मस्वरूपादिज्ञानस्यैवोपासनाङ्गतया शूद्राणामध्ययनशून्यानां तथाभूतज्ञानात्मकविद्वत्ताविरहात् 'य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्' इत्याद्यवगतपापक्षयफलार्थतया श्रावयेदिति विधानोपपत्त्या स्वातन्त्र्येणार्थज्ञानार्थत्वायोगात् संवर्गविद्यायां शूद्रशब्दस्य 'शुचेर्दश्च' त्युणादिसूत्रव्युत्पन्नस्य 'शुच शोक' इति धातुनिष्पन्नस्य योगेन शोचितृवाचितया जातिवाचित्वाभावात्। न चात्र रूढिप्राबल्यावकाशः। अनादरगर्भहंसवाक्यश्रवणरूपशोककारणेन तदानीमेव रैक्वसकाशाभिद्रवणरूपशोककार्येण च शोकस्य धीस्थतया योगार्थोपस्थापक-

प्रकरणसाचिव्ये सत्यवयवशक्तेरेव बलवत्त्वात् विदुरादीनां भवान्तरार्जितज्ञानविशेषाप्रमोषमहिम्ना प्रारब्धवशेन शूद्रयोनिमापन्नानां ब्रह्मविद्यानिष्ठोपपत्तेः 'चतुर्थो वर्ण एकजातिः न च संस्कारमर्हति' (गौत० १०-९) 'श्रवणे त्रपुजतुभ्यां श्रोत्रपूरणम्। उदाहरणे जिह्वाच्छेदः। धारणे शरीरभेदः' (गौत० २-१२-३) 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इत्युपनयनसंस्कारस्वाध्यायश्रवणाध्ययनार्थप्रतिषेधाच्च न तेषां ब्रह्मविद्याधिकार इति सिद्धान्तः ॥

॥ इत्यपशूद्राधिकरणम् ॥

---

सू०॥ कम्पनात् ॥ ४० ॥

सू०॥ ज्योतिर्दर्शनात् ॥ ४१ ॥

(१०) ॥ अथार्थान्तरत्वाधिकरणम् ॥

सू०॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४२ ॥

सू०॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

सू०॥ पत्यादिशब्देभ्यः ॥ ४४ ॥

अर्थान्तरत्वाधिकरणे च—'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा' (छा० ८-१४-१) इत्यत्र, 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' (छा० ८-१३-१) इत्यनन्तरवाक्ये मुक्तात्मनस्सन्निहितत्वात 'ते यदन्तरा' इत्यत्रापि नामरूपविनिर्मुक्तत्वप्रतिपादनात बद्धावस्थायां मनुष्यादिजन्मपारम्पर्येण देवमनुष्यादिनामरूपाणां नितरां वोढृत्वेन नामरूपवहनकर्तृत्वसम्भवात् मुक्तौ ज्ञानविकासेनाप्राकृतविग्रहदीप्त्या वा आसमन्तात्काशत इत्याकाशपदवृत्तिसम्भवाच्च आकाशो मुक्तात्मेति प्राप्ते—

निर्वोढृशब्दस्य कर्तरि रूढतया रूढिप्राबल्येन नामरूपनिर्वोढृत्वं तत्कर्तृत्वम्। तच्च 'नामरूपे व्याकरवाणि' (छा० ६-३-२) 'नामानि रूपाणि विचित्य धीरः' (पुरुषसूक्त) इत्यादौ परमात्मनि प्रसिद्धम्। मु(क्तेश्च)[क्तस्य च]

'जगद्व्यापारवर्जम्' (ब्र० सू० ४-४-१७) इत्यत्र तन्निराकरिष्यते। किञ्च 'ब्रह्मलोकमभिसम्भवामि' (छा० ८-१३-१) इत्यत्र प्राप्यतया प्रधानस्य ब्रह्मणस्सन्निधिरस्ति। प्रथमान्तपदोपस्थाप्यतया मुक्तस्य शाब्दप्राधान्येऽपि ब्रह्मणः प्राप्यत्वादार्थप्राधान्येन तत्सन्निधिर्बलीयान्। किञ्च दहराकाशस्योपास्यतया प्रक्रान्तस्य प्राप्यतयोपसंहार इति दहराकाशप्रकरणञ्च बलीयः। तदेवं बलवल्लिङ्गसन्निधिप्रकरणैरयमाकाशः परमात्मैवेति सिद्धान्तितम्॥

**इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**प्रथमस्याध्यायस्य**
**तृतीयः पादः**

**अधिकरणानि १०. सूत्राणि ४४.**

---

## ॥ चतुर्थः पादः ॥

### (१) ॥ अथ आनुमानिकाधिकरणम् ॥

सू०॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-
गृहीतेर्दर्शयति च ॥ १॥

सू०॥ सूक्ष्मन्तु तदर्हत्वात् ॥ २ ॥

सू०॥ तदधीनत्वादर्थवत् ॥ ३ ॥

सू०॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥

सू०॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५॥

सू०॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

सू०॥ महद्वच्च ॥ ७ ॥

चतुर्थे पादे स्पष्टतरप्रधानादिलिङ्गकानि वाक्यान्युदाहृत्य तेषां ब्रह्मणि समन्वयश्चिन्त्यत इति पादाध्यायसङ्गतिः। साङ्ख्यतत्त्वप्रतिपादनच्छायापन्नवाक्यविशेषाणां ब्रह्मणि समन्वयः पादार्थः।

तत्रानुमानिकाधिकरणे कठवल्ल्यां—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥

महतः परमव्यक्तमव्यक्तात्पुरुषः परः।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः॥'

(कठ० ३-१०, ११)

इत्यत्राव्यक्तशब्देन साङ्ख्याभिमतं प्रधानमुच्यते। तत्प्रक्रियाप्रत्यभिज्ञानात्।

'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः॥

बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः ।
पुरुषं निर्गुणं प्राप्य कालसङ्ख्या न विद्यते ॥ ”

इति साङ्ख्याभ्युपगतेन्द्रियाद्युपासनफलभूयस्त्वाल्पत्वरूपपरावरभावस्य ‘ इन्द्रियेभ्यः परा ’ (कठ० ३-१०) इत्यादिना प्रतिपादनात् ‘ पुरुषान्न परं किञ्चित् ’ (कठ० ३-११) इति पञ्चविंशपुरुषातिरिक्ततत्त्वनिषेधाच्च । ज्ञानकर्मेन्द्रियाणां दशानामिन्द्रियशब्देन, भूततन्मात्राणां दशानामर्थशब्देन, अन्तःकरणस्य बुद्धिशब्देनाहङ्कारकार्यवाचिनाहङ्कारस्य महत्तत्त्वस्य महच्छब्देन प्रधानस्याव्यक्तशब्देन इति चतुर्विंशतितत्त्वानां प्रतिपादनेन ततः परेण पुरुषशब्देन पञ्चविंशतितत्त्वप्रतीतेस्तदतिरिक्ततत्त्वनिषेधावगमात् । ततश्च रथिरथादिरूपकवाक्यस्य संयतासंयतेन्द्रियाणां पुरुषाणां मोक्षामोक्षप्राप्तिप्रतिपादनेनेन्द्रियादिपरत्वप्रतिपादकवाक्यस्येन्द्रियादिचिन्तनफलभूयस्त्वाल्पत्वप्रतिपादनमुखेन पुरुषपरत्वाभिधायकत्वेन च निराकांक्षतया इन्द्रियादिवशीकार्यतायां परत्वानपेक्षिततया रथरूपितशरीरस्य पारिशेष्याद‌व्यक्तशब्देन लक्षणया ग्रहणायोगात् तन्त्रसिद्धं प्रधानमेवाव्यक्तशब्देनोच्यते । यद्वा

‘ महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ ’

(कठ० ३-११)

इति तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानेन पुरुषातिरिक्ततत्त्वनिषेधे च महतः महत्तत्त्वात्परं कारणमव्यक्तं प्रधानमिति कठानां शाखिनां शाखासु प्रतीयत इति पूर्वः पक्षः ।

सिद्धान्तस्तु, नात्र तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानेनाव्यक्तशब्देन प्रधानमुच्यते । इन्द्रियादिपरत्ववाक्ये तत्कल्पितेन्द्रियादिचिन्तनफलभूयस्त्वाल्पत्वरूपपरापरभावप्रतिपादनाभ्युपगमे कारिकायामिन्द्रियोपासनफलापेक्षया भूतोपासनफलभूयस्त्वोक्त्या चार्थशब्दोक्तभूतोपासनफलापेक्षया इन्द्रियान्तर्गतमनश्चिन्तनफलभूयस्त्वोक्त्या च अन्योन्यविरोधात् । तथा साङ्ख्यमतेऽपि इन्द्रियाणामाह-

ङ्कारिकतया इन्द्रियभूतमनसां [हेतु]हेतुमद्भावाभावेन तथाविधपरापरभावप्रतिपादनाभ्युपगमेऽपि परस्परविरोधात् बुद्धिशब्दस्याहङ्कारवाचित्वासिद्ध्या आत्मशब्दसमानाधिकरणमहच्छब्दस्य महत्तत्ववाचित्त्वसिद्ध्या प्रत्युत प्रथमश्रुतात्मशब्दप्रसिद्ध्या महत्त्वधर्मस्यैवात्मनि प्रतीत्या पञ्चविंशतितत्त्वप्रतीतेः पञ्चविंशतितत्त्वातिरिक्तप्रतिषेधानवगमाच्च, 'इन्द्रियेभ्यः परा ह्यर्थाः' (कठ० ३-१०) इत्यत्रेन्द्रियपदसमभिव्याहारात् तद्ग्राह्यविषयवाचिनोऽर्थशब्दस्य भूततन्मात्रात्मकदशसङ्ख्याकवस्तुवाचित्वासम्भवेन चतुर्विंशतितत्त्वप्रतीतिगन्धाभावाच्च। तस्मात् 'सोऽध्वनः पारमाप्नोति' (कठ० ३-९) इत्युक्तमुक्त्युपायोपासनोपकरणत्वात् आत्मादीनां वशीकार्यत्वाय रथिरथादिभावेन रूपितानां 'यस्त्वविज्ञानवान्' (कठ० ३-७) इत्यादिनावश्यवशीकार्यतयोक्तानां वशीकरणयत्नतारतम्यसिद्धयेऽपेक्षितवशीकार्यतायां प्राधान्याप्राधान्यप्रतिपादनाय प्रवृत्तेऽस्मिन् इन्द्रियेभ्य इत्यादिवाक्ये आत्मबुद्धिमनइन्द्रियतद्विषयेषु रथसारथिरज्जुविशेषतुरगमार्गात्मना निरूपितेषु स्वस्वशब्दैरुपात्तेषु सत्सु पारिशेष्याद्रथरूपकविन्यस्तशरीरस्यैवाव्यक्तशब्देन ग्रहणं युक्तम्। न च लक्षणा दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात्, प्रोक्षणीन्यायेनाव्यक्तशब्दस्य प्रधाने रूढिसिद्ध्यसम्भवाच्च।

'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञानमात्मनि।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि॥
(कठ० ३-१३)

इति वाक्यशेषे वशीकरणप्रकारोपदेशाच्चायमेवार्थो ग्राह्यः। तथा च इन्द्रियादिशरीरपर्यन्तानामुत्तरोत्तरवशीकार्यतायां प्राधान्यमुक्त्वा सर्वेषामेवेन्द्रियादीनां परमात्मायत्तस्वरूपस्थितिप्रवृत्तिकतया तस्यैव पूर्वोक्तेन्द्रियाद्यपेक्षया वशीकार्यतायां प्राधान्यम्। 'अव्यक्तात्पुरुषः परः' (कठ० ३-१०) इत्युक्त्वा तस्मिन्वशीकृते वशीकार्यान्तराभावेन 'पुरुषान्न परं किञ्चित्' (कठ० ३-११) इति सर्वान्तर्यामिणः परमात्मनो व्यतिरिक्तं वशीकार्यतायां परं प्रधानं नास्तीति वशीकार्यतायां परमात्मातिरिक्तप्रधाननिषेध एवात्र [न तन्त्र]सिद्धप्रधानप्रतीतिगन्ध इति।

॥ इत्यानुमानिकाधिकरणम् ॥

## (२) ॥ अथ चमसाधिकरणम् ॥

### सू०॥ चमसवदविशेषात् ॥ ८ ॥
### सू०॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥९ ॥
### सू०॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

चमसाधिकरणे—श्वेताश्वतरोपनिषदि,

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः'

(श्वे० ४-५)

इत्यत्र न जायत इति यौगिकाजाशब्देनोत्पत्त्यभावावगमात्, सृजमानामिति स्वातन्त्र्यगर्भसृष्टिकर्तृत्वव्यपदेशाच्च, ब्रह्मात्मकप्रकृतिवादे च प्रकृतेः ब्रह्मकार्यत्वतत्प्रेर्यत्वस्वीकारेणाजात्वस्रष्टृत्व(सृष्टत्व)योरसम्भवात् अब्रह्मात्मिका प्रकृतिरेवाजाशब्देनोच्यत इति शङ्कायां—

यौगिकानां शब्दानामर्थप्रकरणादिकमन्तरेण स्वतोऽर्थविशेषनिर्णायकत्वायोगात् 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ० २-२-३) इत्यत्र चमसशब्दस्य चम्यते भक्ष्यतेऽस्मिन्निति यौगिकस्य 'यथेदं तच्छिरः, एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ० २-२-३) इति शिरोरूपार्थविशेषनिश्चायकवाक्यशेषवदब्रह्मात्मकप्रकृतिपरप्रकरणाद्यभावात् प्रत्युत प्राणादिब्रह्मकार्यसहपाठावगततत्कार्यताकब्रह्मात्मकाजाप्रतिपादकतैत्तिरीयकवाक्यार्थप्रत्यभिज्ञानलक्षणब्रह्मात्मकप्रधानपरिग्रहप्रमाणसद्भावाच्च अत्र श्वेताश्वतरवाक्येऽपि ब्रह्मात्मिकैवाजा ग्राह्या। न च तत्राजात्वस्रष्टृत्वयोरनुपपत्तिः। सूक्ष्मासूक्ष्मावस्थाभेदेनाजात्वब्रह्मकार्यत्वयोरुपपत्तेः। 'परात्तु तच्छ्रुतेरि'ति (ब्र० सू० २-३-४०) न्यायेन परमात्माधीनत्वेऽपि स्वातन्त्र्याविरोधात् सारथिप्रेर्यस्य रथादेर्गमनादिकर्तृत्ववत् सृष्टिकर्तृत्वोपपत्तेः ईप्सितानीप्सितकर्मसाधारणसाध्यत्वस्य द्वितीयार्थत्ववत् स्वतन्त्रास्वतन्त्रकर्तृसाधारणक्रियानुकूलव्यापारविशेषाश्रयत्वरूपकर्तृत्वस्य सृजमानामित्युक्तप्रत्ययार्थस्याबाधाच्च। प्रकृत्याख्यद्रव्यस्य कालत्रयसम्बन्धित्वान्नित्यत्वम्, ब्रह्मसङ्कल्पाधीनमहदाद्यागन्तुकावस्थायोगित्वात् ब्रह्मकार्यत्वम्, लोहितशुक्लकृष्णशब्दोक्तरजस्सत्त्वादिगुणत्रय-

सम्बन्धस्वरूपानुबन्धित्वेनाऽऽगन्तुकत्वाभावादनागन्तुकधर्मयोगित्वरूपमजात्वमिति सङ्ग्रहोऽनुसन्धेय इति परिहृतम् ॥

**॥ इति चमसाधिकरणम् ॥**

---

## (३) ॥ अथ सङ्ख्योपसङ्ग्रहाधिकरणम् ॥

### सू०॥ न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥
### सू०॥ प्राणादयो वाक्यशेषात् ॥ १२ ॥
### सू०॥ ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

सङ्ख्योपसंग्रहाधिकरणे—

'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेवमन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥"

(बृ० ४-४-१७)

इति वाजसनेयिशाखागतमन्त्रः तन्त्रसिद्धतत्त्वप्रतिपादनपरः । 'पञ्च पञ्चजनाः' इति तन्मतसिद्धपञ्चविंशतितत्त्वप्रतीतेः । अत्र पञ्चजनशब्दस्यान्तोदात्तस्य पञ्चपूल्य इतिवत् पञ्चानां जनानां समाहारः पञ्चजना इति समाहारसमासविषयतया लिङ्गव्यत्ययस्त्रीप्रत्ययाभावयोः छन्दोनिर्बन्धनतया पञ्चसङ्ख्यतत्त्वसमूहावगतौ तत्र पञ्चशब्दविशेषणेन पञ्च पञ्चपूल्य इत्यत्र [इव] पञ्चविंशतितत्त्वान्यवगम्यन्ते । ते च पञ्चसमूहाः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि तन्मात्राणि भूतानि प्रकृतिमहदहङ्कारमनःपुरुषरूपाण्यवशिष्टानि । तेषाञ्च तत्त्वानां जीवादृष्टाधीनस्थितिकतया यस्मिन्नित्युक्तपुरुषाधारत्वमौपचारिकम् । तत्त्वान्तर्गतपुरुषाधारत्वं पुरुषस्य स्वे महिम्नि प्रतिष्ठितत्वाभिप्रायम् । पृथगुक्तिश्चाकाशस्यावकाशप्रदानद्वारा सर्वविकाराधारस्यापि चेतनाश्रितत्वज्ञापनार्थम् । तदेवं प्रथमश्रुतपञ्चपञ्चजनशब्दावगतपञ्चविंशतितत्त्वप्रतीत्यनुसारेणानन्तरश्रुतशब्दौ नेयाविति प्राप्य—

पञ्च पञ्चजनाः इत्यत्रोक्तसमासाश्रयणे सङ्ख्याप्रतीत्यभ्युपगमेऽपि यस्मिन्नित्यत्र यच्छब्दनिर्देशस्वारस्यमूलब्रह्माश्रितत्वप्रतीत्या ब्रह्मात्मकतत्त्वप्रतीत्या

तन्त्रसिद्धतत्त्वात् पृथग्भावावगमात् यच्छब्दार्थाकाशशब्दार्थयोस्तत्त्वयोः प्रतीत्या सप्तविंशतितत्त्वावगमेन संख्यातिरेकाच्च नात्र तन्त्रसिद्धतत्त्वानि प्रतिपादनमर्हन्ति । किन्तु 'दिक्सङ्ख्ये संज्ञायां' (पाणिनि सू० २-१-५०) इति संज्ञाविषयसमासाश्रयणेन पञ्चजनसंज्ञकवस्तुप्रतीतौ पञ्चेति विशेषणेन च पञ्चसङ्ख्याकाः पञ्चजनसंज्ञकाः प्रतिपन्नाः । ते च 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः' (बृ० ४-४-१८) इति वाक्यशेषे श्रुताः प्राणशब्दोक्तस्पर्शनेन्द्रिय,- चक्षुः - श्रोत्रा-न्नशब्दक्रोडीकृतपार्थिवघ्राणरसनयुगल-मनोरूपाः पदार्थाः । पञ्चजनशब्दस्य समाहारसमासाश्रयणे लिङ्गव्यत्ययादिक्लेशप्रसङ्गात् । तथा च पञ्चजनशब्दोक्तानि ज्ञानेन्द्रियाणि आकाशशब्दोपलक्षितानि भूतानि च यस्मिन् ब्रह्मणि प्रतिष्ठितानि तमात्मानमेवमुक्तप्रकारेणोपासीनो विद्वान् अमृतो मुक्तिभाक् भवतीति नात्र तन्त्रगन्धावकाश इति सिद्धान्तितम् ।

॥ इति संख्योपसंग्रहाधिकरणम् ॥

---

## (४) ॥ अथ कारणत्वाधिकरणम् ॥

### सू०॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

### सू०॥ समाकर्षात् ॥ १५ ॥

'कारणत्वेन चाकाशादिषु' इत्यत्र—'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) 'असद्वा इदमग्र आसीत् । ततो वै सदजायत' (तै० २-७) 'असदेवेदमग्र आसीत् । तत्सदासीत । तत्समभवत्' (छा० ३-१९-१) 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' (बृ० १-४-७) इति सदस(द्व्याकृतानां) [दव्याकृतानां] त्रयाणामन्योन्यविरोधेन ब्रह्म वा [असद्वा] स्वतन्त्रप्रधानं वा कारणमिति स्वतो निश्चयासंभवात् कपिलस्मृत्युपबृंहणानुसारेण स्वतन्त्रप्रधानमेवाव्याकृतश्रुत्युक्तं कारणम् । तत्र नामरूपविभागाभावेनासच्छब्दस्य सत्तायोगेन कार्योन्मुख्येन च सदैक्षतेत्यादिशब्दयोश्च वृत्त्युपपत्तेरिति प्राप्ते—

जन्मादिसूत्रप्रतिपादितस्य सार्वज्ञ्यादिमतो ब्रह्मण एव 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै० २-१) 'तत्तेजोऽसृजत' (छा० ६-२-३) इत्यादिष्वाकाशादिकारणत्वेन प्रतिपन्नत्वात् । 'ब्रह्म ज्येष्ठम्' इत्यादिना, एकशब्दस्वारस्यानुसाराच्च स्वत एव सदादिवाक्ये ब्रह्मकारणत्वस्य निश्चितत्वात्, तस्मिन्नप्युक्तरीत्यैव (सदस)[असदव्याकृत]च्छब्दवृत्त्युपपत्त्यान्यो-न्यविरोधाभावेन कापिलस्मृत्यनपेक्षणात् न ततः स्वतन्त्रप्रधानकारणत्वप्रसक्तिः । अपि तु ब्रह्मैव कारणमिति सिद्धान्तितम् ॥

॥ इति कारणत्वाधिकरणम् ॥

---

## (५) ॥ अथ जगद्वाचित्वाधिकरणम् ॥

### सू०॥ जगद्वाचित्वात् ॥ १६ ॥

### सू०॥ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥ १७ ॥

### सू०॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

जगद्वाचित्वाधिकरणे—'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वेदितव्यः' (कौषी० ४-१८) इति वेदितव्यतया श्रुतस्तन्त्रसिद्धः पुरुष एव । 'यस्य वैतत्कर्म' इति कर्मशब्दोक्तपुण्यपापसम्बन्धश्रवणात् । 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति एवमेवैष प्राज्ञ आत्मा एतैरेवात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति' (कौषी० ४-२०) इति वाक्यशेषे भोक्तृत्वश्रवणाच्च । 'यो वै बालाक एतेषां पुरुषाणां कर्ता' (कौषी० ४-१८) इत्युक्तादित्यादिपुरुषकर्तृत्वस्यादृष्टद्वारा तस्मिन्नपि सम्भवाच्च । कर्म-शब्दस्य चलने रूढत्वेऽपि आदित्यादिपुरुषकर्तृत्वमदृष्टद्वारकं विवक्षितमिति स्फोरणार्थतया अदृष्टरूढेरेव ग्राह्यत्वात् सिद्धान्त्यभिमतपरमात्मनि तन्त्रसिद्धपुरुषे च विभुतया चलनानन्वयाच्च । क्रियत इति कर्मेति योगस्य रूढितो दुर्बलत्वाच्च । 'यस्य वैतत्कर्म' इत्युक्तयैव आदित्यादिपुरुषकार्यकर्तृभावस्यापि सिद्ध्या

'एतेषां पुरुषाणां कर्ता' (कौषी० ४-१८) इति पृथगुक्तिवैयर्थ्याच्च । तस्माद्वेदितव्यतयोक्तःतन्त्रसिद्धपुरुष एवेति प्राप्यय—

(करणोपपा)[कर्मैतत्प]दादिसङ्कोचकप्रमाणाभावेन 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म' ( कौषी. ४-१८ ) इति प्रत्यक्षादिप्रमाणसन्निधापितचेतनाचेतनसकलजगद्वाचिप्रथमश्रुतैतच्छब्दसमानाधिकरणतया षष्ठ्यन्तपदनिर्दिष्टकर्तृसमभिव्याहृततया च कर्मशब्दे, कर्तृव्यापारविषयत्वरूपकार्यत्वात्मकयोगार्थस्यैवोद्भूतत्वेन योगार्थग्राहकप्रमाणसाचिव्ये सति रूढिप्राबल्यानवतारात् पुण्यपापसम्बन्धानवगमेन च वेदितव्यतयोक्तः परमात्मैव । बालाकेः स्वोपास्यत्वेनाभिमतादित्यादिपुरुषनिरूपितकर्तृत्वासम्भवशङ्कापनोदनाय सकलजगतां परमात्मकार्यत्वस्य प्रतिपिपादयिषितत्वेन कर्मशब्दयोगार्थबोधनस्यैव न्याय्यत्वात्, सकलजगत्कर्तुरादित्यादिपुरुषकर्तृत्वं किंपुनर्न्यायसिद्धमिति बालाकेः शिष्यस्य तदसम्भवशङ्कापनोदनसिद्धेः । न च वाक्यशेषोक्तं भोक्तृत्वं परमात्मनि कथं सङ्गच्छत इति वाच्यम् । प्रातर्दनन्यायेन प्राणसङ्कीर्तनं प्राणशरीरकपरमात्मोपासनार्थं जीवसङ्कीर्तनं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थमिति भाष्ये प्रतिपादितमनुसन्धेयम् । तस्मात्सकलजगत्कर्ता परमात्मा वेदितव्यतयोच्यत इति सिद्धान्तितम् ॥

॥ इति जगद्वाचित्वाधिकरणम् ॥

---

## (६) ॥ अथ वाक्यान्वयाधिकरणम् ॥

**सू०॥ वाक्यान्वयात् ॥ १९ ॥**

**सू०॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥**

**सू०॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१॥**

**सू०॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥**

वाक्यान्वयाधिकरणे—'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति' (बृ० ४-५-६) इत्यारभ्य 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति' (बृ० ४-५-६),

इत्यन्तेन पतिजायादिकं यद्भोगार्थतया प्रियं भवति तं पत्यादिसर्वभोक्तारमात्मानमुपक्रम्य 'आत्मा वारे द्रष्टव्यः' (बृ० ४-५-६) इत्यादिना आत्मदर्शनममृतत्वसाधनं तत्साधनानि च श्रवणादीनीत्युपदिश्य 'आत्मनि खल्वरे दृष्टे श्रुते' (बृ० ४-५-६) इत्यादिनात्मविज्ञानेन सर्वविज्ञानमुक्त्वा 'एतावदेव खल्वरेऽमृतत्वम्' (बृ० ४-५-१५) इत्यात्मवेदनममृतत्वसाधनमित्युपसंहृतम्।

तत्र पतिजायादिसम्बन्धश्रवणात् 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति' (बृ० ४-५-१३) इत्युत्पत्तिविनाशश्रवणात् प्रकृतिवियुक्तात्मस्वरूपस्य ज्ञानैकाकारतया स्वात्मनि तथा ज्ञाते सर्वेऽप्येवमाकारा इत्येकविज्ञानेन सर्वविज्ञानस्य वक्तुं शक्यत्वात् पुरुषाधिष्ठितप्रकृतेर्जगत्कारणत्वेन 'महतो भूतस्य निश्वसितं' (बृ० ४-५-११) इत्युक्तकारणत्वोपपत्तेः प्रकृतिवियुक्तात्मदर्शनस्य सांख्यमते मुक्त्युपायतया 'एतावदेव खल्वरे' (बृ० ४-५-१५) इत्युक्तमुक्त्युपायत्वसम्भवाच्च तन्त्रसिद्धपुरुष एव याज्ञवल्क्येनोपदिश्यत इति निश्चितेऽन्यत्र कारणवाक्ये सर्वत्र स एव प्रतिपाद्य इति प्राप्ते—

'येनाहं नामृता स्यां किमहं तेन कुर्यां' (बृ० ४-५-४) इति मुक्तिसाधनवेदनोपक्रमात् 'आत्मा वारे द्रष्टव्यः' (बृ० ४-५-६) इत्यादिनामृतत्वसाधनात्मदर्शनश्रवणादेर्मध्ये प्रतिपादनात् 'एतावदेव खल्वरेऽमृतत्वं' (बृ० ४-५-१५) इति मुक्तिसाधनवेदनोपसंहाराच्च आदिमध्यावसानपर्यालोचनयास्य वाक्यस्य परमात्मविषयत्वमवगम्यते। 'नान्यः पन्थाः' (पुरुषसू) इत्यादिना परमपुरुषवेदनातिरिक्तमुक्त्युपायनिषेधेन श्रुतिविरुद्धतया 'पुरुषं निर्गुणं प्राप्य' इत्यादितान्त्रिकवचनस्यानादेयत्वादिति अत्र परमात्मनि प्रतिपाद्येऽन्यत्रापि सर्वत्र परमात्मैव जगत्कारणतयोच्यते। बहुश्रुतिस्वारस्यानुरोधात्।

'न वा अरे पत्युः कामाय' (बृ० ४-५-६) इत्यादिवाक्यं परमात्मनीत्थं सङ्घटनीयम्। पत्यादीनां कादाचित्कमल्पमपि प्रियत्वं न स्वरूपप्रयुक्तम्। अहमस्य प्रियः स्यामिति स्वसङ्कल्पायत्तञ्च न भवति। परमात्मसमाराधनभूततत्तत्कर्मानुगुणं परमात्माराधकानां पत्यादिकं प्रियं स्यादिति तत्तदाराधनप्रीतपरमात्मसङ्कल्पायत्तमिति पत्यादिवस्तुगतप्रियत्वाधायकं स्वाभाविकप्रियमनवधिकातिशयानन्दरूपं परमात्मानमेवोपाददीत न कर्मौपाधिकप्रियं पत्यादिकमिति जीव-

धर्मोत्पत्तिविनाशादिवाक्यमपि प्रतर्दनविद्यान्यायेन तच्छरीरकपरमात्मविषयतया नेयमिति सिद्धान्तितम्।

॥ इति वाक्यान्वयाधिकरणम् ॥

---

(७) ॥ अथ प्रकृत्यधिकरणम् ॥

**सू०॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥**

**सू०॥ अभिध्योपदेशाच्च ॥ २४ ॥**

**सू०॥ साक्षाच्चोभयाम्नानात् ॥ १५ ॥**

**सू०॥ आत्मकृतेः ॥ २६ ॥**

**सू०॥ परिणामात् ॥ २७ ॥**

**सू०॥ योनिश्च हि गीयते ॥ २८ ॥**

प्रकृत्यधिकरणे—लोकसिद्धघटादिकार्येषु निमित्तोपादानयोर्नियमेन भेददर्शनान्निमित्तत्वोपादानत्वयोर्विरोधावधारणात् एकत्र ब्रह्मण्यनुपपत्तेः, निर्विकारे ब्रह्मणि परिणामित्वरूपोपादानत्वस्य बाधितत्वात् मृत्पिण्डद्वारा घटरूपपरिणामाश्रयभूतलादेर्घटाद्युपादानत्वापत्त्या चिदचिद्द्वारा परिणामाश्रयस्य ब्रह्मणो जगदुपादानत्वासम्भवाच्चोपादानत्वबोधकश्रुतीनामन्यपरत्वेन नेयत्वात् 'अस्मान्मायी सृजते विश्वमेतत्' (श्वे. ४-९) 'मयाध्यक्षेण प्रकृतिः' (गीता. ९-१०) इत्यादिप्रमाणादीश्वरो जगन्निमित्तमात्रमिति सेश्वरसांख्यवादे प्राप्ते—

'येनाश्रुतं श्रुतम्' (छा० ६-१-३) इति ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् तस्य च जगद्ब्रह्मणोरेकद्रव्यत्वेन निर्वाह्यतया तस्य चोपादानोपादेयभावमूलकतया उपादानोपादेयभूतमृत्पिण्डघटादिदृष्टान्तोपादानमहिम्ना दार्ष्टान्तिकयोर्जगद्ब्रह्मणोरपि तथाभावावगमात्, 'बहु स्यां' (तै० २-६) इति ब्रह्मणः स्वगतबहुभवनसङ्कल्परूपाभिध्योपदेशात् 'तदात्मानं स्वयमकुरुत' (तै० २-७) इति स्वात्मन एव जगत्कारणोपदेशात् 'ब्रह्म वनं ब्रह्म स वृक्ष

आसीत्। ब्रह्माध्यतिष्ठद्भुवनानि धारयन्' (तै० अष्ट० २-८-७) इति साक्षान्निमित्तत्वो[पादानत्वो]भयाम्नानात् 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मु० १-१-६) 'पुरुषं ब्रह्मयोनिम्' इत्युपादानत्ववाचियोनिशब्देनोपादानत्व-श्रुतेश्च ब्रह्म उपादानं निमित्तञ्च।

न च निर्विकारस्य ब्रह्मणः कथं परिणामित्वरूपमुपादानत्वं श्रुतिरुपदिदेशेति वाच्यम्। विशेषणीभूतचिदचिद्द्वारा परिणामाश्रयत्वेनोपादानत्वोपपत्त्या साक्षात्सम्बन्धेन विकाररहिततया निर्विकारत्वोपपत्त्या च विरोधाभावात्।

न चैवं मृत्पिण्डद्वारा घटादिपरिणामाश्रयभूतलादेर्घटाद्युपादानत्वं स्यादिति शङ्क्यम्। अपृथक्सिद्धसम्बन्धेन परिणामाश्रयत्वस्य विवक्षिततया मृत्पिण्डघटयोरपृथग्भावेऽपि मृत्पिण्डभूतलयोस्तदभावेनोक्तातिप्रसङ्गानवकाशात्। चिदचिदात्मकजगद्ब्रह्मणोः जगत्परिणामयोश्चापृथग्भावसत्त्वेन निरुक्तोपादानत्वसम्भवाच्च। लोके तन्तुमृत्पिण्डादावुपादानपदप्रयोगात्; वेदे च 'यद्भूतयोनिं' (मु० १-१-६) 'पुरुषं ब्रह्मयोनिं,' 'यथोर्णनाभिः सृजते गृह्णते च, यथा सतः पुरुषात्केशलोमानि' (मु० १-१-७) इत्यादौ मृत्पिण्ड इव शरीरविशेषविशिष्टचेतनवाचिनोर्णनाभिशब्देन सतः पुरुषादिति चेतनविशिष्टशरीरवाचिपुरुषशब्देन च विशिष्टेऽप्युपादानपदप्रयोगबाहुल्येन सकलप्रयोगविषयानुयायिनः अपृथक्सिद्धसम्बन्धेन साक्षात्परम्परासाधारणेन परिणामाश्रयत्वस्यानतिप्रसक्तस्य [उपादानपदप्रवृत्ति]निमित्तत्वसम्भवेन क्वचिन्मुख्यत्वं क्वचिद्गौणत्वमित्यस्य निर्युक्तिकतयानुपादेयत्वात्।

यद्वा परिणामो नामागन्तुकावस्था। सा च सूक्ष्मचिदचिद्विशिष्टत्वावस्थस्य ब्रह्मणः स्थूलचिदचिद्विशिष्टत्वावस्थामागन्तुकामादाय साक्षात्सम्बन्धेनैवोपपादयितुं शक्या। न च पिण्डविशिष्टत्वावस्थस्य भूतलस्य घटविशिष्टत्वावस्थामादाय घटविशिष्टभूतलोपादानत्वं शङ्क्यम्। द्रव्यद्वयवैशिष्ट्यस्यापृथक्सिद्धसम्बन्धरूपस्य विवक्षिततया मृत्पिण्डभूतलयोश्चापृथग्भावसम्बन्धाभावेनानतिप्रसङ्गात् जगद्ब्रह्मणोश्शरीरात्मनोश्च तथात्वाल्लक्षणसङ्गतिः। न च ब्रह्मणो निर्विकारत्वश्रुतिविरोधः। प्रणामनमस्काराद्याराधनजनितप्रीत्यादिविकारवत् 'बहु स्याम्' (तै० २-६) इति लीलाप्रवृत्तभगवत्स्वसङ्कल्पायत्तनिरतिशयैश्वर्यसम्पादकोक्तकादा-

चित्कधर्मरूपविकारस्य कर्मनिबन्धनचिदचिद्गतविकारवदपुरुषार्थहेयानापादकतया गुणत्वात् ।

न च निमित्तत्वोपादानत्वयोर्विरोधः । कालादेः स्वगतसंयोगादिकं प्रत्युपादानत्वनिमित्तत्वयोर्वैशेषिकादिभिरङ्गीकृतत्वात् , रथो गच्छतीत्यादिप्रमाण-बलेन रथादेर्गमनक्रियाकर्तृत्वतदुपादानत्वयोस्तान्त्रिकैरभ्युपगतत्वाच्च, सङ्कल्पाश्रय-त्वरूपकर्तृत्वस्य साक्षात्परिणामित्वरूपोपादानत्वस्य च विरोधेऽपि सङ्कल्पाश्रये ब्रह्मणि साक्षात्परिणामानभ्युपगमकल्पे दोषाभावात् । तस्मात्सूक्ष्मचिदचिद्वि-शिष्टत्वेन तद्विशिष्टं ब्रह्मोपादानं तद्विलक्षणं विशेष्यभूतं ब्रह्म कर्तृभूतं निमित्त-मित्यभिन्ननिमित्तोपादानं ब्रह्म जगत इति सिद्धान्तितम् ।

**॥ इति प्रकृत्यधिकरणम् ॥**

---

## (८) ॥ अथ सर्वव्याख्यानाधिकरणम् ॥

## सू०॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

सर्वव्याख्यानाधिकरणे अतीताधिकरणोक्तन्यायकलापेन तेष्वनुदाहृत-कारणवाक्यविशेषाश्चिदचिद्विलक्षणोक्तसर्वज्ञत्वादिविशिष्टभगवन्नारायणपरा व्या-ख्याता वेदितव्याः । पूर्वोक्तन्यायातिदेशार्थाधिकाशङ्कापरिहारप्रकारश्च **श्रुतप्रका-शिकायाम**नुसन्धेयः । व्याख्याता इति पदाभ्यासस्तु अध्यायपरिसमाप्तिं द्योत-यतीति निरवद्यम् ॥

**इति श्रीमल्लक्ष्मणार्यकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**प्रथमस्याध्यायस्य**
**चतुर्थः पादः**
**॥ प्रथमोऽध्यायस्समाप्तः ॥**

**अधिकरणानि ८.　　सूत्राणि २९.**

---

श्रीरस्तु

# ॥ अथ द्वितीयोऽध्यायः ॥

## ॥ प्रथमः पादः ॥

### (१) ॥ स्मृत्यधिकरणम् ॥

**सू० ॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

**सू० ॥ इतरेषाञ्चानुपलब्धेः ॥ २ ॥**

प्रथमेऽध्याये वेदान्तानामुपक्रमादिन्यायपर्यालोचनया ब्रह्मैककारणत्वमुखेन ब्रह्मणि समन्वयः प्रतिपादितः। द्वितीये तस्यैवार्थस्य स्थिरीकरणाय कापिलादिस्मृतिन्यायाविरोधः प्रतिपाद्यते। तत्र प्रथमे पादे ब्रह्मकारणत्ववादे परोद्भावितस्मृतिन्यायविरोधः परिह्रियते। प्रथमं 'ऋषिं प्रसूतं कपिलं महान्तं' (श्वे० ५-२) इति श्रुतिप्रसिद्धकपिलस्मृतिविरोधः परिह्रियते।

स्मृत्यधिकरणे—'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) 'असद्वा इदमग्र आसीत्' (तै० २-७) 'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृ० १-४-७) इत्यादिकारणवाक्यानां सदसदव्याकृतविषयाणामन्योन्यविरोधेन व्याकुलीभूततया स्वतोऽर्थविशेषनिर्णायकत्वासम्भवेन प्रमाणलक्षणप्रसाधितप्रमाणभावानां वेदान्तानां क्वचिदेकस्मिन्नर्थे पर्यवसानावश्यम्भावात् मन्वादिस्मृतीनां धर्मप्रतिपादनप्रवणतयान्यपरत्वात् समन्वयाध्यायोक्तन्यायानां कपिलस्मृतिवचनविरुद्धानां 'न हि वचनविरोधे न्यायः प्रवर्तते' इति न्यायेनानुपादेयत्वात् पारिशेष्यात् 'कपिलं महान्तम्' (श्वे० ५-२) इति श्रुतिप्रसिद्धाप्तकपिलप्रणीततत्त्वैकप्रवणानन्यपरसांख्यस्मृत्यैवोपबृंहणीयतया तत्र च स्वतन्त्रप्रधानकारणताप्रतिपादनेन तदनुरोधाद्वेदान्तानामपि ईक्षणादेर्गौण-

तामासाद्य प्रधानैककारणत्वपरत्वावश्यम्भावात् ब्रह्मैककारणत्वपरत्वं समन्वयाध्यायोक्तं बाध्यमेवेति प्राप्ते—

मन्वादिस्मृतीनां 'यद्वै किञ्च मनुरवदत', (अष्ट० ३-२-११) 'स होवाच व्यासः पाराशर्यः' इत्यादिश्रुतावाप्ततमत्वेन (श्रुति) प्रसिद्धमन्वादिप्रणीतानां श्रुत्यनुगुणसमीचीनन्यायानुगृहीततया भूयस्तया भगवदाराधनात्मक-[कर्मपरतया चानवकाशत्वेन सांख्यस्मृतेस्तु अब्रह्मात्मक] प्रधानकारणपरतया वा श्रुत्यननुगुणन्यायमूलकत्वेनाप्रामाण्यकोटिनिवेशसहतया वा सावकाशत्वेन समन्वयाध्यायोक्तं वेदान्तानां ब्रह्मैककारणत्वपरत्वमविचाल्यमिति सिद्धान्तितम् ॥

**॥ इति स्मृत्यधिकरणम् ॥**

---

## (२) ॥ अथ योगाधिकरणम् ॥

## सू० ॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥

योगाधिकरणे च—ईश्वराभ्युपगमात् वेदाधिकृतचतुर्मुखप्रणीतत्वात् वेदान्तोक्तेश्वरोपासनप्रतिपादनाच्च कपिलस्मृतिवैषम्येन चतुर्मुखस्य मन्वादिभ्योऽपि ज्ञानाधिकतया तत्कृतयोगाचारस्मृत्या वेदान्तोपबृंहणं कार्यमिति वेदान्तानां न ब्रह्मण उपादानकारणत्वपरतेत्यधिकाशङ्कायां—

चतुर्मुखस्यापि क्षेत्रज्ञतया तत्त्वांशे सम्भावितविपरीतज्ञानादिमत्तया शास्त्रयोनित्वाधिकरणोक्तन्यायविरुद्धानुमानिकेश्वराभ्युपगमेन सर्वात्मकत्वाद्युपास्याकारवैपरीत्योपलम्भेन तत्प्रणीतयोगस्मृतेरपि श्रुतिविरुद्धापन्यायमूलकत्वेन कापिलस्मृतितुल्यतयानुपादेयत्वेन च वेदान्तानां मन्वादिस्मृत्येकोपबृंहणीयतया ब्रह्मैककारणत्वपरता न विचाल्येति परिहृतम् ॥

**॥ इति योगाधिकरणम् ॥**

---

## (३) ॥ अथ नविलक्षणत्वाधिकरणम् ॥

**सू० ॥ न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥ ४ ॥**

**सू० ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥**

**सू० ॥ दृश्यते तु ॥ ६ ॥**

**सू० ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥**

**सू० ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥**

**सू० ॥ न तु दृष्टान्तभावात् ॥ ९ ॥**

**सू० ॥ स्वपक्षदोषाच्च ॥ १० ॥**

**सू० ॥ तर्काप्रतिष्ठानादपि ॥ ११ ॥**

**सू० ॥ अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ १२ ॥**

नविलक्षणत्वाधिकरणे—मृत्सुवर्णघटमकुटादिष्वसाधारणाकारेण कार्य-कारणयोस्सालक्षण्यदर्शनेन सत्वरजस्तमोमूलसुखदुःखमोहात्मकप्रपञ्चरूपकार्यस्य तथाविधकारणावश्यम्भावेन त्वदभिमतसार्वज्ञ्यादिगुणकब्रह्मरूपकारणस्य चोक्तप्रपञ्चा-दतिविलक्षणत्वेन कार्यकारणसालक्षण्यतर्कविरुद्धतया मन्वादिस्मृतेर्न ततो वेदान्तोपबृंहणं युक्तम्। अपि तूक्ततर्कानुगृहीतकापिलस्मृत्यैवोपबृंहणं युक्तम्। न चेक्षणादितर्कानुग्रहो मन्वादिस्मृतेरिति वाच्यम्। तर्कस्य व्याप्तिग्रहमूलोहा-पोहरूपज्ञानविशेषरूपतया सिद्धान्त्यभिमतोपादानत्वेक्षणयोर्ब्रह्मणोऽन्यत्रोभयसंप्रति-पन्नस्थले साहचर्यासिद्धेस्सालक्षण्यतर्कानुगृहीतकापिलस्मृत्यैवोपबृंहणं कार्यमिति प्राप्ते—

गोमयमाक्षिकपाषाणभेकादौ असाधारणाकारायत्तसालक्षण्यविरहेऽपि कार्य-कारणभावदर्शनेन व्यभिचरिततयोक्ततर्कानवतारादुक्तरीत्या मन्वादिस्मृत्यैव वेदान्तोपबृंहणं कार्यमिति ब्रह्मकारणत्वमविचाल्यमिति सिद्धान्तितम्।

यद्यपि चिदचिद्विशिष्टं कारणं कार्यञ्चेति विशिष्टस्यानतिरिक्ततया यथायथं विशेषणांशे विशेषणांशस्य विशेष्यांशे विशेष्यांशस्य च सालक्षण्यं वक्तुं शक्यम्;

तथापि विशेषणविशेष्यांशयोरपि सालक्षण्येन भाव्यमित्याशङ्क्य व्यभिचारो दर्शित इति विभावनीयम् ॥

॥ इति नविलक्षणत्वाधिकरणम् ॥

---

## (४) ॥ अथ शिष्टापरिग्रहाधिकरणम् ॥

## सू०॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १३ ॥

शिष्टापरिग्रहाधिकरणे—कणभक्षाक्षपादक्षपणकभिक्षूणां परमाणुकारणवादे संवादात् तन्त्वाद्यारब्धपटादिषु कारणकार्ययोर्न्यूनाधिकपरिमाणनियमाख्यतर्कस्यैकरूपस्य सर्वैरपि तैरभ्युपगतत्वेन संवादात् अधिकपरिमाणस्य ब्रह्मणो न्यूनपरिमाणजगत्कारणत्वानुपपत्तेश्च ब्रह्मैककारणत्वं बाध्यमित्यधिकाशङ्कायां—

परमाणुकारणवादमात्रसंवादेऽपि परमाणूनां क्षणिकत्वाक्षणिकत्वज्ञानात्मकत्वतदनात्मकत्वबहुविधत्वैकविधत्वादिविषयतर्काणामन्योन्यव्याघातात् केवलतर्कमूलत्वाविशेषेण केवलतर्कस्य च कुशलतरोत्तरोत्तरपुरुषकल्पिततर्कान्तरदूषितत्वशङ्कास्कन्दितत्वेनाप्रतिष्ठितत्वात् स्थूलादपि तूलपिण्डादेः सूक्ष्मानेकतन्त्वाद्युत्पत्त्या कारणकार्ययोर्न्यूनाधिकपरिमाणनियमाभावाच्च न तदनुरोधेन वेदान्तार्थनिर्णयः कर्तुं शक्य इति ब्रह्मकारणत्वमविचाल्यमिति परिहृतम् ॥

॥ इति शिष्टापरिग्रहाधिकरणम् ॥

---

## (५) ॥ अथ भोक्त्रापत्त्यधिकरणम् ॥

## सू०॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥

भोक्त्रापत्त्यधिकरणे—बालत्वयुवत्वादिशरीरधर्माणां शरीरिण्यप्रसङ्गात् चिदचिद्गताज्ञत्वविकारादीनां चिदचिच्छरीरिणि ब्रह्मण्यप्रसक्तावपि गृहस्वामिनो गृहं प्रविष्टस्य गृहसाकल्यवैकल्यनिमित्तसुखदुःखादिभोक्तृत्ववत् 'यस्य पृथिवी

शरीरं' (बृ० ३-७-३) इत्यादिप्रमाणप्रतिपन्नचिदचिच्छरीरस्वामिनि ब्रह्मणि जीववत् 'न ह वै सशरीरस्य' (छा० ८-१२-१) इत्यादिश्रुतिप्रतिपन्नशरीरस्वाम्यप्रयुक्तं धातुसाम्यवैषम्यमूलसुखदुःखभोक्तृत्वं दुर्वारमिति जीवेश्वरयोः 'पिप्पलं स्वाद्वत्ति, अनश्नन्नन्यो अभिचाकशीति' (मु० ३-१-१) इति श्रुतिसिद्धभोक्तृत्वाभोक्तृत्वविभागो न स्यादिति प्राप्य—

देवमनुष्यादिशरीरस्वाम्याविशेषेऽपि तेषु सुखदुःखावान्तरवैचित्र्ये तत्तत्कर्मवैचित्र्यस्यैवानुगतस्य प्रयोजकत्वावश्यम्भावेन 'यद्विशेषे यद्विशेषः प्रयोजकः तत्सामान्ये तत्सामान्यं प्रयोजकं' इति न्यायेन भोगसामान्ये कर्मसामान्यस्य प्रयोजकत्वात्, 'न ह वै सशरीरस्य' (छा० ८-१२-१) इत्यादेः मुक्तिपादे स्वकर्मारब्धशरीरविषयत्वस्थापनाच्च चिदचिच्छरीरस्वामिन्यपि ब्रह्मणि कर्मविरहान्न भोक्तृत्वापत्तिः। यथा लोके सार्वभौमः कश्चित् स्वशासनातिवर्तिनं शिक्षयितुं शास्ति वृत्त्यनुगुणं किञ्चित् कारागृहं निर्माय तत्र तं प्रवेश्य तं क्लेशयितुं स्वयं तत्र प्रविष्टोऽपि क्लेशं नानुभवति किन्तु यथायथं मोदते, तद्वदीश्वरोऽपि स्वशासनानुवर्तनातिवर्तनात्मकपुण्यापुण्यकर्मानुगुणदेवादिशरीरं निर्माय तत्र चेतनं प्रवेश्य तं भोजयितुं स्वयं तत्र प्रविष्टो हि मोदत इति 'पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' (मु० ३-१-१) इति श्रुतिसिद्धजीवेश्वरविभागस्साधूपपन्न इति सिद्धान्तितम्॥

॥ इति भोक्त्रापत्त्यधिकरणम् ॥

---

## (६) ॥ अथ आरम्भणाधिकरणम् ॥

**सू०॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥**

**सू०॥ भावे चोपलब्धेः ॥ १६ ॥**

**सू०॥ सत्त्वाच्चापरस्य ॥ १७ ॥**

**सू०॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च ॥ १८ ॥**

## सू०॥ पटवच्च ॥ १९ ॥

## सू०॥ यथा च प्राणादिः ॥ २० ॥

आरम्भणाधिकरणे—'तन्तुरयं पटोऽयं' इति विलक्षणबुद्धिबोध्यत्वात्, तन्तुपटादिशब्दभेदात्, रज्जुनिर्माणावरणादिकार्यभेदात्, पूर्वापरकालभेदात्, आकृतिभेदात्, परिमाणभेदात, तन्तवस्सन्ति पटो नास्तीति भावाभावान्वयात्, प्रकृतिर्नित्या महदादिरनित्य इति नित्यत्वानित्यत्वान्वयात्, बहुत्वैकत्वादिसङ्ख्याभेदात्, सत्कार्यवादे कारणदशायामपि कार्यस्य सत्त्वेन दण्डचक्रादिकारकव्यापारवैफल्यापाताच्च कारणद्रव्यात्कार्यद्रव्यस्यान्यत्वावश्यम्भावात् 'असदिति चेत्' (ब्र० सू० २-१-७) इत्यादिसूत्रेषु व्याहृतं कार्यकारणयोरनन्यत्वात् सूक्ष्मासूक्ष्मचिदचिद्विशिष्टं ब्रह्मैव कारणं कार्यञ्चेत्यनुपपन्नमिति शङ्कायाम्—

'येनाश्रुतं श्रुतं' (छा० ६-१-३) इत्यादिना ब्रह्मविज्ञानेन प्रपञ्चविज्ञानं प्रतिज्ञाय 'यथा सोम्यैकेन मृत्पिण्डेन' (छा० ६-१-४) इति उपादानज्ञानेनोपादेयज्ञानसम्भवं दृष्टान्तमुखेन ज्ञापयित्वा, अन्यज्ञानेनान्यज्ञानासम्भवशङ्कां परिहर्तुं 'वाचारम्भणं विकारो नामधेयम्' (६-१-४) इति वाचा वाक्पूर्वकव्यवहारेण हेतुना आरभ्यते आलभ्यते स्पृश्यते इत्यारम्भणमारब्धं स्पृष्टं मृद्द्रव्येण, मृद्द्रव्यमेव घटमानयेत्यादिशब्दप्रयोगार्थं घटादिनामधेयं जलाहरणादिकार्यार्थं घटत्वादिविकारञ्च भजतीति न कार्यं द्रव्यान्तरमिति कार्यकारणयोरेकद्रव्यत्वोपपादनात् 'मृद्घटः' 'प्रातरिदं घटशरावादिकं मृदेवासीत्' इति द्रव्यैक्यप्रत्यभिज्ञानाच्च द्रव्यैकत्वलाघवानुगृहीतप्रत्यभिज्ञानुसारेण पूर्वपक्ष्यभिहितानां शब्दबुद्धिकार्यकालाकृतिपरिमाणभेदानां भावाभावनित्यत्वानित्यत्वबहुत्वैकत्वभेदानां दण्डादिकारणव्यापारसाफल्यस्य चावस्थाभेदनिबन्धनतयान्यथासिद्धिसम्भवाच्च कारणादनन्यत्कार्यमित्येतदधिकरणसिद्धमेवानन्यत्वं तत्र तत्र सूत्रेषु व्यवहृतमिति न किञ्चिदपि हीनमिति समाहितम् ॥

॥ इत्यारम्भणाधिकरणम् ॥

---

## (७) ॥ अथ इतरव्यपदेशाधिकरणम् ॥

### सू०॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

### सू०॥ अधिकन्तु भेदनिर्देशात् ॥ २२ ॥

### सू०॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

इतरव्यपदेशाधिकरणे—सूक्ष्मचिदचिद्विशिष्टस्य कारणत्वं स्थूलचिदचिद्विशिष्टस्य कार्यत्वमिति कार्यकारणयोरनन्यत्वोक्तावपि सर्वकारणस्य ब्रह्मणः स्वविशेषणीभूतनिष्कृष्टचिदचिदाख्यकार्यं प्रत्यपि कारणत्वावश्यम्भावेन चिद्रूपकार्येणापि ब्रह्मणोऽनन्यत्वस्यावर्जनीयत्वात्, तत्त्वमसीति जीवपरयोरैक्योपदेशाच्च जीवब्रह्मणोरनन्यत्वेन सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मणः स्वाभिन्नं जीवं जानतो जीवसम्बन्धिहिताकरणादिकं स्वस्येति ज्ञाने हितरूपजगदकरणमहितजगत्करणञ्चेति ब्रह्मणो दोषः प्रसजेदिति कार्यादनन्यद्ब्रह्म जगत्कारणमित्यनुपपन्नमिति प्राप्ते—

'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः' (तै० २-५.) 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति (बृ० ३-७-२२) 'पृथगात्मानं प्रेरितारञ्च मत्वा' (श्वे० १-६) 'स कारणं करणाधिपाधिपः' (श्वे० ६-९) 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' (श्वे० ४-६) 'ज्ञाज्ञौ' (श्वे० १-९) 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (श्वे० ६-१३) 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे० १-१०) इत्यादिना जीवाद्ब्रह्मणोऽन्यत्वव्यपदेशान्न जीवाभिन्नं ब्रह्मेति ब्रह्मणो हिताकरणादिदोषो न प्रसज्यते ॥

न च जीवब्रह्मणोर्भेदे कार्यभूतेन तेन ब्रह्मणः कारणस्य कथमनन्यत्वं सिध्येदिति वाच्यम् । न हि वयं जीवब्रह्मणोः स्वरूपैक्यरूपमनन्यत्वं ब्रूमः । किन्तु कार्यकारणयोः सूक्ष्मचिदचिद्विशिष्टस्थूलचिदचिद्विशिष्टब्रह्मणोः स्वरूपै-

क्यमनन्यत्वम् । तच्च जानन्नपि हिताकरणादिदोषं न भजते । वैषम्यादि-दोषस्तु सूत्रकृता स्वयमेव परिहरिष्यते ।

न च चिदचिद्ब्रह्मणां स्वरूपभेदे कथं ब्रह्मज्ञानेन सर्वज्ञानं, मृद्धटशरावादिदृष्टान्तेन द्रव्यैक्यनिबन्धनत्वावगमात्तस्येति वाच्यम् । पिण्डत्वावस्थस्योपादानद्रव्यस्य घटत्वावस्थस्योपादेयद्रव्यस्य चैक्यं, विशेषणीभूतावस्थाया द्रव्यस्य च न स्वरूपैक्यम् । ब्रह्मण्यपि सूक्ष्मचिदचिदवस्थस्य ब्रह्मण उपादानस्य स्थूलचिदचिदवस्थस्य ब्रह्मण उपादेयस्य चैक्यं न त्ववस्थास्थानीयसूक्ष्मस्थूलचिदचितोर्ब्रह्मणश्च स्वरूपैक्यम् । दृष्टान्तदार्ष्टान्तिकयोरपृथक्सिद्धस्वरूपसम्बन्धेनावस्थाद्वययोगस्समानः । दृष्टान्तेऽवस्थातद्वतोस्साक्षादपृथक्सिद्धस्वरूपसम्बन्धः । दार्ष्टान्तिके निर्विकारे ब्रह्मणि सूक्ष्मस्थूलावस्थयोः स्वापृथक्सिद्धचिदचिदपृथक्सिद्धस्वरूपसम्बन्धः । सोऽपि 'स्थविरोऽयं विद्वान् बाल आसे'तिवत् 'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) इत्यवस्थाद्वययोगिवस्तुनस्सामानाधिकरण्येन विशिष्टैक्यनिर्देशनिर्वाहकः । न हि निष्कृष्टविशेषणीभूतचेतनं प्रति कारणत्वं नेति काचित क्षतिः । स्थूलचिदचिद्विशिष्टकारणत्वमादाय 'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) इत्यादिश्रुत्युक्तजन्मादिसूत्रव्युत्पादितसकलजगत्कारणत्वोपपत्तेः । सदेवेत्यादिकारणवाक्ये सामानाधिकरण्येन विशिष्टवस्तुन्येव कार्यकारणभावस्य स्वरसतः प्रतीयमानत्वात् ।

यद्वा साक्षादपृथक्सिद्धस्वरूपसम्बन्धेन सूक्ष्मचिदचिद्विशिष्टत्वावस्थावतो ब्रह्मणस्तथाविधसम्बन्धेन स्थूलचिदचिद्विशिष्टत्वयोगोऽभिप्रेत इति दृष्टान्ततुल्यता । निर्विकारश्रुतेः कर्ममूलविकारनिषेधितया 'बहु स्यां' (तै० २-६) इति स्वसङ्कल्पमूलनिरतिशयैश्वर्यावहोक्तविकारस्य गुणत्वेनोपादेयत्वात् । विशिष्टैक्याज्ञानमेव स्तब्धताहेतुरित्यभिप्रेत्य 'तमादेशमप्राक्ष्यः' (छा० ६-१-२) इत्युपक्षिप्य 'सदेवेदं' इति सामानाधिकरण्येन सूक्ष्मचिदचिद्विशिष्टत्वस्थूलचिदचिद्विशिष्टत्वरूपावस्थाद्वयवस्त्वैक्यमुक्त्वा दृष्टान्तमुखेन 'वाचारम्भणं' (छा० ६-१-४) इत्यादिनोपपादितम् । अत्र स्थूलसूक्ष्मावस्थयोर्विशेषणचिदचिद्द्वारा ब्रह्मण्यन्वयेनोपादानादिभावकल्पे निर्विकारश्रुतिस्साक्षात्सम्बन्धेन विकारनिषेधपरा । साक्षात्सम्बन्धेन सूक्ष्मचिदचिद्विशिष्टत्वस्थूलचिदचिद्विशिष्ट-

त्वरूपावस्थाद्वययोगेन ब्रह्मण उपादानत्वादिकल्पे निर्विकारत्वश्रुतिः कर्ममूलहेय-विकारनिषेधपरेति ध्येयम्। तस्माद्धिताकरणादिदोषाप्रसक्तेः ब्रह्मकारणत्वं निर्बाधमिति सिद्धान्तितम्।

॥ इतीतरव्यपदेशाधिकरणम् ॥

---

## (८) ॥ अथोपसंहारदर्शनाधिकरणम् ॥

## सू०॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

## सू०॥ देवादिवदपि लोके ॥ २५ ॥

उपसंहारदर्शनाधिकरणे—'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) इत्यादिना प्राक्सृष्टेरेकत्वावधारणेन 'सूक्ष्मचिदचिद्विशिष्टब्रह्म-व्यतिरिक्तवस्त्वन्तरशून्यत्वावगमेन ब्रह्मणस्सहकारिराहित्यात् सत्यसङ्कल्पसर्व-शक्त्यादियुक्तस्यापि तस्य जगदुपादानत्वस्रष्टृत्वे नोपपद्येते। लोके तत्तत्कार्यशक्त-स्यापि कुलालादेस्सहकारिसमवधाने सत्येव कार्यारम्भकत्वदर्शनात्। न च तदानीं सूक्ष्मचिदचितोः चेतनकर्मणां कालविशेषस्य च सत्त्वेन तत्सहकारात् ब्रह्मणो जगदारम्भसम्भव इति वाच्यम्। तत्तत्कार्यासाधारणसहकार्यपेक्षाया एव लोकसिद्धतया त्वदुक्तानां साधारणसहकारितया असाधारणसहकारिविरहप्रयुक्त-जगदारम्भानुपपत्तेः पूर्वपक्ष्यभिप्रेतत्वात्, चेतनकर्मणां सृष्टिवैषम्यहेतुत्वेन सृष्टि-हेतुत्वाभावाच्च, कालादृष्टादेर्दृष्टासाधारणकारणसमवधानमुखेनैव कार्यारम्भो-पयोगित्वाच्चेति प्राप्तय—

क्षीरजलादेर्दधिहिमादिभावे तादृशसहकार्यपेक्षाविरहेण देवानां स्वभोग्य-वस्तुसृष्टौ लोकसिद्धासाधारणसहकार्यपेक्षाविरहेण चोक्तनियमाभावेन सत्य-सङ्कल्पस्य सर्वशक्तेर्ब्रह्मणो नासाधारणसहकारिविरहायत्तजगदारम्भकत्वानुपपत्ति-शङ्का। क्षीरादौ तक्रातञ्चनादेश्च रसविशेषाद्युपक्षीणतया दधिभावाहेतुत्वादिति सिद्धान्तितम् ॥

॥ इत्युपसंहारदर्शनाधिकरणम् ॥

---

## (९) ॥ अथ कृत्स्नप्रसक्त्यधिकरणम् ॥

**सू०॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥**

**सू०॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥**

**सू०॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥**

**सू०॥ स्वपक्षदोषाच्च ॥ २९ ॥**

**सू०॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥**

**सू०॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥**

कृत्स्नप्रसक्त्यधिकरणे—सूक्ष्मचिदचिद्विशिष्टस्योपादानत्ववादे विशिष्टस्य विशेषणविशेष्यतत्सम्बन्धानतिरिक्ततया विशेष्यस्य ब्रह्मणोऽप्युपादानत्वावश्यम्भावेन तत्र च क्षीरादेः कात्स्न्र्येन दध्यादिभाववत् ब्रह्मणः कात्स्न्र्येन कार्यभावे दध्यवस्थायां क्षीरानवशेषवत् ब्रह्मणोऽप्यनवशेषापत्त्या तस्य सार्वकालिकसत्ताप्रतिपादकश्रुत्यादिव्याकोपः प्रसजेत् । अग्निसंयुक्तजतुखण्डस्य एकदेशेन द्रवत्वापत्तिवत् ब्रह्मणोऽप्येकदेशेन कार्यभावापत्तौ तद्वदेव सावयवत्वापत्त्या ब्रह्मणो निरवयवत्वप्रतिपादकश्रुत्यादिव्याकोपः प्रसजेत् ।

न च सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणो विशेषणीभूतचिदचिद्द्वारा स्थूलभावापत्त्यभ्युपगमेन क्षीरादिवत्स्वरूपपरिणामानभ्युपगमात् नोक्तविकल्पायत्तदोषावकाश इति वाच्यम् । तथापि चिदचितोरेकैकस्मिन् ब्रह्मणः कृत्स्नैकदेशपर्याप्तवृत्तिविकल्पेन तत्राप्युक्तदोषस्य दुर्वारत्वात् । लोके घटादिद्रव्यस्य युगपदनेकाधिकरणपर्याप्तवृत्त्यदर्शनात् चेतनानां क्रमेणैव देवादिनानाशरीरप्रतिसम्बन्धित्वदर्शनेन युगपदनेकचिदचिद्रूपविजातीयशरीरप्रतिसम्बन्धित्वायोगाच्च । तस्मान्न सूक्ष्मचिदचिच्छरीरकं ब्रह्मोपादानमिति युक्तमिति प्राप्ते—

'येनाश्रुतं श्रुतं भवति' (छा० ६-१-३) 'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्' (अष्ट० २-२-७) 'सोऽकामयत । बहु स्यां प्रजायेयेति' (तै० २-६) 'तदात्मानं स्वयमकुरुत' (तै० २-७) 'यद्भूतयोनिं' (मु० १-१-६) 'सत्यं ज्ञानमनन्तं ब्रह्म'

(तै० २-१) इत्यादिश्रुतेः निरवयवमेव जगदुपादानं स्वयञ्च सततैकरूपं परिपूर्णमिति कण्ठतः प्रतिपादनेन 'श्रौतेऽर्थे किमनुपपन्नं' इति न्यायेन 'नैषा तर्केण मतिरापनेया' (कठ० २-९) इति श्रुतेश्च केवलतर्केण श्रुतेर्निराकरणं न युक्तम्। बहुभवनसङ्कल्पायत्तपरिणामस्य निरङ्कुशैश्वर्याख्यमहागुणाधायकत्वेन गुणपूर्णत्वस्वभावाप्रच्यावकत्वात्। न च यूपादित्यादिवाक्यवत् बाधितार्थकमिति वक्तुं युक्तम्। ब्रह्मणः शब्दैकमूलतया प्रमाणान्तरागोचरत्वेन यूपादित्यादाविव बाधानवतारात्। लोकप्रमाणसिद्धानामग्निजलादीनामन्योन्यविलक्षणौष्ण्यशैत्यलक्षणस्वभावयोगवत् स्वेतरसमस्तवस्तुविसजातीयस्य ब्रह्मणोऽपि सकलेतरविलक्षणशक्तियोगस्य सम्भवाच्च। तत एव कृत्स्नैकदेशविकल्पोऽपि न कल्पते। 'तत्सर्वं व्याप्य नारायणः स्थितः' (नारायणानुवाक) 'तेनेदं पूर्णं' मित्यादिप्रत्येकपर्याप्तवृत्तिप्रतिपादकश्रुतेः कुतर्केणानिवार्यत्वात्। वैशेषिकमते घटत्वादेरनेकेषु घटेषु प्रत्येकपर्याप्तवृत्तेः एकस्यैव घटद्रव्यस्य स्वावयवानेककपालेषु पर्याप्तवृत्तेश्चाभ्युपगमाच्च। चेतनानां क्रमिकदेवादिशरीरप्रतिसम्बन्धित्वस्य तत्तच्छरीरभोग्यफलप्रदकर्मस्वभावमूलत्वेऽपि सौभर्यादेरिव भगवतोऽपि युगपदनेकशरीरप्रतिसम्बन्धित्वोपपत्तेः चेतनानां युगपद्विजातीयस्थूलसूक्ष्मशरीरप्रतिसम्बन्धित्ववत् भगवतोऽपि युगपद्विजातीयचिदचिदात्मकानेकशरीरप्रतिसम्बन्धित्वसम्भवाच्च। तस्माद्विचित्रशक्तियुक्तस्य चिदचिच्छरीरस्य ब्रह्मणो जगदुपादानत्वमविचाल्यमिति सिद्धान्तितम्।

॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥

---

## (१०) ॥ अथ नप्रयोजनवत्त्वाधिकरणम् ॥

**सू०॥ न प्रयोजनवत्त्वात् ॥ ३२ ॥**

**सू०॥ लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥**

**सू०॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥**

**सू०॥ न कर्माविभागादिति चेन्नानादित्वादुपलभ्यते चाप्युपपद्यते च ॥ ३५ ॥**

## सू०॥ सर्वधर्मोपपत्तेश्च ॥ ३६ ॥

नप्रयोजनवत्त्वाधिकरणे—सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मण उक्तरीत्या उपादानत्वसम्भवेऽपि 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायेन बुद्धिमत्प्रवृत्तेः प्रयोजनव्याप्ततया परिपूर्णस्य ब्रह्मणो जगत्सृष्ट्या प्रयोजनाभावेन जगत्स्रष्टृत्वं नोपपद्यते। तथा हि न तावत्स्वार्था भगवतो जगत्सृष्टिरुपपन्ना। ब्रह्मणोऽवाप्तसमस्तकामतयाऽवाप्तव्यस्वप्रयोजनाभावात्। लोके परिपूर्णकामानामपि राज्ञां तादात्विकानन्दविशेषावाप्त्यर्थतया कन्तुकक्रीडादि-प्रवृत्त्युपपत्तावपि नित्यनिरतिशयानन्दवत्तया 'सर्वमिदमभ्यात्तोऽवाक्यनादरः' (छा० ३-१४-२) इति श्रुत्युक्तस्य भगवतो लीलयापि जगत्सृष्टिप्रवृत्त्यनुपपत्तेश्च। नापि परार्था सृष्टिरुपपन्ना। परो हि जीवः। तस्य चेत्सुखजगत्सृष्टिरेव स्यात् न दुःखजगत्सृष्टिः। तथा सति पक्षपातरूपवैषम्यापत्तेः। दुःखप्रा[प]णे नैर्घृण्यापत्तेश्च।

नन्विष्टाधिकदुःखप्रापणमेव नैर्घृण्यावहम्। अन्यथा मृष्टान्नभोजनस्यापि नान्तरीयकश्रमात्मकदुःखसंवलिततया मृष्टान्नभोजयितुरपि नैर्घृण्यापत्तेः। तथा च सांसारिकदुःखप्रापणस्य पापक्षयमुखेनापवर्गार्थितया ततो नेश्वरस्य नैर्घृण्यम्। अनादिकर्ममूलतया च दुःखावाप्तौ वैषम्यमपि न प्रसज्यत इति चेन्न। सर्वशक्तस्य ब्रह्मणो दुःखलेशप्रापणमन्तरेणैव स्वनिग्रहात्मकपापक्षपणसामर्थ्ये सत्यपि तत्प्रापणे नैर्घृण्यस्य दुर्वारत्वात्। प्राकृतप्रलयावस्थायामनादिसूक्ष्मचि-दचिद्विशिष्टब्रह्मावस्थानेऽपि एकत्वावधारणेन चेतनार्जितकर्मानवस्थानावगमेन दुःखादेस्तन्मूलकत्वासम्भवेन केवलभगवत्सङ्कल्पमूलकतया पक्षपातरूपवैषम्यस्या-निवार्यत्वाच्च। तस्मात्कथञ्चिदपि भगवतः प्रयोजनाभावात् न स्रष्टृत्वोपपत्तिरिति प्राप्य—

राज्ञां कन्तुकादिक्रीडयेव पूर्णस्य भगवतोऽपि जगत्सृष्ट्यादिना लीला-रूपेण तादात्विकानन्द एव प्रयोजनं सम्भवति। 'क्रीडतो बालकस्येव चेष्टां तस्य निशामय' इत्यादिप्रमाणेन भगवतोऽपि तादात्विकानन्दस्याभ्युपेयत्वात्। अन्यथा भगवत्प्रीतिकरकर्मज्ञानविधायकशास्त्रवैयर्थ्यापातात्। न चावाप्तसमस्त-कामत्वावेदकश्रुतिविरोधः। स्वसङ्कल्पेन सर्वान् कामानवाप्तुं शक्त इति

तच्छ्रुतेर्योग्यतागर्भत्वात् । भगवति, वैषम्यनैर्घृण्ययोः कर्ममूलत्वेन प्रसक्त्यभावात् । 'रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमापद्यन्ते पुण्यः पुण्येन कर्मणा भवति पापः पापेन' (छ० ५-१०-७) इत्यादिश्रुत्या

"निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै ब्रह्मशक्तयः ॥" (वि० पु० १-४-५१)

इत्यादिस्मृत्या च विषमसृष्टौ शक्तिशब्दितचेतनकर्मणामेव प्रधानकारणत्वावगमेन लोके तत्तत्पुरुषकृतकार्यविशेषान्पर्यालोच्यान्यूनानतिरेकेण भृत्येषु कूलसभृतिदातरि पक्षपातरहितोऽयमित्येव व्यवहारा[त्कर्म]णामेव प्रधानकारणत्वात कर्मानुयायिनि भगवति तत्प्रसक्तेस्सूत्रकृतैव निराकृतत्वात् भगवानपि भोगेन विना स्वनिग्रहानुग्रहात्मकपापपुण्यक्षापणाशक्त एव। तथैव शास्त्रसिद्धत्वात् । तत्सामर्थ्ये सति हि तदकरणं नैर्घृण्यमावहेत्। भगवतश्च तदशक्तिर्न दोषावहा । शक्त्यशक्त्योर्विषयविशेषेणैव गुणदोषरूपत्वात् विहितनिषिद्धविषयशक्त्यशक्त्योरतादृशत्वात्। अतो भगवतो दुःखप्रापणं न नैर्घृण्यमापादयति प्रत्युत व्रणचिकित्सकन्यायेन कारुणिकतामेवापादयति। सदेव सोम्येति प्राक्सृष्टेरेकत्वावधारणं न कर्मसत्तां निवर्तयति किन्तु सृष्टिकालीनस्थूलविभागमेव निवर्तयति। सदग्र आसीत् एकमद्वितीयमिति पदानर्थक्यापातात् ।

तदेवं स्मृतिन्यायविरोधानवकाशात् समन्वयाध्यायोक्तं ब्रह्मकारणत्वं सुस्थितम् इति सिद्धान्तितम् ॥

**इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**द्वितीयस्याध्यायस्य**
**प्रथमः पादः ॥**

**अधिकरणानि १०. सूत्राणि ३६.**

## ॥ द्वितीयः पादः ॥

### (१) रचनानुपपत्त्यधिकरणम् ॥

सू०॥ रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥

सू०॥ पयोऽम्बुवच्चेत्तत्रापि ॥ २ ॥

सू०॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥

सू०॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥

सू०॥ पुरुषाश्मवदिति चेत्तथापि ॥ ५ ॥

सू०॥ अङ्गित्वानुपपत्तेश्च ॥ ६ ॥

सू०॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥

सू०॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥

सू०॥ विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥

द्वितीयाध्यायस्याद्यपादेन ब्रह्मकारणत्ववादे साङ्ख्यवैशेषिकादिपरोद्भावितस्मृतिन्यायविरोधरूपदूषणानि परिहृत्य द्वितीयपादेन परपक्षे कारणविषयदूषणान्युद्भाव्यन्ते । तत्र प्रथमं सत्कार्यवादादिवैदिकपक्षपरिग्रहसाम्यातिशयेन साङ्ख्यपक्षस्योपादेयत्वशङ्कायाः प्रथमभावित्वेन प्रथमं तन्मतं दूषयता सूत्रकृता कारणभूतप्रधानसाधकानुमाननिराकरणेनैव तन्मतं सर्वं निराकृतं भवतीति तदुक्तानुमानं निराक्रियते ।

तथा हि तन्मतस्थितिः—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

(सांख्यका० ३)

अस्यार्थः—साम्यावस्थानि सत्त्वरजस्तमांसि मूलप्रकृतिः । सा तु न कस्यचिद्विकृतिः अनवस्थापत्त्या क्वचिद्विश्रान्त्यवश्यम्भावात् । स्वयमचेतना

सकलचेतनभोगापवर्गहेतुः । महदहङ्कारौ पञ्च तन्मात्राणि च स्वकार्येन्द्रियभूतापेक्षया प्रकृतयः स्वकारणापेक्षया विकृतयश्च । श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि वागादीनि पञ्च कर्मेन्द्रियाणि मनश्च आकाशादीनि पञ्च भूतानि च केवलविकाराः न तत्त्वान्तरप्रकृतयः । पुरुषस्तु स्वयमपरिणामित्वेन न कस्यचित्प्रकृतिः नित्यत्वान्न कस्यचिद्विकृतिः निर्लेपश्चैतन्यमात्रवपुः । निर्लेपत्वादेव न कर्ता भोक्ता च । कर्तृत्वभोक्तृत्वादिश्च प्रकृतेरेव धर्मः । एवंविधतत्त्वाज्ञानेन प्रकृतिधर्मान् कर्तृत्वभोक्तृत्वादीन् स्वस्मिन्नध्यस्य पुरुषस्संसरति । तथाविधतत्त्वज्ञानाच्च मुच्यते । प्रपञ्चस्य सुखदुःखमोहात्मकतया सत्त्वरजस्तमोमयत्वेन तथाविधमेव कारणमनुमानेन साध्यते । यथेदं जगत् सत्त्वादिगुणत्रययुक्तवस्तूपादानकं सत्त्वादिगुणसमन्वितत्वात् । यद्धर्मसमन्वितं यत्कार्यद्रव्यं तद्द्रव्यं तद्धर्मयुक्तवस्तूपादानकं यथा शौक्ल्यादिधर्मयुक्तं पटादिकार्यद्रव्यं शौक्ल्यादियुक्ततन्त्वाद्युपादानकमिति सामान्यमुखी व्याप्तिः । कार्यभूते जगति सत्त्वादिगुणसमन्वयश्च प्रीत्यप्रीतिविषादप्रकाशप्रवृत्त्यादिकार्यावसेयः ।

यद्वा—सर्वं कार्यं सकर्तृकं कार्यत्वाद्घटवदिति विशेषमुखी व्याप्तिः । न च परमाणुमीश्वरं वादायार्थान्तरता । परमाणूनामनेकत्वेन गौरवात् । सत्त्वादिगुणयुक्तजडात्मकप्रपञ्चं प्रत्ययथाभूतस्येश्वरस्य कारणत्वबाधाच्च अर्थान्तरत्वाशङ्कानवकाशादिति ।

तदिदमनुमानं बलवदनुमानेन बाधितम् । तथा हि —अनुमानं प्रधानं न जगदुपधायकं चेतनानधिष्ठितत्वे सति अचेतनत्वात्केवलदार्वादिवत् । न च सिद्धान्ते प्रधानानुमानानभ्युपगमा(दानुमानिक)[दनुमान]मित्युक्तावाश्रयासिद्धिरिति वाच्यम् । श्रुतिविरुद्धस्वतन्त्रप्रधानसाधकानुमानानभ्युपगमेऽपि महदादि कार्यं किञ्चिदुपादेयं कार्यत्वादिति ईश्वराधीनप्रधानसाधकानुमानाभ्युपगमेनोक्तदोषानवकाशात् । परमतमभ्युपेत्य तथानिर्देशे दोषाभावाच्च । न चात्र व्याप्त्यसिद्धिः । तक्षकादितत्तत्कार्याभिज्ञचेतनाधिष्ठितदार्वादेः प्रासादादिकार्यारम्भाणां प्रदर्शनेन निरुपाधिकान्वयव्यतिरेकसहचाराभ्यां व्याप्तेर्निश्चयात् ।

न च चेतनानधिष्ठितक्षीरजलादेर्वत्सादिवृद्ध्यर्थं स्वयमेव प्रस्रवदर्शनेन व्यभिचार इति वाच्यम् । तस्य पक्षीभूतप्रधानतुल्यतया पक्ष इव पक्षसमे व्यभिचारस्यादोषत्वात् । धेन्वाद्युपयुक्ततृणादेरपि पक्षसमत्वेनादोषत्वाच्च ॥

न च गमनशक्तिवियुक्तस्यान्धसन्निधानेन गमनप्रवृत्तिवत्, कान्तमणिसन्निधानेऽयसः प्रवृत्तिवच्च पुरुषसन्निधानेन प्रकृतेरपि जगत्प्रवृत्तिस्सम्भवतीति वाच्यम् । अन्धपङ्गोर्वहनमार्गोपदेशरूपकादाचित्कव्यापारेणायस्कान्तमण्योः परस्पराभिमुख्यरूपतात्कालिकव्यापारेण च तात्कालिकगमनादिप्रवृत्त्युपपत्तावपि प्रकृतिपुरुषयोस्तादृशव्यापाराभावात्, तयोस्सन्निधानस्य नित्यतया नित्यसर्गप्रसङ्गेनाकिञ्चित्करत्वाच्च, कुविन्दकुलालाद्यधिष्ठातृसङ्कल्पानुविधायिसर्गादिनियमदर्शनाच्च चेतनकर्मानुविधायिसङ्कल्पविशेषवदीश्वराधिष्ठानस्यावश्यकत्वेनाप्रयोजकत्वशङ्कानवकाशादिति । बलवतोक्तानुमानेन साङ्ख्योक्तानुमानस्य बाधिततया तन्मतं सर्वमनादेयमिति रचनाधिकरणनिर्णीतम् ॥

॥ इति रचनानुपपत्त्यधिकरणम् ॥

---

## (२) ॥ अथ महद्दीर्घाधिकरणम् ॥

**सू० ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १० ॥**

**सू० ॥ उभयथापि न कर्मातस्तदभावः । ११ ॥**

**सू० ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १२ ॥**

**सू० ॥ नित्यमेव च भावात् ॥ १३ ॥**

**सू० ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥**

**सू० ॥ उभयथा च दोषात् ॥ १५ ॥**

**सू० ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥**

आनुमानिकप्रधानकारणसत्कार्यवादिसाङ्ख्यपक्षप्रतिक्षेपानन्तरमानुमानिकपरमाणुकारणवादिवैदिकवैशेषिकपक्षः प्रतिक्षिप्यते । सैषा हि तन्मतप्रक्रिया—यानीमानि जालमरीचिस्थानि सर्वतस्सूक्ष्मतमानि दृश्यन्ते तानि त्र्यणुकानि सावयवसमवेतानि चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन त्र्यणुकावयवानां द्व्यणुकानां तदवयवानां परमाणूनाञ्च युगपदेव सिद्धिरिष्यते । ते च परमाणवो निरवयवा एव तेषां सावयवत्वे तदवयवानामपि तथात्वं तेषामपि तथात्वमित्य-

नवस्थापत्तेः । मेरुसर्षपयोरनन्तावयवारब्धत्वाविशेषेण तुल्यपरिमाणत्वापत्तेश्च । तेषु निरवयवेषु परमाणुषु प्रलयावस्थायां निश्चलेषु भगवतस्सिसृक्षावशात्कर्मोत्पत्त्या द्वयोर्द्वयोः परमाण्वोस्संयोगे सति द्वाभ्यां परमाणुभ्यां द्व्यणुकान्युत्पद्यन्ते । परमाणोरेकस्यासमवायिकारणसंयोगाभावेऽनारम्भकत्वात् त्र्यादीनामारम्भकत्वे द्व्यणुकेषु महत्त्वापाताच्च । द्व्यणुकैश्च त्रिभिस्त्रिभिस्त्र्यणुकान्यारभ्यन्ते । पूर्वोक्तयुक्तेरेकस्यानारम्भकत्वेन कार्यगतमहत्त्वस्य कारणमहत्त्वबहुत्वान्यतरप्रयोज्यतया द्व्यणुकेषु महत्त्वाभावेन बहुत्वस्यावश्यवक्तव्यत्वे त्रित्वस्य प्रथमोपस्थितिलाघवात् चतुरादिकल्पनायां प्रमाणाभावाच्च त्रयाणामेव त्र्यणुकारम्भकत्वप्राप्तेः । द्वाभ्यां त्रिभिरधिकैर्वा त्र्यणुकैश्चतुरणुकान्यारभ्यन्ते । एवं क्रमेण महापृथिव्यादिभूतचतुष्टयमुत्पद्यते । महेश्वराधिष्ठितपरमाणूनां जगत्कारणत्वाभ्युपगमेन तेषामचेतनत्वेऽपि ईश्वरेच्छावशात्सृष्ट्यादिव्यवस्था चोपपद्यते । न च लाघवात्प्रधानमेव जगत्कारणमिति शङ्क्यम् । एकस्यासमवायिकारणसंयोगाभावेनानारम्भकत्वादिति ।

तदिदं निराक्रियते 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां' (सू० २-२-१०) इति । पूर्वसूत्रादसमञ्जसमिति वर्तते । वाशब्दश्चार्थे । ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत् त्र्यणुकद्व्यणुकोत्पत्तिवत् अन्यच्च तदभ्युपगतमसमञ्जसम् । तथा हि निरवयवाः परमाणवो न द्व्यणुकारम्भसमर्थाः । लोके प्रत्येकं दशदिक्सम्बन्धिदशप्रदेशावच्छिन्नं मृत्पिण्डखण्डद्वयं स्वक्रियया संयोक्ष्यमाणमेकया महादिशा विदिग्द्वयेन चावच्छिन्नैः प्रत्येकं त्रिभिस्त्रिभिः प्रदेशैराहत्य षड्भिः प्रदेशापरपर्यायपार्श्वैस्संयुज्यमानमन्यैश्च सप्तभिः पार्श्वैरसंयुज्यमानं [संयुज्यमाना] संयुज्यमानत्रिसप्तपार्श्वावच्छिन्नं सदेव स्वस्मादधिकपरिमाणमवयविनमारभत इति दृष्टतया दृष्टानुसारित्वात् कल्पनायाः परमाण्वोरपि प्रत्येकं दशदिक्सम्बन्धिनोरुक्तरीत्या संयुज्यमानासंयुज्यमानत्रिसप्तपार्श्वावच्छिन्नयोरेव द्व्यणुकारम्भकत्वावश्यम्भावेन निरवयवयोश्च परमाण्वोः स्वतस्संयुज्यमानासंयुज्यमानापार्श्वभेदासम्भवात् महतो निरवयवाकाशस्य निरवयवपरमाणोश्चाव्याप्यवृत्तिपरमाण्वन्तरनिरूपितारम्भकसंयोगावच्छेदकत्वासम्भवेनाकाशादावौपाधिकप्रदेशभेदवत् परमाणूनामौपाधिकप्रदेशभेदासम्भवाच्च । न चैतद्दोषपरिहाराय परमाणूनां सावयव-

त्वमुपेतुं शक्यम् । उक्तरीत्या परमाण्ववयवानामपि सावयवत्वेन तदवयवानामपि तथात्वेनानवस्थापातात् । मेरुसर्षपयोस्तुल्यपरिमाणत्वापाताच्च ।

किञ्चाप्रामाणिकसमवायाभ्युपगमात् तन्मतमनादेयम् । 'पटसमवायवन्तस्तन्तवः' इति समवायविशिष्टप्रतीतिनिर्वाहकतया समवायस्य समवायान्तराभ्युपगमेऽनवस्थापत्त्या तत्र विशेषणताख्यस्वरूपसम्बन्धस्यावश्यकतया तत एव नीलघट इत्यादिगुणजात्यादिविशिष्टप्रतीत्युपपत्त्या समवायस्याप्रामाणिकत्वात् । किञ्च समवायनित्यत्वमपि तदभ्युपगतमयुक्तम् । सम्बन्धनित्यत्वे सम्बन्धिनामप्यवयव्यादीनां नित्यत्वप्रसङ्गात् । न हि सम्बन्धिना विना सम्बन्धः क्वचिद्वर्तते प्रतीयते वा । न च पितृपुत्रयोरन्यतराभावेऽपि पितृपुत्रभावसम्बन्धो वर्तते प्रतीयते चेति वाच्यम् । पितृपुत्रभावो नाम पितृत्वं पुत्रत्वं च । तच्च जनकपुंस्त्वं जन्यपुंस्त्वञ्च । न हि जन्यजनकयोरभावे जन्यत्वं जनकत्वं वा वर्तते प्रतीयते वा । पुत्रमात्रसद्भावे जन्यत्वमेव वर्तते । जनकमात्रसद्भावे जनकत्वमेव । तदुभयसद्भावे तदुभयञ्च वर्तते प्रतीयते च । ततश्च सम्बन्धनित्यत्वे सम्बन्धिनित्यत्वं दुर्वारम् ।

किञ्च परमाणूनां नित्यत्वाभ्युपगमोऽप्ययुक्तः । तेषां रूपादिमत्तया घटादिवदनित्यत्वावश्यम्भावात् । एतद्दोषपरिहाराय तेषां रूपाद्यनभ्युपगमे च तत्कार्यभूतेषु द्व्यणुकादिषु कारणगुणपूर्वकतया रूपाद्यभावप्रसङ्गात् । तस्मात् क्वचिदप्यंशे वैदिकपरिग्रहाभावात् निश्रेयसार्थिभिर्वैशेषिकमतमत्यन्तानुपादेयमिति निर्धारितम् ।

॥ इति महद्दीर्घाधिकरणम् ॥

---

## (३) ॥ अथ समुदायाधिकरणम् ॥

### सू० ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥

### सू० ॥ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् ॥ १८ ॥

सू० ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥

सू० ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २० ॥

सू० ॥ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २१ ॥

सू० ॥ उभयथा च दोषात् ॥ २२ ॥

सू० ॥ आकाशे चाविशेषात् ॥ २३ ॥

सू० ॥ अनुस्मृतेश्च ॥ २४ ॥

सू० ॥ नासतोऽदृष्टत्वात् ॥ २५ ॥

सू० ॥ उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥

वैदिककापिलवैशेषिकमतनिराकरणानन्तरं अवैदिकवैभाषिकादिमतानि निराक्रियन्ते। तत्र प्रथमं परमाणुकारणवादसाम्यात् वैभाषिकसौत्रान्तिकयोर्मतमेकाधिकरणेन निरस्यते। जैनानां परमाणुकारणवादसाम्येऽपि वैशेषिकमते परमाणुचातुर्विध्यस्थिरत्वरूपतदैकान्त्यवत् वैभाषिकसौत्रान्तिकमते परमाणुचातुर्विध्यक्षणिकत्वरूपतदैकान्त्याभ्युपगमायत्तप्रत्यासत्त्यतिशयेन तन्मतनिरासस्य जैनमतनिरासात्प्राथम्यम्। बौद्धत्वसाम्याद्योगाचारमाध्यमिकमतनिराकरणस्य जैनमतनिराकरणात्पूर्वभावित्वम्। अवैदिकत्वसाम्यादन्ते जैनमतनिरासः। शरीरादिकतिपयवस्तुक्षणिकत्ववादितया अर्धवैनाशिकवैशेषिकमतनिराकरणपरमहद्दीर्घाधिकरणस्य सर्ववैनाशिकवैभाषिकादिमतनिरासपराधिकरणद्वयस्य च वैनाशिकमतनिराकरणपराधिकरणत्रयात्मकपेटिकायां सङ्गतिश्चेति विभावनीयम्।

वैभाषिकास्सौत्रान्तिका योगाचारा माध्यमिकाश्चेति चत्वारो बुद्धशिष्याः। तेषु वैभाषिकास्सौत्रान्तिकाश्च बाह्यानर्थानभ्युपगच्छन्ति। बाह्यार्थानां यथायथं प्रत्यक्षत्वं वैभाषिकाः स्वीचक्रुः। सौत्रान्तिकास्तु ज्ञानानुमेयत्वमेवेत्याहुः। वैभाषिकसौत्रान्तिकानामित्थं तत्त्वप्रक्रिया—रूपरसगन्धस्पर्शस्वभावाः पार्थिवाः परमाणवः। रूपरसस्पर्शस्वभावा आप्याः। रूपस्पर्शस्वभावास्तैजसाः। स्पर्शस्वभावा वायवीयाः। ते च परमाणवः प्रत्येकं तथा तथा पुञ्जीभूताः पर्वतमहीसमुद्रबडवानलमहावाय्वात्मकतत्तद्भूतव्यवहारं भजन्ते। तेभ्यश्च पृथिव्यादिभूतेभ्यः शरीरेन्द्रियघटादिविषयरूपभौतिकसङ्घाता एव पदार्थाः नातिरिक्तमव-

यविद्द्रव्यमुत्पद्यते। तथात्वे तच्चाक्षुषत्वाय तत्र रूपादिमत्त्वावश्यम्भावेनावयव-रूपादिव्यतिरिक्तावयविरूपादेरुपलम्भापातात्। न हि नानारूपरसगन्धस्पर्शवद-वयवारब्धेषु वस्तुषु तत्तदवयवभेदव्यवस्थितनीलपीत[रूप]मधुराम्लरससुरभ्यसुरभि-[गन्ध]कठिनसुकुमारस्पर्शव्यतिरिक्तं किञ्चिद्रसादिकं केनापि क्वचित्कदाचिदुपल-भ्यते ; मूलमध्याग्रभागव्यवस्थितमहदल्पाल्पतरपरिमाणव्यतिरेकेण वृक्षादौ परिमा-णान्तरञ्चोपलभ्यते। कैश्चिदङ्गीकृतस्य चित्ररूपस्यान्यैर्निराकृतत्वात्, चित्ररसादेः कैश्चिदप्यनङ्गीकृतत्वाच्च चित्ररूपादिकमप्यनुपलब्धिपराहतमेव। तस्मादणुहेतुक-समुदायाः केचन भूतहेतुकसमुदायाश्च केचनेति समुदायद्वयात्मकाः पदार्थाः। ते च प्रत्यक्षा इति वैभाषिकाः॥

सौत्रान्तिकास्तु—नीलाद्याकारं ज्ञानं स्वप्रकाशानुभवसिद्धम्। केवल-ज्ञानस्य क्वाप्यननुभवात्। नीलादिश्च ज्ञानाकारो ज्ञानसहोपलम्भनियमात् ज्ञानत्ववत् नीलाद्याकारेण ज्ञानेन नीलादयो बाह्यार्थास्तावदनुमेया इति स्वीकुर्वन्ति। परमाणुतत्सङ्घातात्मकं जगत्क्षणिकं अर्थक्रियाकारित्वात् शरीरादि-वदित्यनुमानेन जगतः क्षणिक(त्वम्)[त्वं च]।

(उभयस्मिन् स्थिरे) तदिदमनुपपन्नम्। परमाणुभूतोभयहेतुके समुदायद्वये-ऽभ्युपगम्यमाने समुदायप्राप्त्यसम्भवात् संयोगविशेषात्मकसमुदायं प्रति परमाणूनां क्रियादिव्यापारद्वारा हेतुत्वं वाच्यम्। तच्च न सम्भवति। क्रियादीनां द्रव्यसमवायि-तया द्रव्योत्तरभाविनां स्वोत्तरक्षणविनाशिषु क्षणिकपरमाणुषूत्पादासम्भवात्। चलता-मणूनां संयोगकाले नष्टत्वात्, संयुज्यमानानां क्रियाकालेऽनुत्पन्नत्वाच्च। परमाणूनां क्षणद्वयसम्बन्धं विना क्रियापूर्वकसंयोगविशेषात्मकसमुदायप्राप्तिर्दुरुपपादा। क्रिया-संयोगयोस्सामानाधिकरण्यं विना [हेतु] हेतुमद्भावे चातिप्रसङ्गः। किञ्च क्षणि-कानामालयविज्ञानानामहंमानरूढतया ग्राहकात्मभावस्वीकारे सति इन्द्रियसंप्रयोग-ज्ञानहानोपादानानि [न] सङ्गच्छन्ते। यस्य चेतनस्येन्द्रियसंप्रयोगस्तस्य ज्ञानकाले नष्टत्वात् यस्य च ज्ञानं तस्य हानादिकाले नष्टत्वात् क्षणिकसन्तानिव्यतिरिक्तस्य सन्तानस्य स्थिरस्य क्षणिकत्ववादिभिरङ्गीकारासम्भवेन सन्तानैक्यादपि तदुपपादनं दुर्घटमेव। नन्वस्थिरेषु स्थिरत्वरूपाविद्या तावद्रागादिहेतुः। रागादिश्चाविद्या-न्तरहेतुरित्येवं बीजाङ्कुरन्यायेनाविद्यारागाद्योः प्रवाहानादित्वेन भूतभौतिकसमु-

दायभावमन्तराऽनादिजगत्प्रवृत्त्यसम्भवात् अकामेनापि बलात् क्षणिकपरमाण्वादि-समुदायप्राप्तिरविद्यादित इति [स्वीकार्यमिति] चेन्न। अविद्यादेस्सङ्घातभावनिमित्त-तायाः क्वाप्यक्लृप्तत्वेन क्रियादिरूपहेत्वभावनिबन्धनसमुदायप्राप्त्यनुपपत्तेः परिहर्तु-मयुक्तत्वात् ज्ञानस्वरूपात्मनामपि क्षणिकतयाविद्यादेरपि प्रवाहानादित्वासम्भवात्।

तथाऽवश्याभ्युपेयबाह्यनीलाद्याकारनिरूपितविषयिताख्यसम्बन्धित्वमात्रेण सविषयापरपर्यायसाकारज्ञानानुभवोपपत्तौ नीलादेर्ज्ञानाकारस्य कल्पनं, घटं साक्षा-त्करोमीत्याद्यनुभवविरोधेन बाह्यार्थानां ज्ञानानुमेयत्वमेवेति कल्पनञ्च सौत्रान्तिका-भिमतमत्यन्तासङ्गतमेव। जगतः क्षणिकत्वसाधकानुमानञ्च 'स एवायं घटः' 'योऽहं पूर्वं घटमद्राक्षं सोऽहं घटं स्पृशामि' इत्यादिबाह्यान्तरवस्तूनां पूर्वोत्तर-कालसम्बन्धित्वरूपस्थैर्यावगाहिप्रत्यभिज्ञया बाधितं विरुद्धञ्च। जलाहरणादि-साधनत्वरूपार्थक्रियाकारित्वस्य इन्द्रियसंयोगादिपूर्वकेष्टसाधनताज्ञानचिकीर्षाप्रयत्न-चेष्टामूलक्रियादिव्यापारपरम्परयैवाभ्युपगन्तव्यतया क्षणिकत्ववादे चोक्तकारणानां सामानाधिकरण्याभावेन कार्योत्पादासम्भवात् तत्सामानाधिकरण्याय स्थैर्यावश्य-म्भावेन क्षणिकत्वाभावरूपस्थैर्यबाधकतया हेतोस्साध्याभावसाधकत्वरूपविरुद्धलक्ष-णाक्रान्तत्वात्। न हि शरीरादीनां त्वदभिमतक्षणिकत्वमस्माभिरङ्गीकृतम्। किन्त्ववयवोपचयापचयात्मकविशरणस्वभावरूपत्वमेवेति न तत्र हेत्वनुपपत्तिशङ्का। क्षणिकत्ववादे ज्ञातॄणां ज्ञेयानाञ्च प्रतिक्षणविनाशितया व्याप्तिपदज्ञानादीनामनु-मित्यादिकारणानामैकाधिकरण्यसमानविषयकत्वाभावेनेष्टसाधनतादिप्रमित्यसम्भवेन सकललौकिकवैदिककर्मप्रवृत्त्यनुपपत्तिः। अन्यस्यान्यानुष्ठितकर्मफलभोगे चोदा-सीनानामपि फलापत्तिः। तस्मात्प्रत्यभिज्ञाबलेन लोकव्यवहारानुरोधेन च बाह्या-न्तराणामर्थानां स्थैर्यमवश्याभ्युपेयमिति न तन्मतमुपादेयं मुमुक्षुभिरिति समुदा-याधिकरणे स्थापितम्॥

॥ इति समुदायाधिकरणम्॥

---

## (४) ॥ अथ नाभावाधिकरणम् ॥

### सू०॥ नाभाव उपलब्धेः ॥ २७ ॥

### सू०॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥

### सू०॥ न भावोऽनुपलब्धेः ॥ २९ ॥

बाह्यान्तरास्तित्ववादिवैभाषिकसौत्रान्तिकमतं निराकृत्य आन्तरविज्ञानमात्रास्तित्ववादियोगाचारमतं निराक्रियते । तन्मतस्थितिरियम्—घटपटादिज्ञानानां तत्तत्प्रवृत्त्यादिव्यवस्थापकं तत्तदसाधारण्यं तत्तदर्थसारूप्यं (रूपं) विना न घटत इत्यवश्यं अर्थसरूपं रूपं ज्ञानेष्वास्थेयमिति तत एव सर्वव्यवहारोपपत्तौ ज्ञानाकारभूतनीलादिव्यतिरेकेण बाह्यार्थकल्पनं न प्रमाणपथमधिरोहति । विज्ञानाकारभूतं नीलादिकञ्च, विमतं विज्ञानाभिन्नं भासमानत्वात् विज्ञानोपलम्भव्याप्योपलम्भविषयत्वाच्च विज्ञानवदित्यनुमानेन विज्ञानस्वरूपं साध्यते । विज्ञानोपलम्भव्याप्यत्वञ्चाभेदेन कालिकं बोध्यम् । घटमहं जानामीति क्रियाकर्मभावेन भेदावभासश्च द्विचन्द्रज्ञानवद्भ्रान्तिरेव । उपरिस्थितानामुद्यतां नक्षत्रादीनां भूमिस्थत्वावभासवत् बाह्यावभासोऽपि भ्रान्तिरेव । घटमहं जानामीत्येकस्यैव ज्ञानस्य कर्तृकर्मक्रियारूपतया भेदावभासश्च पूर्वपूर्ववासनाबलाद्भवति । घटाकारज्ञानोत्पत्त्यनन्तरं कपालाकारज्ञानोत्पत्तिश्च वासनावैचित्र्यादुपपद्यते । तस्मान्नीलाद्याकारज्ञानस्य स्वप्रकाशत्वादेव क्षणिकत्ववादिवैभाषिकसौत्रान्तिकमत इव प्रत्यक्षत्वानुमेयत्वासम्भवरूपदूषणं नात्र मत इति ।

सोऽयं विज्ञानातिरिक्तवस्त्वभाववादो न सम्भवति । घटमहं जानामीति कर्मकर्तृक्रियात्मतया बाह्यान्तरतया चाबाधितोपलब्धेः विज्ञानातिरिक्तबाह्यान्तरवस्तूनां निह्नवासम्भवात् । अन्यथा विज्ञानस्यापि निह्नवापत्त्या माध्यमिकमतप्रवेशप्रसङ्गात् । न ह्यत्राभिनिवेशादन्यत्किञ्चिन्नियामकमस्ति येन ज्ञानव्यतिरिक्तानां निह्नवः स्यात । न हि लाघवात् ज्ञानमात्रास्तित्वकल्पनं; कर्तुः कर्मणो वा कस्यचित्कल्पनेऽपि लाघवाविशेषात्, प्रत्यक्षसिद्धेषु वस्तुषु लाघवस्याकिञ्चित्करत्वाच्च । शीतोष्णनीलपीतादिसमूहालम्बनविज्ञानानां विरुद्धनीलाद्याकारत्वापत्त्या ज्ञानाकारत्वञ्च नीलादेर्न युक्तिमत । साहित्यस्य भेदव्यापकतया नीलतद्धियोस्सहोपलम्भ-

नियमेन नीलादेर्ज्ञानाभेदसाधनमत्यन्तविरुद्धमेव । ज्ञानानां प्रवृत्त्यादिव्यवस्थापकतत्तदसाधारण्यरूपनीलाद्याकारत्वं नीलाद्याकारवस्तुसम्बन्धित्वरूपं गौणमेव । न तु वस्तुन इव मुख्यम् । नीलं घटं जानामीत्यादिप्रतीत्या विषयगतत्वान्नीलत्वादेः नीलस्य ज्ञानं पीतस्य ज्ञानमिति नीलज्ञानयोः षष्ठ्या भेदप्रतीतेर्नीलाकारं ज्ञानं पीताकारं ज्ञानमिति प्रतीतेः स्ववासनाकल्पितत्वात् । तथाप्रतीतावपि नील आकारो विषयतया धर्मो यस्येति तदुपपत्तेः । स्वाप्नजागरितज्ञानयोर्विषयबाधाबाधरूपवैषम्येन तद्दृष्टान्तेन जागरितज्ञानानामर्थशून्यत्वकल्पनञ्चातिसाहसमेव । स्वाप्नज्ञानेऽपि तात्कालिकविलक्षणविषयविशेषसम्बन्धस्य 'सन्ध्ये सृष्टिरा'धिकरणे समर्थितत्वेन दृष्टान्तासिद्धिश्च । निरन्वयज्ञानविनाशाङ्गीकर्तृयोगाचारमते वासनाधानोक्तेरप्यसम्भवेन वासनावैचित्र्याद्विचित्रज्ञानोत्पत्तिकल्पनमपि जघन्यमेव । तस्माद्विज्ञानमात्रास्तित्ववादियोगाचारमतमनादेयं मुमुक्षुभिरिति नाभावाधिकरणे निर्णीतम् ।

॥ इति नाभावाधिकरणम् ॥

---

## (५) ॥ अथ सर्वथानुपपत्त्यधिकरणम् ॥

## सू०॥ सर्वथानुपपत्तेश्च ॥ ३० ॥

बाह्यार्थशून्यवादियोगाचारमतनिराकरणानन्तरं बाह्यान्तरसर्वशून्यवादिमाध्यमिकमतं निराक्रियते । इत्थं खलु माध्यमिकमतमार्गमर्यादा—शून्यमेव तत्त्वम् । अभावापत्तिरेव मोक्षः । शून्यस्याहेतुसाध्यतया स्वतस्सिद्धत्वात् । सत उत्पत्तौ हेतुरन्वेषणीयः । तत्तु भावादभावाच्च नोत्पद्यते । मृत्पिण्डादेरनुपमृदितात् घटाद्युत्पत्तेरदर्शनात् मृत्पिण्डादेरुपमर्दे चाभावादेवोत्पत्त्यापत्त्या कार्यस्याप्यभावात्मकतापत्तेरित्युत्पत्तिनिरूपणं न सम्भवति । किञ्च स्वतः परतो वा नोत्पत्तिस्सम्भवति । स्वत उत्पत्तावात्माश्रयदोषात् परत उत्पत्तौ च परत्वाविशेषात्सर्वस्मात्सर्वस्योत्पत्तिप्रसङ्गादिति जन्माभावादेव विनाशादेरप्यसम्भवाज्जन्मविनाशादयो भ्रान्तिसिद्धा एव । किञ्च बाह्यमान्तरं वार्थजातं (न परमार्थजातम्), न परमार्थसत् ।

सत्यत्वमिथ्यात्वक्षणिकत्वस्थिरत्वादिवादिभिः तैस्तैरुक्तान्योन्यदूषणेन सुन्दोपसुन्दन्यायपराहततया दुर्निरूपस्वरूपत्वात् ।

किञ्च किमान्तरं विज्ञानं नीलपीतादिष्वेकैकस्वभावं ? किं वा नीलपीताद्यनेकस्वभावम् ? नाद्यः—नीलस्वभावत्वे पीताद्याकारज्ञानापलापप्रसङ्गात् । नीलादिष्वेकैकस्वभावत्वे विनिगमकाभावाच्च । नान्त्यः ; नीलपीतादेस्सर्वजनसिद्धविरोधभङ्गप्रसङ्गात् । तस्माद्बाह्यान्तरार्थानां दुर्निरूपस्वरूपजन्मविनाशादिभाक्त्वात् स्वतस्सिद्धं शून्यमेव तत्त्वमिति ।

तदिदमयुक्तम् । तुच्छत्वस्वरूपस्य विकल्पासहत्वात् । किन्नु तुच्छत्वमसत्त्वरूपं ? उत सत्वरूपं ? अथोभयस्वरूपं ? आहोस्विदनुभयस्वरूपं ? भवताभिमतम् । सर्वथा भवदिष्टं तुच्छत्वमनुपपन्नम् । सद्बुद्धिशब्दयोरिवासद्बुद्धिशब्दयोरपि नित्यानुवर्तमानद्रव्यावस्थाविशेषविषयत्वस्यारम्भणाधिकरणे प्रतिपादिततया सर्वमसदिति प्रतिजानतस्तव सर्वं सदिति प्रतिजानत इव स्वाभिमततुच्छत्वसिद्ध्यसम्भवात् । भावातिरिक्ताभावानङ्गीकारादेवाभावात्मकस्वरूपतुच्छत्वमप्ययुक्तम् । सत्वासत्वोभयात्मकत्वेऽनुभयात्मकत्वे चावस्थाविशेष एव तुच्छत्वमित्यापन्नम् । यथा घटः स्वापेक्षया सन् (कपालापेक्षया नासन्) कपालापेक्षया च न सन्नित्युभयात्मकताप्रतीतिरवस्थाविशेषमालम्बते । नातो भवदभिमततुच्छत्वमुपपद्यते ।

किञ्च प्रतीतिव्यवस्थाप्यं हि तत्त्वम् । न हि सर्वं नास्तीति कदाचित् क्वचित्कस्यचित्प्रतीतिरस्ति । येन शून्यमेव तत्त्वं स्यात् ; किन्तु इदमिदानीमिह नास्तीति देशकालविशेषसबन्धिवस्तुविशेषाभावः प्रतीयत इति कथं सर्वशून्यं तत्त्वं भवेत् । न च सतः कारणानुपपत्त्या स्वतस्सिद्धं शून्यमेव तत्त्वमिति युक्तम् । पिण्डावस्थोपमर्दस्वरूपघटावस्थं प्रति पिण्डावस्थस्य हेतुत्वोक्तावुक्तदोषानवकाशात् घटत्वावस्थातोऽतिरिक्तस्य पिण्डत्वावस्थोपमर्दस्यानङ्गीकारेणानुपमृदितस्यैव पिण्डत्वावस्थस्य घटत्वावस्थं प्रति अव्यवहितपूर्ववर्तितया हेतुत्वोपपत्तेः । न ह्येतावताव्यवहितपूर्ववर्तिनः कृत्स्नस्याप्युत्तरकालभाविनं कृत्स्नं प्रति हेतुत्वमापद्येत । अनन्यथासिद्धत्वविशेषितस्यैव तथाविधस्य हेतुत्वेऽनतिप्रसङ्गात् । तत एव परत उत्पत्तौ परत्वाविशेषात् सर्वस्मात्सर्वोत्पत्तिप्रसङ्ग इति निरस्तम् । उक्तविधस्यैव परस्य हेतुत्वाभ्युपगमात् क्वचित्कस्यचिदनन्यथासिद्धौ अनादिस्वक्रियाया एव

नियामकत्वात्, सतः स्वस्यैव स्वं प्रत्यवस्थाभेदेन हेतुहेतुमद्भावे चात्माश्रया-दोष-कारकव्यापारसार्थक्यादेरारम्भणाधिकरण एव सुस्पष्टमुपपादितत्वाच्च ।

न च बाह्याभ्यन्तरवस्तूनां दुर्निरूपता। केवलतर्कावलम्बिनामन्योन्यव्या-घातेन वस्तुस्वरूपनिरूपणासम्भवेऽपि न्यायानुगृहीतश्रुतिमवलम्बतां तादृशश्रुत्यैव वस्तुस्वरूपस्य सुनिरूपत्वात्।

न च श्रुतीनामपि वैविध्यादनिरूपणमाशङ्कयम् । आपातप्रतिपन्न-श्रुतिवैविध्येऽपि उपक्रमादिन्यायविचारितानां श्रुतीनां वैविध्याभावात् पूर्वकाण्ड-तर्कपादेऽन्योन्यविरोधपरिहारेण न्यायाविरुद्धार्थे श्रुतिप्रामाण्यस्य व्यवस्थापितत्वात् तत्तदधिकरणपूर्वपक्षन्यायाभासमूलकतया व्याख्यात्रन्तरोत्प्रेक्षितानां श्रुत्यर्थानामङ्गं वा समभिव्याहारादविशेषादुभौ वेत्यादिवदनुपादेयत्वात्; नीलाद्यर्थसम्बन्धि-त्वस्यैव ज्ञानगतनीलाद्याकारतया अर्थतुल्यनीलादिसाकारज्ञानानभ्युपगमे तन्मतोक्तदूषणानवतारेण आन्तरार्थस्य सुनिरूपत्वाच्च। बाह्यार्थगतमुख्यनीलाद्या-कारस्य परस्परविरोधेऽप्युक्तामुख्यज्ञानगतनीलाद्याकारस्य नीलाद्यर्थसम्बन्धित्व-रूपस्य विरोधाभावेन नीलपीतादिसमूहालम्बनानामुक्तानेकनीलादिसाकारत्वे दोषाभावाच्च । तस्मात्सर्वशून्यवादिमाध्यमिकमतमनादेयमिति सर्वथानुपपत्त्यधि-करणे स्थापितम्॥

**॥ इति सर्वथानुपपत्त्यधिकरणम् ॥**

---

## (६) ॥ अथ नैकस्मिन्नसम्भवाधिकरणम् ॥

**सू० ॥ नैकस्मिन्नसम्भवात् ॥ ३१ ॥**

**सू० ॥ एवञ्चात्माकार्त्स्न्यम् ॥ ३२ ॥**

**सू० ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३३ ॥**

**सू० ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३४ ॥**

बुद्धशिष्याश्चतुर्विधास्सौगता निरस्ताः। बाह्यत्वसाम्याद्धीस्थतया जैना निरस्यन्ते। ते खल्वित्थमाहुः—

जीवधर्माधर्मपुद्गलकालाकाशाख्यं षड्द्रव्यात्मकं निरीश्वरं जगत्। जीवाः प्रसिद्धाः। धर्मो गतिमतां गतिहेतुः। अधर्मः प्रवृत्तिहेतुः। पुद्गलस्त्वणु-भूधरादिस्समुद्रादिः। अस्त्यभूद्भविष्यतीति व्यवहारहेतुरणुद्रव्यविशेषः कालः। आकाशस्तु एकोऽनन्तप्रदेशः। प्रकारान्तरेण तत्त्वसङ्ग्रहप्रकारश्च भाष्येऽनु-सन्धेयः। सर्वमिदं षड्द्रव्यात्मकं वस्तुजातं सप्तभङ्गीनयेन योजयन्ति। स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्ति चावक्तव्यम्, स्यान्नास्ति चावक्तव्यञ्च, स्यादस्ति च नास्ति चावक्तव्यञ्चेति। स्यात्पदमीषदर्थकमनैकान्त्यार्थकं वा तिङन्तप्रतिरूपकमव्ययम्। सत्त्वमसत्त्वं, सदसत्त्वं, सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वं, सत्त्वे सत्यनिर्वचनीयत्वं, असत्त्वे सत्यनिर्वचनीयत्वं, सदसत्त्वे सत्यनिर्वचनीयत्वमित्ययं सत्त्वे प्रदर्शितस्सप्तभङ्गीनयः। स्यान्नित्यं, स्यादनित्यं, स्यान्नित्यमनित्यञ्च, स्यादवक्तव्यम्, स्यान्नित्यमवक्तव्यञ्च, स्यादनित्यमवक्तव्यञ्च, स्यान्नित्यमनित्यमवक्तव्यञ्च, स्याद्भिन्नमभिन्नञ्चेत्यादि-प्रकारान्तरेण नित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वादिधर्मेष्वपि समानः। द्रव्यात्मना सत्वनित्यत्वाभिन्नत्वानि पर्यायशब्दितावस्थात्मना चासत्वानित्यत्वभिन्नत्वानि चेति सर्वं(मिति) षड्द्रव्यात्मकं (किं) वस्तु सप्तप्रकारमिति ॥

तदिदं जैनमतमयुक्तम्। विरुद्धानां सत्त्वादीनामेकस्मिन् वस्तुन्यवच्छेद-करूपोपाधिभेदं विना समावेशासम्भवात्। अन्यथा सत्त्वादीनां लोकसिद्ध-विरोधभङ्गप्रसङ्गः।

ननु लोकसिद्धविरोधभङ्गेनैव सप्तभङ्गीनयमुपपादयामः। तथा हि सर्वसम्प्रतिपन्नेन कालभेदेनैव सत्त्वासत्त्वे। तेन स्वकालविवक्षया घटोऽस्तीति सत्त्वं अन्यकालविवक्षया नास्तीत्यसत्त्वमिति भङ्गद्वयम्। इदानीं घटस्सन् अन्यदा त्वसन्निति क्रमविवक्षया सदसत्त्वम्। युगपत्सत्त्वासत्त्वविवक्षया चानिर्व-चनीयत्वमिति भङ्गद्वयम्। सत्त्वासत्त्वयोरनियमवचनीयत्वेन (स)प्रत्येकोभयविशे-षणतया भङ्गत्रयमित्याहत्य भङ्गीसप्तकमापन्नम्। तदुक्तमनन्तवीर्येण——

"तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्।
स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ॥

क्रमेणोभयवाञ्छायां प्रयोगस्समुदायभाक् ।
युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥
आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।
अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥
समुच्चयेन युक्तश्च सप्तमो भङ्ग इष्यते । " इति चेत् ;

(अद्यैव) तदा अस्मदभीष्ट एव त्वदभिमतसप्तभङ्गीनय इति पर्यवसन्नं विवादेन। घटादिः स्वदेशे स्वकाले चास्ति स्वात्मनास्ति नान्यात्मनास्तीति देशकालप्रतियोगिभेदेन सर्वसाक्षिकप्रतीतिसिद्धसत्त्वासत्त्वसमावेशे परीक्षकाणां सम्प्रतिपत्तेर्विवादानवतारात्। उत्पत्तिविनाशाख्यपरिणामास्पदत्वरूपानित्यत्वस्य तद्विपरीतत्वरूपनित्यत्वस्य च विरुद्धधर्माश्रयत्वरूपभिन्नत्वस्य तद्विपरीतत्वरूपाभिन्नत्वस्य च गोत्वाश्वत्ववत् युगपत्कालभेदेन चैकस्मिन्वस्तुनि सर्वथा समावेशानुपपत्तेश्च । तदनुपपत्तिप्रकारश्च श्रुतप्रकाशिकायां विस्तरेणाक्षेपसमाधानपूर्वकमुपपादितस्तत्रैवानुसन्धेयः ।

किञ्च एवमभ्युपगमे सति आत्मनामपि पर्यायभेदमाश्रित्यानैकान्त्ये परिमाणान्तरे नियामकाभावेन देहसमपरिमाणापत्त्या गजशरीरकस्यात्मनः कर्मणा पिपीलिकाशरीरप्राप्तिदशायां कार्त्स्न्येन प्रवेशानुपपत्तिः । सङ्कोचविकासावाश्रित्य तत्परिहारे चात्मनां विकारतत्प्रयुक्तानित्यत्वादिदोषप्राप्त्या घटादितुल्यत्वं प्रसज्यते । तस्मात् जैनमतमप्यनादेयमिति 'नैकस्मिन्नसम्भवात्' इत्यधिकरणे निर्णीतम् ।

॥ **इति नैकस्मिन्नसम्भवाधिकरणम्** ॥

---

## (७) ॥ अथ पाशुपताधिकरणम् ॥

**सू०॥ पत्युरसामञ्जस्यात् ॥ ३५ ॥**

**सू०॥ अधिष्ठानानुपपत्तेश्च ॥ ३६ ॥**

**सू०॥ करणवच्चेन्न भोगादिभ्यः ॥ ३७ ॥**

## सू०॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ३८ ॥

कपिलकणादसौगतार्हतमतानां न्यायाभासमूलत्वाद्वेदविरोधाच्चानुपादेयत्वमुक्तम् । तत एव पाशुपतमतमप्यनादेयं मुमुक्षूणामित्युच्यते । तन्मतानुसारिणः किल चतुर्विधाः—कापालाः कालामुखाः पाशुपताश्शैवाश्च । सर्वे च ते निमित्तोपादानयोर्भेदं निमित्तञ्च पशुपतिमाचक्षते । कापालाः—

"मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः ।
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ॥
कर्णिकां रुचकञ्चैव कुण्डलञ्च शिखामणिम् ।
भस्म यज्ञोपवीतञ्च मुद्राषट्कं प्रचक्षते ॥
आभिर्मुद्रितदेहस्तु न भूय इह जायते ।" (शैवागम)

इत्यादिना मुद्रिकाषट्कधारणादिकं निश्रेयससाधनमाहुः । कालामुखास्तु

'रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके ।
कपालं भस्मना स्नानं"

इत्यादि शैवागमप्रसिद्धं मोक्षसाधनम् ,

'दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात् ।
कापालं व्रतमास्थाय यतिर्भवति मानवः ॥' (शैवागम)

इत्यादिना केनचित् क्रियाविशेषेण ब्राह्मण्यप्राप्तिमाश्रमप्राप्तिञ्च प्राहुः ।

पाशुपतास्तु—कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः, पशुपाशविमोक्षाय बोद्धव्याः । पृथिव्यादीनि पञ्च भूतानि रूपादयः पञ्च गुणाश्च कार्याणि । चक्षुरादीनि दशेन्द्रियाणि मनोबुद्ध्यहङ्काराश्च त्रयोदशविधानि कारणानि । ध्यानादिरूपो योगः । धर्मार्थव्यापारो विधिः । स च शवभस्मस्नानभस्मशयनहसितनृत्तादिरूपो व्रताख्यः काय[न]स्पन्दनादिरूपो द्वाराख्यश्चेति द्विरूपः। भस्मस्नानं त्रिषवणं कर्तव्यं जलस्नानप्रतिनिधिरूपं नित्यं, मलमूत्रोत्सर्जनक्षुतनिष्ठीवनादिषु कर्तव्यम् जलशुद्धिप्रतिनिधिरूपमनुस्नानाख्यं नैमित्तकञ्च द्विरूपम् । असुप्तस्येव सुप्तलिङ्गप्रदर्शनं कायनं, वातादिरोगाभिभूतस्येव शरीरावयवानां कम्पनं

स्पन्दनम्। दुःखान्तः सात्मकोऽनात्मकश्च। सात्मकस्तु दृक्क्रियाशक्तिबललक्षणमैश्वर्यं, अनात्मकस्तु सर्वदुःखानामत्यन्तोच्छेदः। पशुपतिस्तु परमेश्वरः सर्वेष्वपि कार्येषु निमित्तं पशूनां कर्मानपेक्ष्य स्वेच्छयैव फलप्रदः, निरतिशयस्वतन्त्रत्वात्।

न चैवं कर्मणां वैफल्यं शङ्क्यम्। भगवदिच्छानुग्राहकत्वेन तत्साफल्यात् तदनुग्रहसम्भावनया कर्मसु प्रवृत्त्युपपत्तेः। सृष्टिक्रमोऽपि तादात्विकेश्वरेच्छाधीन एवेति।

तदिदं पत्युः पशुपतेर्मतमनादेयम्। तन्मतानुसारिणां कापालकालामुखपाशुपतशैवानां निःश्रेयससाधनांशे परस्परव्याघातात् वेदविरोधाच्चासामञ्जस्याद्रुद्राक्षजटाधारणादेर्मुद्रिकाषट्कधारणादेः कार्यकारणादिपदार्थपञ्चकज्ञानस्य च तत्तदुक्तनिःश्रेयससाधनस्य भिन्नतयान्योन्यव्याघातः स्फुट एव। तथा 'वेदाहमेतं पुरुषं' (पुरुषसू) 'तमेवं विद्वानमृत इह भवति' (पुरुषसू) 'ब्रह्मविदाप्नोति परं' (तै० २-१) 'तमेव विदित्वातिमृत्युमेति' (श्वे० ३-८) 'नान्यः पन्था अयनाय विद्यते' (पुरुषसू) 'भोक्ता भोग्यं प्रेरितारं च मत्वा' (श्वे० १-१२) 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे० १-१०) इत्यादिना वेदान्ते प्रकृतिपुरुषनारायणविज्ञानस्यैव मोक्षहेतुत्वप्रतिपादनेनान्यथा मोक्षहेतुत्वादेतद्विरोधः स्फुट एव। तथा 'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) 'ब्रह्म वा इदमेकमेवाग्र आसीत्' (बृ०१-४-११) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐत० १-१) इति सदादिसामान्यशब्दनिर्दिष्टस्य 'एको ह वै नारायण आसीत्' (महोप० १-१) इति / कारणवाक्यस्थभगवदसाधारणनारायणशब्दनिर्दिष्टदेवताविशेषपर्यवसानावश्यम्भावेन गतिसामान्यन्यायेन शम्भुशिवादिशब्दानामपि सदादिशब्दवत्तत्परत्वावश्यम्भावात् प्रतिज्ञादृष्टान्तानुपरोधादिभिः जगदुपादानतया नारायणस्यैव प्रतिपादनात् शास्त्रयोनित्वाधिकरणन्यायेन कारणवस्तुनो वेदान्तैकवेद्यत्वाच्च आनुमानिकपशुपतिनिमित्तमात्रवादे वेदविरोधो न्यायविरोधश्च दुर्वार इति पशुपतिमतमनुपादेयमेवेति पाशुपताधिकरणे स्थापितम्।

॥ इति पाशुपताधिकरणम् ॥

## (८) ॥ अथ पाञ्चरात्राधिकरणम् ॥

### सू० ॥ उत्पत्त्यसम्भवात् ॥ ३९ ॥

### सू० ॥ नच कर्तुः करणम् ॥ ४० ॥

### सू० ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४१ ॥

### सू० ॥ विप्रतिषेधाच्च ॥ ४२ ॥

पाशुपताद्यागमवत्पाञ्चरात्रागमस्याप्रामाण्यमाशङ्क्य तद्वैषम्यादप्रामाण्यं निराक्रियते। 'परमकारणात्परब्रह्मभूताद्वासुदेवात् सङ्कर्षणो नाम जीवो जायते सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते तस्मादनिरुद्धसंज्ञोऽहङ्कारो जायत' इति जीवोत्पत्तिः पाञ्चरात्रे क्वचित्प्रतीयते। तथा—

"अचेतना परार्था च नित्या सततविक्रिया।
त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते॥
व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च।
स ह्यनादिरनन्तश्च परमार्थेन निश्चितः॥" (परमसंहिता)

इति तत्रैव जीवोत्पत्तिर्निषिध्यत इत्यन्योन्यविरोधः। तथा 'न जायते म्रियते वा विपश्चित' ( कठ० २-१८) 'नित्यो नित्यनां' (कठ० ५-१३) इत्यादिजीवोत्पत्त्यादिनिषेधनित्यत्वप्रतिपादकश्रुतिविरोधश्च जीवोत्पत्तिप्रतिपादकपाञ्चरात्रवचनस्य दुर्वारः। तथा 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' ( मु० २-१-३) इति मनसः परमात्मसकाशादुत्पत्तिप्रतिपादकश्रुतिविरोधः। कर्तुर्जीवान्मनस उत्पत्तिप्रतिपादकपाञ्चरात्रवचनस्य दुष्परिहरपाशुपतागमवदन्योन्यविरोधात् वेदविरोधाच्च पाञ्चरात्रागमोऽपि न प्रमाणम्। तेन ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपषड्गुणपरिपूर्णो वासुदेवो ज्ञानबलोन्मेषेण सङ्कर्षणरूपः प्रादुर्भवति। तस्मादैश्वर्यवीर्योन्मेषेण प्रद्युम्नरूपः प्रादुरास्ते। ततश्च शक्तितेजस्समुन्मेषेणानिरुद्धरूपस्सन्नाविर्भवति। सङ्कर्षणादयश्च जीवमनोऽहङ्काराणामधिष्ठातारः। तदेवं चतुर्व्यूहं भवन्तं नारायणं अभिगमनोपादानेज्यास्वाध्याययोगात्मकपाञ्चकालिकवार्षशतिकव्रतेन समाराध्य पुरुषः पाशैर्मुच्यत इति पाञ्चरात्रिणां भागवतानां प्रक्रियाप्यनुपपन्नेत्याशङ्क्य—

पाञ्चरात्रे क्वचिदप्यन्योन्यविरोधः श्रुतिविरोधो वा नास्ति। तस्मादुदाहृतपाञ्चरात्रवचनस्य वासुदेवाख्यं परं ब्रह्म सङ्कर्षणादिरूपेणावतीर्य जीवमनोऽहङ्कारानधितिष्ठतीति जीवाद्यधिष्ठानार्थसङ्कर्षणादिरूपैच्छिकदिव्यमङ्गलविग्रहपरिग्रहरूपव्यूहावतारप्रतिपादकतया न जीवोत्पत्तिप्रतिपादकत्वम्। जीवादिशब्दसामानाधिकरण्यञ्च जीवादेः परमात्मानं प्रत्यपृथक्सिद्धप्रकारतया प्रकारवाचिशब्दानां प्रकारिपर्यन्ततया च युज्यते। पाञ्चरात्रगतजीवनित्यत्वादिप्रतिपादकवचनानुसारेणोक्तार्थ एवास्य वचनस्य तात्पर्यावश्यम्भावात्। **श्रुतप्रकाशिकायां** पाञ्चरात्रस्य पाशुपताद्यागमसाम्यं बहुधाक्षिप्य परिहृतम्। तत्रैवानुसन्धीयते। अतश्च पाञ्चरात्रस्य कृत्स्नस्य भगवद्वासुदेवप्रणीततया प्रामाण्यावश्यम्भावात् तत्प्रतिपादितपांचकालिकाभिगमनादि[व्रत]विशेषनिष्ठतया प्रपन्नानां भागवतानां बन्धमोचनपूर्वकभगवत्प्राप्तिरप्यव्याहतैवेति पाञ्चरात्राधिकरणे स्थापितम्॥

**इति श्रीमल्लक्ष्मणार्यकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**द्वितीयस्याध्यायस्य**
**द्वितीयः पादः**

**अधिकरणानि ८. सूत्राणि ४२.**

---

## ॥ तृतीयः पादः ॥

### (१) ॥ वियदुत्पत्त्यधिकरणम् ॥

सू०॥ न वियदश्रुतेः ॥ १ ॥

सू०॥ अस्ति तु ॥ २ ॥

सू०॥ गौण्यसम्भवाच्छब्दाच्च ॥ ३ ॥

सू०॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

सू०॥ प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥

सू०॥ शब्देभ्यः ॥ ६ ॥

सू०॥ यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

सू०॥ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

सू०॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

अतीतपादद्वयेन ब्रह्मैककारणत्वस्थेम्ने कारणविषयपरोद्भावितदोषनिरासः कारणविषयपरपक्षदोषप्रकटीकारश्च कृतः। इदानीं कार्यविषयपरोद्भावितश्रुतिविप्रतिषेधादिदोषनिरसनमुखेन वियदादेर्ब्रह्मकार्यताप्रकारः पादद्वयेन प्रतिपाद्यते। तत्र प्रथमं भोग्यभूतवियदाद्यचिदुत्पत्तिश्चिन्त्यते।

'न वियदश्रुतेः' इत्यत्र—वियन्नोत्पद्यते, तदुत्पत्तिप्रतिपादनक्षमाया श्रुतेरभावात्। न च 'आत्मन आकाशस्सम्भूतः' (तै० २-१) 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिः' (मु० २-१-३) इति तैत्तिरीयकाथर्वणश्रुतिर्वियदुत्पत्तिप्रतिपादनक्षमास्तीति वाच्यम्। निरवयवद्रव्यत्वेन सर्वगतत्वेन वा आत्मन इवाकाशस्याप्युत्पत्त्ययोग्यतया 'आदित्यो यूपः' इत्यादिवत् स्वार्थपरत्वासम्भवात्। न च श्रुत्या लिङ्गबाध एवोचित इति वाच्यम्। छान्दोग्यगततेजोजन्मप्राथम्याख्यतर्कानुगृहीततया 'आकाशं नित्यं निरवयवद्रव्यत्वात्' इत्यनुमानप्राबल्यस्यैव युक्ततया उत्पत्तिश्रुतेरेवान्यपरत्वौचित्यात्। तर्क-

विरुद्धश्रुतेरपि तर्कानुगृहीतलिङ्गस्याधिकबलत्वात्"। श्रुतानुषक्तयोरपि सम्भूतजायत्योर्मुख्यामुख्यार्थद्वयपरत्वस्य मुण्डकोपनिषद्गतब्रह्मशब्दवदुपपत्तेः। तत्र हि 'तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते' (मु० १-१-९) 'तपसा चीयते ब्रह्म' (मु० १-१-८) इत्यत्र ब्रह्मशब्देन प्रधानाभिधानम्। क्वचित्क्वचिच्च परमात्माभिधानञ्च स्वीक्रियते। वियदुत्पत्तिवादिमतेऽपि 'आकाशवत्सर्वगतश्च नित्यः' इत्यत्र नित्यसर्वगतशब्दयोर्दृष्टान्तदार्ष्टान्तिकविषयभेदेन मुख्यामुख्यार्थपरत्वं संमतम्। दृष्टान्ते आकाशे नित्यत्वं चिरकालस्थायित्वं सर्वगतत्वं स्वरूपेण। दार्ष्टान्तिके आत्मनि नित्यत्वं कालत्रयवर्तित्वं सर्वगतत्वं धर्मभूतज्ञानद्वारेति किलोच्यते। तस्माद्वियन्नोत्पद्यत इति प्राप्ते—

अस्त्याकाशस्याप्युत्पत्तिः। 'आत्मन आकाशस्सम्भूतः' (तै० २-१) इत्यादिश्रुतेः। न चेयं यूपादित्यादिवदयोग्येति शङ्क्यम्। प्रमाणान्तरागोचरायोग्यताया अप्राप्तार्थकश्रुतेरनुकूलत्वात्। धर्मिणि प्रमाणान्तरगोचरत्वरूपायोग्यतायाः क्रियात्मकयागादिसाधारण्येन यागादिविधेरप्ययोग्यतापत्तेः। व्युत्पत्तिसिद्धप्रकृतवाक्यप्रतिपाद्यान्वयविरोधिधर्मवत्ताप्रतीतिगोचरत्वरूपायोग्यतायाश्च आकाशेऽपि स्वोत्पत्तिविरोधिधर्मवत्ताप्रतीत्यगोचरत्वेनाभावादेव यूपादित्यादिश्रुतितौल्याभावात्।

न च अनुमानतस्तथाविधनित्यत्वादिप्रतीतिराकाशेऽस्तीति वाच्यम्। सिद्धान्ते सावयवत्वपरिच्छिन्नत्वयोराकाशेऽभ्युपेतत्वेन निरवयवद्रव्यत्वहेतोर्विशेषणासिद्ध्या सर्वगतत्वहेतोस्सिद्ध्या चानुमानासिद्धेः, महदादेर्निरवयवस्यानित्यतया हेतोर्निरवयवद्रव्यत्वस्य व्यभिचरितत्वाच्च निरवयवद्रव्यत्वस्य नित्यत्वं प्रत्यप्रयोजकत्वाच्च। कर्तृत्वेनात्मनः कृतहानादिदोषापत्त्यानुत्पन्नत्वावश्यम्भावेन तत एव तस्य नित्यत्वसिद्धेः। तथा च श्रुत्या वियत उत्पत्तिसिद्धिः।

न च छान्दोग्ये तेजोजन्मप्राथम्यावगमेनाकाशस्यानुत्पत्त्यवगतेरुत्पत्तिश्रुतिर्गौणीति वाच्यम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानेन 'आकाशस्सम्भूतः' 'एतस्माज्जायते' (मु० २-१-३) इति प्रत्यक्षश्रुत्या च वियदुत्पत्त्यवगत्या छान्दोग्यगतवियत्सृष्ट्यवचनोपोद्बलिततेजस्सृष्टिवचनावगततदुत्पत्ति(साधनं यस्य) [प्राथम्यस्य]पदार्थगुणभूतस्यैव बाध्यत्वात् प्रत्यक्षश्रुतिसिद्धोत्पत्तिमद्वायुसहपाठेन वियदमृतत्वश्रुतेरेव स्थायित्वपरत्वौचित्याच्च। अन्यथा एकविज्ञानेन सर्वविज्ञान-

प्रतिज्ञादेर्निरवकाशत्वापातात् । श्रुतानुषक्तसम्भूतशब्दस्यार्थैकरूप्यसम्भवे गौण-मुख्यार्थद्वयकल्पनमयुक्तम् । मुण्डकवाक्यगतब्रह्मशब्दस्यागत्या तदाश्रयणं न दोषः । सिद्धान्ते 'आकाशवत्सर्वगतश्च नित्यः' इत्यस्य सर्वगतो नित्यः आकाश-वच्च तद्वत्सूक्ष्मश्चेत्यर्थाश्रयणान्नोक्तदोषः । तस्माद्वियदुत्पद्यत इति सिद्धम् ।

एतेन वियदुत्पत्तिस्थापकन्यायेन मातरिश्वनो वायोरप्युत्पत्तिस्सिद्धा भवति । 'एतेन मातरिश्वा व्याख्यातः' (ब्र० सू० २-३-८) इति पृथग्योग-करणं 'तेजोऽतस्तथा ह्याह' (ब्र० सू० २-३-१०) इत्यत्रोत्तरसूत्रे मातरिश्वनो-ऽतश्शब्देन परामर्शार्थम्, न त्वधिकाशङ्कासमाधानपरातिदेशार्थम् । तदसम्भ-वात् । 'असम्भवस्तु सतोऽनुपपत्तेः' (ब्र० सू० २-३-९) इति वियदधिक-रणगुणसूत्रमध्यस्थतया अधिकरणान्तरत्वासम्भवाच्च । भिन्नाधिकरणत्वसाधका-शङ्काद्यसम्भवेनान्तरागर्भिणीन्यायानवतारात् । तस्मात् 'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) इत्युक्तसच्छब्दवाच्यस्य परस्यैव ब्रह्मणोऽनुत्पत्तिरितरस्य सर्वस्य महदादेः पृथिवीपर्यन्तस्य ब्रह्मकार्यत्वमिति वियदधिकरणे निर्णीतम् ।

॥ इति वियदधिकरणम् ॥

---

## (२) ॥ अथ तेजोऽधिकरणम् ॥

**सू०॥ तेजोऽतस्तथा ह्याह ॥ १० ॥**

**सू०॥ आपः ॥ ११ ॥**

**सू०॥ पृथिवी ॥ १२ ॥**

**सू०॥ अधिकाररूपशब्दान्तरेभ्यः १३ ॥**

**सू०॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १४ ॥**

**सू०॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १५ ॥**

**सू०॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १६ ॥**

## सू०॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १७ ॥

तदभिध्यानाधिकरणे—ब्रह्मव्यतिरिक्तं महदादिपृथिव्यन्ततत्त्वजातं उत्तरोत्तरं पूर्वपूर्वतत्त्वादेव जातं न तु पूर्वपूर्वतत्त्वशरीरकात्परमात्मनः । 'आकाशाद्वायुः वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' (तै० २-१) इत्यादिश्रुतेः केवल-तत्त्वादेवोत्पत्तिप्रतीतेः । न चाकाशादिशब्दस्तत्तच्छरीरकपरमात्मपरः लक्षणा-प्रसङ्गात्प्रसिद्धिप्राचुर्यभङ्गापाताच्च । चेतनैकान्तेक्षणलिङ्गस्यैवाकाशादिश्रुत्या गौणत्वस्य न्याय्यत्वात् । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मु० २-१-३) इत्यस्याश्च परम्परया परमात्मजन्यत्वेनाप्युपपत्तेरिति प्राप्ते—

पूर्वपूर्वतत्त्वशरीरकात्परमात्मन एवोत्तरोत्तरतत्त्वमुत्पद्यते । 'तत्तेज ऐक्षत' (छा० ६-२-३) 'ता आप ऐक्षन्त' (छा० ६-२-४) इतीक्षणशब्दोक्त-सङ्कल्पाख्याभिध्योपदेशात् परमात्मलिङ्गात् । न च तेजःप्रभृतिशब्देषु लक्षणा दोषः । शरीरवाचिशब्दानां शरीरिपर्यन्तत्वव्युत्पत्त्या कृत्स्नस्य वस्तुनः परमात्म-शरीरत्वेन कृत्स्नशब्दस्यापि परमात्मनि मुख्यत्वात् । चेतनैकान्तेक्षणलिङ्गानुरो-धेन प्रसिद्धिप्राचुर्यहानेरदोषत्वात् । 'एतस्माज्जायते' (मु० २-१-३) इत्यौत्सर्गिकसाक्षाज्जन्यत्वप्रतीतित्यागे कारणाभावाच्च । न च खादीनां क्रमाम्नान-लिङ्गात् अयं मन्त्रः प्राणस्य भूतानाञ्च मध्ये चक्षुरादीन्द्रियाणि मनश्च जायत इति इन्द्रियोत्पत्तिक्रमपरो नोत्पत्तिपर इति वाच्यम् । 'पृथिव्यप्सु प्रलीयते' (सु० २ खण्ड) इत्यादिसुबालोपनिषदवगतक्रमविरोधेनास्य क्रमपरत्वा-सम्भवात् । 'एतस्माज्जायते प्राणः' (मु० २-१-३) इत्यत्रैव 'मनस्सर्वे-न्द्रियाणि च' (मु० २-१-३) इत्यादावप्यविशेषेणोत्पत्तिपरत्वस्यैव ग्राह्यत्वात् । अन्यथा वैरूप्यापातात् । खादिषु श्रुत्यन्तरसिद्धक्रमानुवादेऽपि तत्परत्वासिद्ध्या तत्साहचर्येण 'मनस्सर्वेन्द्रियाणि च' (मु० २-१-३) इत्यत्र क्रमपरत्वकल्पनानु-पपत्तेश्च । तस्मादभिध्यानलिङ्गानुरोधेन पूर्वपूर्वतत्त्वशरीरकपरमात्मसकाशादेवोत्तरो-त्तरतत्त्वोत्पत्तिरिति निर्धारितम् ।

॥ इति तेजोऽधिकरणम् ॥

---

## (३) ॥ अथ आत्माधिकरणम् ॥

## सू०॥ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

'नात्मा श्रुतेः' इत्यधिकरणे—'यतो वा इमानि भूतानि जायन्ते' (तै० ३-१) 'प्रजापतिः प्रजा असृजत' (अष्ट० २) 'तोयेन जीवान्विससर्ज भूम्यां' (तै० ना० १-१) इत्यदिश्रुतेरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् प्राक्सृष्टेरेकत्वावधारणाच्च वियदादिवज्जीवोऽप्युत्पद्यत एव। न च 'तत्त्वमसि' (छा० ६-८-७) इति ब्रह्माभेदात् जीवस्यानुत्पत्तिश्शङ्क्या। 'सर्वं खल्विदं ब्रह्म' (छा० ३-१४-१) इत्यनेन ब्रह्माभेदावगमाद्वियदादेरप्यनुत्पत्तिप्रसङ्गात्। शरीरात्मभावेन सामानाधिकरण्याभ्युपगमस्योभयत्र तुल्यत्वात्। 'न जायते म्रियते' (कठ० २-१८) इत्यादिवचनस्य वाय्वन्तरिक्षामृतत्ववचनान्यथानयनवत् देहोत्पत्तिविनाशानुबन्ध्युत्पत्तिविनाशनिषेधपरतया नेयत्वात्। 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' (छा० ६-११-३) इति श्रुत्यन्तरानुरोधेन तथैवावश्यवर्णनीयत्वात्। न च कृतहानादिदोषप्रसङ्गः। सर्वं द्रव्यं नित्यं, तस्य पूर्वावस्थाप्रहाणं नाशः, अवस्थान्तरप्राप्तिरुत्पत्तिरिति परिणामवादिमते द्रव्यात्मना नित्ये आत्मनि तदप्रसङ्गात्। अतो वियदादिवज्जीवोऽप्युत्पद्यत इति प्राप्तय्य—

'न जायते म्रियते वा विपश्चित्' (कठ० २-१८) 'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे० १-९) इत्यादिश्रुतेः, 'नित्यो नित्यानां' (श्वे० ६-१३) 'अजो नित्यश्शाश्वतोऽयं पुराणः' (कठ० २-१८) इत्यादिश्रुतिभ्यो नित्यत्वाच्च नायमात्मा वियदादिवदुत्पद्यते। न हि वियदादावुत्पत्तिनिषेधिका श्रुतिरस्ति, येन तत्तुल्यता स्यात्। 'न हन्यते हन्यमाने शरीरे' (कठ० २-१८) इति पूर्ववाक्यादेव देहनाशाद्यनुबन्धिनाशाद्यभावसिद्ध्या 'न जायते म्रियते' (कठ० २-१८) इत्यत्र साक्षादुत्पत्त्यादेरेव निषेद्धव्यत्वात्। 'वायुश्चान्तरिक्षञ्च' (बृ० २-३-३) इत्यमृतत्ववचनन्तु 'आत्मन आकाशस्सम्भूतः' (तै० २-१) 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिः' (मु० २-१-३) इत्याद्युत्पत्तिश्रुतिबाहुल्येन चिरकालस्थायित्वाभिप्रायं वर्णनीयम्। जीवोत्पत्तिश्रुतिश्च धर्मभूतज्ञानस्य सङ्कोचविकासात्मकविकाराङ्गीकारेण स्वभावविकाररूपोत्पत्तिपरा शरीरसम्बन्धरूपोत्पत्तिपरा वा। चेतनस्याचेतनप्रधानोपादेयत्वे

तस्याचेतनत्वापत्तेश्चेतनस्योपादानस्य कस्यचिदभावाच्च तदुत्पत्तिश्रुतेरुक्तार्थपरत्वावश्यम्भावात् । वियदादेस्त्वेवंविधानुपपत्त्यभावेन वाय्वादिसहपाठेन विशिष्य लयश्रवणेन जीवात्मवैषम्यस्य स्फुटत्वात् । प्राक्सृष्टेरेकत्वावधारणस्य सृष्टिकालीनविषमविकाररा हित्येन सूक्ष्मरूपसमविकारपरत्वेन सूक्ष्मचेतनस्वरूपावस्थानाविरोधित्वात् ।

किञ्च जीवात्मनो वियदादिवदुत्पत्तौ कृतहानादिदोषो दुर्वारः । न हि द्रव्यात्मना नित्यत्वादात्मनो न तद्दोष इति वाच्यम् । प्रागवियतोऽपि वियद्भाववत् प्रागजीवस्य जीवभावाङ्गीकारे जीवभावेन द्रव्यकृतपुण्यपापयोर्जीवाश्रितयोर्जीवनाशनाश्यतया कृतहानादिदोषतादवस्थ्यात् । नित्यस्य प्रत्यगात्मनः प्रधानेश्वरादिव्यावृत्तेर्जीवभावेनैव वक्तव्यतया यावदाश्रयभाविधर्मस्यैव व्यावर्तकत्वस्वाभाव्यात् स्वरूपनिरूपकस्य जीवभावस्य स्वरूपानुबन्धित्वमवर्जनीयमिति वियद्भाववज्जीवभावस्य कादाचित्कत्वायोगाच्च । तस्माज्जीवात्मा वियदादिवन्न स्वरूपेणोत्पद्यत इति सिद्धान्तितम् ।

॥ इत्यात्माधिकरणम् ॥

---

## (४) ॥ अथ ज्ञाधिकरणम् ॥

सू०॥ ज्ञोऽत एव ॥ १९ ॥

सू०॥ उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥

सू०॥ स्वात्मना चोत्तरयोः ॥ २१ ॥

सू०॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २२ ॥

सू०॥ स्वशब्दोन्मानाभ्याञ्च ॥ २३ ॥

सू०॥ अविरोधश्चन्दनवत् ॥ २४ ॥

सू०॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥

सू०॥ गुणाद्वालोकवत् ॥ २६ ॥

सू०॥ व्यतिरेको गन्धवत्तथा च दर्शयति ॥ २७ ॥

सू०॥ पृथगुपदेशात् ॥ २८ ॥

सू०॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

सू०॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

सू०॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

सू०॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गो-
ऽन्यतरनियमो वान्यथा ॥ ३२ ॥

'ज्ञोऽत एव' इत्यत्र—'विज्ञानं यज्ञं तनुते' (तै० २-५) 'यो विज्ञाने तिष्ठन्' (बृ० ३-७-२२) 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः' (वि० पु० १-२-६) इत्यादिश्रुतिस्मृतिषु विज्ञानस्वरूपत्वोपदेशात् जीवात्मा ज्ञानस्वरूप एव । तत एवाखिलव्यवहारोपपत्तौ धर्मभूतज्ञानस्याप्यङ्गीकारे प्रमाणाभावात् । 'जानात्येवायं पुरुषः' (बृ० ४-३-३०) इत्यादिनिर्देशश्चा-भेदेनाश्रयतामादायेति प्रथमपक्षः ।

जीवात्मनस्सर्वगतस्य ज्ञानस्वरूपत्वे नित्यज्ञानाश्रयतया ज्ञातृत्वे चाभ्युप-गम्यमाने सर्वदा सर्वविषयोपलब्धिप्रसङ्गात् चक्षुरादिपरिकरणवैयर्थ्यप्रसङ्गात् ज्ञानाभावात्मकसुषुप्तिमूर्छाद्यभावप्रसङ्गाच्च न ज्ञानस्वरूपत्वं नित्यज्ञानाश्रयतया ज्ञातृत्वञ्चोपपद्यते । किन्तु नैयायिकोक्तरीत्या जडस्वरूपस्सन् आगन्तुकचैतन्या-श्रयो जीवात्मा । 'विज्ञानं यज्ञं तनुते' (तै० २-५) इत्यादिनिर्देशश्च नीलो घट इत्यादौ नीलादिपदवदाश्रयलाक्षणिक इति द्वितीयपक्ष इति प्राप्य—

'अत्रायं पुरुषः स्वयंज्योतिः' 'विज्ञानघन एव' (बृ० २-४-१२) 'प्रज्ञानघनः' (बृ०४-५-१३) 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः' (कौषी० ३-९) 'विज्ञानं यज्ञं तनुते' (तै० २-५) 'यो विज्ञाने तिष्ठन्' (बृ० ३-७-२२) 'जानात्येवायं पुरुषः' (बृ० ४-३-३०) 'अथ योऽयं जिघ्राणीति स आत्मा' (छा० ८-१२-४) 'न पश्यो मृत्युं पश्यति'

(छा० ७-२६-२) 'एष हि द्रष्टा श्रोता घ्राता' (प्रश्न० ४-९) 'न विज्ञातुर्विज्ञातेर्विपरिलोपो वर्तते' (बृ० ४-३-३०) इत्यादिश्रुतिभिः ज्ञानस्वरूपत्वज्ञानाश्रयत्वधर्मभूतज्ञाननित्यत्वाभिधानात ज्ञानस्वरूपो ज्ञाता च जीवात्मा तारतम्येन वर्तत इत्यादिप्रमाणानुसारेण दीपादिप्रभावद्धर्मभूत-ज्ञानस्य कर्मणा सङ्कोचविकासाभ्युपगमात् ज्ञानसङ्कोचादिकमादाय सुषुप्त्याद्युप-पत्तिः। विषयसम्बन्धरूपज्ञानविकासस्य हृदयस्थात्मधर्मस्य ज्ञानस्य चक्षुरादी-न्द्रियद्वारा बहिर्निर्गमनसापेक्षतया करणसाफल्यं चाक्षुषादिविभागो ज्ञानो-त्पत्तिविनाशप्रत्ययश्चोपपद्यते। न च सर्वदा सर्वोपलब्धिप्रसङ्गः। धर्मभूत-ज्ञानस्य चक्षुरादिप्रणाड्या विषयोपरागदशायामेव विषयावभासस्वीकारात्। सप्तधातुमयशरीरे सर्वदा विद्यमानस्यापि पुंस्त्वाख्यधातुविशेषस्य बाल्यावस्थाया-मनभिव्यक्तस्य, यौवनेऽभिव्यक्तिवत् सुषुप्त्यादौ विद्यमानस्यापि धर्मभूतज्ञानस्य विषयानुपरागदशायामनभिव्यक्तस्य तदुपरागदशायामभिव्यक्तिसम्भवात्। विषयो-परागदशायां सजातीयानपेक्षप्रकाशार्हत्वस्यैव स्वप्रकाशपदार्थतया सुषुप्त्यादाव-नभिव्यक्तावपि तदविरोधात्। 'तेन प्रद्योतेनैष आत्मा निष्क्रामति' (बृ० ४-४-२) 'तमुत्क्रामन्तं प्राणः' (बृ० ४-४-२) 'ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौषी० १-२) 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' (बृ० ४-४-६) 'एषोऽणुरात्मा चेतसा वेदितव्यः' (मु० ३-१-९) 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे० ५-८) इत्याद्युत्क्रान्तिगत्यागत्यणुत्वश्रुत्या जीवात्मनां विभुत्वायोगेन ज्ञानस्वरूपत्वेऽपि न सर्वोपलब्धिः प्रसज्यते।

न चैवं देहव्यापिसुखाद्युपलम्भानुपपत्तिः। मण्यादीनामालोकेनानेकदेश-व्याप्तिवत् धर्मज्ञानव्याप्त्या तथोपलम्भसम्भवात्। जीवात्मनां स्वप्रकाशज्ञानस्व-रूपत्वात् ज्ञानगुणसारत्वाच्च विज्ञानमित्यादिव्यपदेशश्च मुख्य एवेति जीवात्मा ज्ञानस्वरूपो ज्ञाताऽणुश्चेति सिद्धान्तितम्॥

॥ इति ज्ञाधिकरणम् ॥

---

## (५) ॥ अथ कर्त्रधिकरणम् ॥

**सू०॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

**सू०॥ उपादानाद्विहारोपदेशाच्च ॥ ३४ ॥**

**सू०॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥**

**सू०॥ उपलब्धिवदनियमः ॥ ३६ ॥**

**सू०॥ शक्तिविपर्ययात् ॥ ३७ ॥**

**सू०॥ समाध्यभावाच्च ॥ ३८ ॥**

**सू०॥ यथा च तक्षोभयथा ॥ ३९ ॥**

'कर्ता शास्त्रार्थवत्त्वात्' इत्यत्र—

'हन्ता चेन्मन्यते हन्तुं[1] हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥' (कठ० २-१९)[इति]

'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥' (गीता० २-१९)

इति [च] (कठवल्लीगतयो)हननकर्तृत्वनिषेधस्य कर्तृत्वमात्रनिषेधोपलक्षकतया जीवानां कर्तृत्वाभावावगमात्;

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ (गीता० ३-२७)
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥' (गीता० १३-२०)

इत्यादिगीतावचनपर्यालोचनायां प्रकृतिधर्मस्य कर्तृत्वस्य जीवेष्वध्यस्तत्वावगमाच्च जीवो न कर्ता किन्तु प्रकृतिरेव । 'यजेत स्वर्गकामः' इत्यादिवाक्यञ्च अध्यस्तकर्तृभावाभिप्रायमिति प्राप्ते—

---

१. जन्तुमित्यादाविव हन्तुमित्यनेन औणादिकतुन्प्रत्ययान्तेन हन्तारमित्यर्थो बोध्यते ।

प्रकृतेः कर्तृत्वे 'यजेत स्वर्गकामः' 'मुमुक्षुर्ब्रह्मोपासीत' इत्यादि-शास्त्रेण कर्तृगामिक्रियाफलवाचिना आत्मनेपदेन स्वर्गादिफलभोक्तुर्जीवस्यैव कर्तृत्वावगत्या तद्विरोधप्रसङ्गात्, सर्वस्यापि शास्त्रस्य त्याज्योपादेयगोचरबुद्ध्युत्पादनद्वारेणैव प्रवर्तकत्वाद्यवश्यम्भावेन अचेतनायां प्रकृतौ बुद्ध्युत्पादायोगेन अकर्तरि चात्मनि प्रवृत्त्युत्पादासम्भवेन च शास्त्रस्य वैयर्थ्यापाताच्च, ज्ञानकृत्योरैकाधिकरण्यनियमादिति ज्ञाता भोक्ता कर्ता च जीव एव। न प्रकृतेः कर्तृता। न हि शास्त्रमारोपितकर्तृभावम्पुरुषमधिकरोति। तस्य भोक्तृत्वायोगात्। अन्यथा स्वस्मिन्नन्यदीययागपाकादिकर्तृत्वारोपे सति तदनुष्ठानतत्फलयोरापातात्। तस्मात् ज्ञाता आत्मैव कर्तेति सिद्धान्तितम्॥

॥ इति कर्त्रधिकरणम् ॥

---

## (६) ॥ अथ परायत्ताधिकरणम् ॥

### सू०। परात्तु तच्छ्रुतेः ॥ ४० ॥

### सू०॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥

'परात्तु तच्छ्रुतेः' इत्यत्र—जीवानां तत्कर्तृत्वं स्वायत्तं परमात्मायत्तं वेति संशय्य 'स्वतन्त्रः कर्ता' (पाणिनि सू० १-४-५४)) इति व्याकरणस्मृत्या कर्तृत्वस्य स्वातन्त्र्यात्मकत्वावगमात्, परमात्मायत्तप्रवृत्त्यादिमत्त्वे जीवात्मनामभ्युपगम्यमाने राजप्रेरितभृत्यादिकृतपरसेवापरहिंसादिक्रियाफलस्य भृत्यादिगामित्वाभाववत् जीवात्मनामपि स्वानुष्ठितविहितनिषिद्धक्रियाफलयोः स्वर्गनरकयोः प्राप्त्यसम्भवात् परमात्मनः कर्मातीतत्वेन कर्मफलभोगायोगाच्चाधिकारिविरहेण शास्त्रवैयर्थ्यापाताच्च कर्तृत्वं स्वायत्तमेव। न हि परमदयालुः परमात्मा निषिद्धेषु कर्मसु स्वाधीनान् जीवान् प्रवर्तयित्वा स्वयं निगृह्णातीति युक्तमाश्रयितुम्। उन्मत्तत्वप्रसङ्गात्। 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' (तै० आरण्य० ३-११-१०) 'य आत्मानमन्तरो यमयति' (बृ० ३-७-२२) 'साधु कर्म कारयति तं' (कौषी० ३-९) इत्यादिशास्त्रं विहितनिषिद्धकर्मानुष्ठानप्रवृत्तचेतनानिवर्तकत्वेनौपचारिकमिति जीवात्मनां कर्तृत्वं न परायत्तमिति प्राप्ते—

विधिनिषेधशास्त्राणां परायत्तत्वबोधकशास्त्राणाञ्चोभयेषामपि मुख्यार्थत्वे सम्भवति अन्यतरामुख्यत्वकल्पनस्यान्याय्यत्वाद्विधिनिषेधशास्त्रबलाज्जीवानां स्वतन्त्रकर्तृत्वं, अन्तर्यामित्वशास्त्रबलात्परमात्मायत्तञ्च तत्कर्तृत्वमित्यभ्युपगन्तव्यम् ।

न च परमात्मायत्तकर्तृत्वे विधिनिषेधशास्त्रवैयर्थ्यम् ; जीवानां स्वातन्त्र्ये परमात्मनः प्रयोजयितृत्वभङ्गप्रसङ्ग इति वाच्यम् । राजाधीनस्वभावानामप्यमात्यादीनां स्वकीयेषु राज्याङ्गशिक्षारक्षणादिकर्मसु स्वातन्त्र्यवत् जीवानां परमात्माधीनानामपि स्वातन्त्र्याविरोधात् ।

ननु पारतन्त्र्यापरपर्यायपरायत्तत्वं तत्प्रतिकोटिस्वातन्त्र्यञ्च विरुद्धं कथमेकत्र सम्भवतीति चेत् ; प्राथमिकप्रवृत्तौ स्वातन्त्र्यं द्वितीयादिप्रवृत्तौ पारतन्त्र्यमित्थंभेदेनाविरोधात् ।

न चैवं प्रथमप्रवृत्तेरीश्वरजन्यत्वाभावेन तस्य सर्वकारणत्वभङ्ग इति वाच्यम् । परमात्मनस्सर्वस्मिन्कार्ये तत्तत्कारणभूतवस्तुसन्निधापनमुखेनैव जनकतया प्रथमप्रवृत्तावपि तथाविधजनकत्वानपायात् । तथा हि जीवात्मनामनादितस्सामान्येन चिच्छक्तिविशेष-प्रवृत्तिशक्तिविशेष-करणकलेबरविशेषसर्गादिरूपं वस्तु स्वभावतः प्रवृत्तिसाधारणकारणम्, गुणत्रयतारतम्यवासनाविशेषात बोधविषयविशेषसन्निधानरूपं वस्तु स्वभावतः प्रवृत्त्यसाधारणकारणं च प्राचीनकर्मफलाभिसन्धिविशेषेण स्वयमीश्वरः पश्यन्नास्ते । जीवास्तूक्तरीत्या परमात्मदत्तसाधनसहकारेण प्रथमं स्वेच्छया प्रयत्नं कुर्वन्तीति प्रथमप्रवृत्तेः परमात्मदत्तसाधनजन्यता, नान्तरीयकसूरणपाकवत् तत एव तत्कर्तृत्वं परमात्माधीनमपि, तत्र जीवानां स्वातन्त्र्यं च । इच्छाशक्तिमत्त्वे सत्यनिवार्यत्वं हि तत् । तत्र जीवानां तस्य सत्वात् । प्रथमप्रवृत्तौ परमात्मा न निवर्तको नापि प्रवर्तकः किन्तूदासीनोऽध्यक्ष इति यावत् , प्रथमप्रवृत्तगामि च क्रियाफलमिति विधिनिषेधशास्त्रं तद्विषयमिति न तद्वैयर्थ्यम् । प्रयोजयितृत्वञ्च परमात्मनो द्वितीयादिप्रवृत्तौ । प्रयोजयितृत्वं प्रेरकत्वम् । तच्च द्विविधं प्रवृत्तप्रवर्तनरूपमनुमन्तृत्वम्, अप्रवृत्तप्रवर्तनरूपं कारयितृत्वञ्च । जीवानां द्वितीयादिप्रवृत्तिः परमात्मानुमतिं विना न सिध्यतीति शास्त्रबलादवसीयते । साधारणद्रव्येऽन्यतरानुमतिं विना स्वत्वानुत्पत्तिर्यथा शास्त्रेणावसीयते तद्वत्कारयितृत्वञ्च परमात्मनस्तावत् 'एष एव साधु

कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति ' (कौषी० ३-९) इति शास्त्रादत्यन्तानुकूल्यप्रातिकूल्यव्यवसितविषय इति (शास्त्रात्) अवसीयते। तत्र यमिति बुद्धिस्थविषयेण तथाविधचेतनावगमात्। न च तत्र क्रियाफलं प्रयोजकगामि स्यादिति शङ्क्यम्। औषधपानकारयितृपित्रादिस्थले औषधपानफलस्य व्याधिनिवृत्तेः प्रयोज्यपुत्रगामित्ववत् 'यमुन्निनीषति तं साधु कर्म कारयति' (कौषी० ३-९) इति श्रुत्या साधुकर्मफलस्य ऊर्ध्वगतेः प्रयोज्यचेतनगामित्वावगमात् विधिनिषेधशास्त्रावैयर्थ्याय प्रथमप्रवृत्तौ स्वातन्त्र्यं, स्वतन्त्रकर्तृगामि च क्रियाफलमित्यवसीयते। कारयितृत्वश्रुत्यसङ्कोचाय द्वितीयादिप्रवृत्तौ प्रवृत्तप्रवर्तकत्वरूपप्रयोजयितृत्वमनुमन्तृत्वपर्यवसन्नम्। तत्राप्रवृत्तप्रवर्तकत्वरूपप्रयोजयितृत्वासम्भवात्। एष एव कारयति न तु स्वयं करोतीति अप्रवृत्तप्रवर्तकत्वरूपं प्रयोजयितृत्वं चेतनविशेष इति न्यायतश्शास्त्रार्थः पर्यवस्यति। तथोपबृंह्यते—

'अध्यक्षश्चानुमन्ता च कर्ता कारयिता च सः।'

इत्यादिना। तत्राध्यक्षत्वमुदासीनत्वं प्रथमप्रवृत्तौ, अनुमन्तृत्वं प्रवृत्तप्रवर्तकत्वं द्वितीयादिप्रवृत्तौ, कारयितृत्वमप्रवृत्तप्रवर्तकत्वमत्यन्तानुकूल्यव्यवसित(चेतना)-चेतनविषय इति विषयविभागः।

न च प्रथमप्रवृत्तावकारयितृत्वे कारयितृत्वश्रुतिसङ्कोचदोषः। विशेषशास्त्रकारितसामान्यशास्त्रसङ्कोचवत् विधिनिषेधशास्त्रकारितकारयितृत्वश्रुतिसङ्कोचस्यानिष्टत्वाभावात्। तस्माज्जीवात्मनां कर्तृत्वं परमात्मायत्तम्॥

अत्रायं सङ्ग्रहः **श्रुतप्रकाशिकायाम्**—

"वैयर्थ्यं यावता न स्याद्विधानप्रतिषेधयोः।
नियन्तृत्वश्रुतेस्तावान् सङ्कोचो न त्वतः परम्॥

बाह्यान्तःकरणव्यापितच्छक्त्याधानधारणैः।
साधारणोपकारैः स्यादिच्छदेः कारणं परः॥

भोगादृष्टोपनीतार्थस्वभावाद्वासनान्वितात्।
इच्छादेर्मनसोत्पत्तौ युक्तोदासीनता विभोः॥

अभिसन्ध्यन्तरप्राप्ते वस्तुन्यन्यत्र केनचित् ।
उपयुक्तेऽप्युदास्ते हि तस्य प्रापयिता पुमान् ॥

सामर्थ्ये सत्यवार्यत्वात्स्वतन्त्रो जीव उच्यते ।
स ह्योदने विषज्ञानात्स्वेच्छामपि नियच्छति ॥

सन्निधापकवैधुर्येऽप्यर्थं बुद्धिस्थतां नयन् ।
प्रयोजकोऽनुमन्ता च भवतीशस्तदा तदा ॥

पूर्वप्रवृत्तेश्च फलमनुमत्यादिकं भवेत् ।
दयादीनां गुणानाञ्च सुलभं विषयान्तरम् ॥

अमात्यस्य स्वतन्त्रत्वे राज्ञस्तन्नावहीयते ।
एवमेव परस्यापि जीवस्वातन्त्र्यदायिनः ॥

न स्वातन्त्र्यं पराधीनस्वरूपात्प्रच्युतं भवेत् ।
स्वातन्त्र्यदायिना पुंसा तत्प्रवृत्त्यनिवारणात् ॥" इति

अतो जीवानां स्वातन्त्र्यं विधिनिषेधशास्त्रसाफल्यं परमात्मनस्सर्वकारणत्वं निरङ्कुशस्वातन्त्र्यवत्त्वं सर्वमुपपन्नमिति स्थापितम् ।

॥ **इति परायत्ताधिकरणम्** ॥

---

## (७) ॥ अथ अंशाधिकरणम् ॥

**सू०॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥**

**सू०॥ मन्त्रवर्णात् ॥ ४३ ॥**

**सू०॥ अपि स्मर्यते ॥ ४४ ॥**

**सू०॥ प्रकाशादिवत्तु नैवं परः ॥ ४५ ॥**

**सू०॥ स्मरन्ति च ॥ ४६ ॥**

सू०॥ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४७ ॥

सू०॥ असन्ततेश्चाव्यतिकरः ॥ ४८ ॥

सू०॥ आभास एव च ॥ ४९ ॥

सू०॥ अदृष्टानियमात् ॥ ५० ॥

सू०॥ अभिसन्ध्यादिष्वपि चैवम् ॥ ५१ ॥

सू०॥ प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ ५२ ॥

अंशोनानाधिकरणे—'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे० १-९) 'पृथगात्मानं प्रेरितारञ्च मत्वा' (श्वे० १-६) 'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः' (तै० २-५) इत्यादिभेदव्यपदेशात्, 'तत्त्वमसि' (छा० ६-१०-३) इत्याद्यभेदव्यपदेशस्यानन्यथासिद्धभेदश्रुतिबाधिततया 'वह्निना सिञ्चति' इतिवत् अयोग्यत्वेन 'सैवेयं दीपकलिका' इतिवच्चेतनत्वजात्यवच्छिन्नभेदाभावावलम्बनत्वेन वा नेतुं शक्यत्वात् जीवः स्वरूपतो ब्रह्मभिन्न एव ।

यद्वा सामानाधिकरण्यस्य पदद्वयप्रतिपाद्यधर्मद्वयोपलक्षितधर्मिस्वरूपैक्य एव व्युत्पन्नतया तत्त्वमसीति सामानाधिकरण्येन तत्त्वंपदप्रतिपाद्यब्रह्मत्वजीवत्वोपलक्षितधर्मिस्वरूपैक्यावगतेः कल्पिताविद्योपहितं वा सत्योपाध्यवच्छिन्नं वा ब्रह्मैव जीवः । न ब्रह्मस्वरूपतो भिन्नः । 'ज्ञाज्ञौ द्वौ' (श्वे० १-९) इत्यादिभेदव्यपदेशस्तु काल्पनिकप्रत्यक्षादिप्रमाणसिद्धभेदपरः ।

न च जीवो ब्रह्मांश इति भेदाभेदव्यपदेशोपपत्तिः । तन्त्वादेः पटाद्यवयवत्वरूपतदंशत्ववत् ब्रह्मणो निरवयवतया ब्रह्मावयवत्वरूपब्रह्मांशत्वस्य जीवेऽनुपपन्नत्वात् । टङ्कच्छिन्नशकलादेः पाषाणांशत्ववज्जीवात्मन्यच्छेद्यब्रह्मसम्बन्धिच्छिन्नशकलत्वरूपांशत्वायोगाच्च । 'ममैवांशः' (गीता० १५-७) इत्यादिव्यपदेशस्तु चिदचिदात्मकल्पितप्रपञ्चैकदेशो जीवात्मा ममैव मदीयाविद्याकल्पित इति नेय इति प्राप्ते—

'ज्ञाज्ञौ द्वौ' (श्वे० १-९) इत्यादिभेदव्यपदेशस्य, 'तत्त्वमसि' (छा० ६-१०-३) 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवाः' इत्याद्यभेदव्यपदे-

शस्य, 'ममैवांशो जीवलोकः' (गीता० १५-७) इत्याद्यंशत्वव्यपदेशस्य च सर्वस्यैव सामञ्जस्यसम्भवे कस्याप्यसामञ्जस्यकल्पनायोगेन (सर्वसामञ्जस्यकल्पनायोगेन) ? सर्वसामञ्जस्याय ब्रह्मांशो जीव इत्येवाभ्युपेयम् । जातिगुणविशिष्टस्यैव द्रव्यस्य सर्वदा सत्त्ववत् चिदचिद्विशिष्टस्यैव ब्रह्मणस्सत्त्वमिति विशिष्टब्रह्मैकदेशरूपविशेषणांशो जीवः । विशिष्टैकदेशत्वमंशपदनिमित्तं सर्वानुगतम् ।

'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' (गीता० १०-३९) इत्यादिभिश्चिदचिदविनाभूतं ब्रह्मेत्यवगतम् । ब्रह्मणो नियन्तृत्वधारकत्वादि[तः]-प्राधान्यरूपं विशेष्यत्वं चिदचितोश्च नियम्यत्वधार्यत्वादितोऽप्राधान्यरूपं विशेषणत्वम् । विशिष्टैकदेशयोर्विशेषणविशेष्ययोरपि 'अयं विशेणांशः, अयं विशेष्यांशः, अयं संसर्गांशः' इति बहुशो व्यवहारो दृश्यते । वनादिसमुदायैकदेशेऽपि 'अयमाम्रांशः अयं पनसांशः' इति व्यवहारो दृश्यते । क्षेत्राद्येकदेशेऽपि 'अयमंशो देवदत्तस्य अयमंशो यज्ञदत्तस्य' इति च व्यवहारो दृश्यते। ततश्च एकदेशत्वमंशत्वम् । प्रकृते जीवस्य विशिष्टब्रह्मैकदेशत्वरूपमंशत्वं मुख्यमेव । विशेषणविशेष्ययोर्जीवब्रह्मणोः स्वरूपस्वभावभेदेन भेदश्रुतिरपि मुख्यैव । 'नीलो घटः देवदत्तो विद्वान्' इत्यादिप्रयोगानुसारेणापृथक्सिद्धप्रकारवाचिनां प्रकारिपर्यन्ताभिधानस्य शरीरवाचिनां शरीरिपर्यन्ताभिधानस्य च स्वीकारेण तत्त्वम्पदार्थयोर्ब्रह्मचेतनविशिष्टस्वरूपयोरैक्यादभेदश्रुतिरपि मुख्यैव । तस्माद्विशिष्टब्रह्मैकदेशरूपब्रह्मांशो जीव इति ब्रह्मापृथक्सिद्धविशेषणं जीव इति सिद्धान्तितम् ।

**इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**द्वितीयस्याध्यायस्य**
**तृतीयः पादः ॥**

**अधिकरणानि ७.  सूत्राणि ५२.**

## ॥ चतुर्थः पादः ॥

### (१) ॥ इन्द्रियोत्पत्त्यधिकरणम् ॥

**सू०॥ तथा प्राणाः ॥ १ ॥**

**सू०॥ गौण्यसम्भवात्तत्प्राक्श्रुतेश्च ॥ २ ॥**

**सू०॥ तत्पूर्वकत्वाद्वाचः ॥ ३ ॥**

तृतीयपादे भोग्यभूतवियदादेरुत्पत्तिप्रकारः, तद्भोक्तुर्जीवस्योत्पत्तिप्रकारः, तत्प्रसक्तज्ञातृत्वकर्तृत्वादि[प्रकार]श्च चिन्तितः। चतुर्थे भोगोपकरणानामिन्द्रियादीनामुत्पत्त्यादिश्चिन्त्यते। करणत्वादिन्द्रियाणां प्रथममुत्पत्तिश्चिन्त्यते।

'तथा प्राणाः' इत्यत्र—'असद्वा इदमग्र आसीत्। तदाहुः किं तदासीदिति। ऋषयो वाव तेऽग्रेऽसदासीदिति। के ते ऋषय इति। प्राणा वा व ऋषयः' (शतपथ० ६-१-१) इत्यत्र श्रुतिवाक्ये 'सर्वे प्राणा अनूत्क्रामन्ति' (बृ० (४-४-२) इत्यादिबहुतरश्रुतिप्रसिद्धेन्द्रियपरबहुवचनान्तप्राणशब्देन तत्समानाधिकरणबहुवचनान्तऋषिशब्देन च ज्ञानसाधनेन्द्रियेषूचितवृत्तिकेन इन्द्रियाणां प्राक् सृष्टेरवस्थानावगमेन जीववदिन्द्रियाणां सूक्ष्मरूपेणावस्थानसम्भवात्, 'मनस्सर्वेन्द्रियाणि च' (मु० २-१-३) इतीन्द्रियोत्पत्तिश्रुतिश्च जीवोत्पत्तिश्रुतिवत्स्वभावान्यथाभावरूपोत्पत्तिपरा सती इन्द्रियवृत्त्युत्पत्तौ पर्यवस्यति। न ह्यृषिशब्दः प्राणशब्दश्च सर्वद्रष्टरि सर्वप्राणिप्राणनहेतौ परमात्मन्येव वर्तत इति वक्तुं युक्तम्। बहुवचनान्तयोस्तयोस्तत्रानवकाशात् निरवयवे ब्रह्मणि पाशन्यायानवताराच्च। तस्मादिन्द्रियाणि जीववन्नोत्पद्यन्त इति शङ्कायाम्—

'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मु० २-१-३) इत्यादिश्रुत्या 'देवा वैकारिका' (वि० पु० १-२-४७) इत्यादिस्मृत्या च स्फुटतरेन्द्रियोत्पत्त्यवगमात् वियदादिवदिन्द्रियादय उत्पद्यन्त एव। न हि जीवोत्पत्तिश्रुतिवदियं नेया। 'न जायते म्रियते वा विपश्चित्' (कठ० २-१८) 'नित्यो नित्यानां' (कठ० ५-१३) इत्यादिजीवोत्पत्तिनिषेधनित्यत्वश्रुतिव-

दिन्द्रियेषु तदभावेन जीववैषम्याद्विषमसृष्ट्या नियामककर्मवासनासद्भावानुरोधेन प्राक् सृष्टेर्जीवावस्थानावश्यम्भावात् इन्द्रियावस्थानकल्पकासिद्धेश्च ।

न च ' असद्वा इदमग्र आसीत् ' (तै० २-७) इति वाक्यात्तदवस्थानसिद्धिः । तत्रेन्द्रियासाधारणश्रुतिलिङ्गादेरभावात् ऋषिशब्दस्य द्रष्टरि परमात्मन्येव स्वरसत्वात् ज्ञानकारणेषु चक्षुरादिषु कथञ्चिद्वृत्तावपि कर्मेन्द्रियसाधारण्यासिद्धेः द्रष्टरि परमात्मनि प्रथमश्रुतऋषिशब्दस्वारस्यानुरोधेन तत्परत्वे तत्समानाधिकरणानन्तरश्रुतप्राणशब्दप्रातिपदिकस्य परमात्मन्येव वृत्त्यौचित्येन बहुवचने कथञ्चिद्गौणत्वस्यैव युक्तत्वात् वागादीन्द्रियधर्माणामुक्त्यादीनां त्रिवृत्करणोत्तरभाविदेवादिनामरूपव्याकरणानन्तरभावितया शुद्धभूतसूक्ष्मसृष्टिकालीनेन्द्रियोत्पत्तिश्रुतेरिन्द्रियधर्मोत्पत्तिपरतया नयनासम्भवात् प्राणाकाशादिसन्दंशावगतस्वरूपोत्पत्तेर्बाधायोगाच्च । ' पाशान्प्रमुमोक्तु ' इत्यत्र प्रत्ययार्थबहुत्वस्यावयवघटितपरम्परासम्बन्धेन प्रातिपदिकार्थपाशान्वयवत् कारणवाक्यस्थप्राणप्रातिपदिकार्थे चिदचिद्विशिष्टब्रह्मणि चिदचिद्घटितपरम्परासम्बन्धेनान्वयाद्गौणत्वसम्भवात् । तस्मादिन्द्रियाणि वियदादिवदुत्पद्यन्त इति समाहितम् ।

॥ इतीन्द्रियोत्पत्त्यधिकरणम् ॥

---

## (२) ॥ अथ सप्तगत्यधिकरणम् ॥

### सू० ॥ सप्त गतेर्विशेषितत्वाच्च ॥ ४ ॥
### सू० ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ५ ॥

वागादीन्द्रियसंख्या व्यवस्थाप्यते । ' सप्त गतेर्विशेषितत्वाच्च ' इत्यत्र—

" सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधस्सप्तजिह्वाः ।
सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहितास्सप्त सप्त ॥"
(मु० २-१-८)

इति जननमरणदशायां जीवेन सह सञ्चरणरूपगतेस्सप्तानामेव श्रवणात् ,

'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥' (कठ० ६-१०)

इति योगदशायां ज्ञानानीति करणव्युत्पत्त्या ज्ञानेन्द्रियाणां विशिष्योक्तत्वात् 'अष्टौ ग्रहाः' (बृ० ३-२-९) 'सप्त वै शीर्षण्याः द्वाववाञ्चौ' (यजु० ७-३-१०) इत्यादिषु प्रतीयमानानां वाक्पाणिपादपायूपस्थचित्ताहङ्काररूपेन्द्रियाणां गत्यादिश्रवणाभावेन यत्किञ्चिज्जीवोपकारकतामात्रेण तेषु प्राणशब्दस्यौपचारिकस्यौचित्याच्च, श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणबुद्धिमनांसि सप्तैवेन्द्रियाणीति प्रापय्य—

श्रोत्रादीनामिव हस्तादीनामपि उपादानादिकार्यभेदमुखेन शरीरे स्थितस्य जीवस्य भोगोपकरणत्वात् प्राणशब्दस्य श्रोत्रादिष्विव वागादिष्वपि मुख्यत्वप्राप्तेस्तेष्वौपचारिकत्वायोगात् एकस्यैव मनसोऽध्यवसायाभिमानचिन्ताख्यवृत्तिभेदेन बुद्ध्यहङ्कारव्यपदेशोपपत्त्या बुद्ध्यधिकेन्द्रियासिद्धेः, क्वचित् क्वचित् कतिपयेन्द्रियोक्तेः कार्यविशेषोपयोगातिशयाभिप्रायकत्वेनेन्द्रियेयत्ताव्यवस्थापनपरत्वाभावेन ततस्सङ्ख्याविशेषासिद्धेश्च, 'दशेमे पुरुषे प्राणा आत्मैकादश' (बृ० ३-९-४) 'इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः' (गीता० १३-५) 'तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश । मनश्च' (वि० पु० १-२-४७) इत्यादिश्रुतिस्मृतिसिद्धान्येकादशैवेन्द्रियाणीति निर्णीतम् ॥

॥ इति सप्तगत्यधिकरणम् ॥

---

## (३) ॥ अथ अण्वधिकरणम् ॥

### सू०॥ अणवश्च ॥ ६ ॥

### सू०॥ श्रेष्ठश्च ॥ ७ ॥

अणवश्चेत्यत्र—'त एते सर्व एव समाः सर्वेऽनन्ताः' (बृ० १-५-१३) इति प्राणशब्दनिर्दिष्टानामिन्द्रियाणामानन्त्यश्रुत्या दूरस्थितवस्तुग्रहणोपपत्त्युपोद्बलिततया विभुत्वसिद्धावुत्क्रान्त्यादिश्रवणमौपचारिकमित्याशङ्क्य—

गत्यागत्युत्क्रान्त्युत्पत्तिलयप्रतिपादकानेकश्रुत्युपचारकल्पनापातात् सर्वदा सर्वविषयोपलब्धिप्रसङ्गात् तेषां परिच्छिन्नत्वे सत्युत्क्रान्त्यादिदशायां पार्श्वस्थैरनुपलम्भात् अति(स्वादु)[स्वच्छत्व]रूपसूक्ष्मत्वलक्षणमणुत्वं न तार्किकाभिमतमणुत्वम्। जीवस्याप्यणुत्वमत्यल्पत्वमुत्कर्षानाश्रयमहत्त्वम्। अन्यथा तस्यातीन्द्रियत्वापत्तेः पार्श्वस्थोपलम्भविरोधिमहत्त्वपरिमाणविशेषस्सूक्ष्मत्वमणुत्वमिति विर्धारितम्। आनन्त्यश्रवणन्तु 'यो ह वैताननन्तानुपास्ते सोऽनन्तं लोकं जयति' (बृ० १-५-१३) इत्युपासनश्रवणात् उपास्यप्राणविशेषणभूतकार्यानन्त्यपरं नेयम्। दूरदेशस्थितवस्तुग्रहणञ्च शीघ्रगतिस्वभावेन यथानुभवमुपपादनीयम्।

जीवोपकरणानामिन्द्रियाणामुत्पत्तिसंख्यापरिमाणानि व्यवस्थाप्य तदुपकारकमुख्यप्राणस्य जन्मादिकं व्यवस्थापयितुं प्रस्तूयते—'श्रेष्ठश्च' इति सूत्रे। 'नासदासीन्नो सदासीत्तदानीं। तम आसीत्तमसा गूढमग्रे प्रकेतं' इत्युपक्रान्ते नासदासीयसूक्ते 'आनीदवातं स्वधया तदेकं' इत्यत्रानीच्छब्देन 'अन प्राणने' इति धातुनिष्पन्नेन मुख्यप्राणासाधारणतया लोकप्रसिद्धप्राणनाख्यव्यापारस्य प्राक्सृष्टेरवस्थानावगमेन सृष्टिवैषम्यादिप्रयोजककर्मवासनावस्थानानुरोधेन जीवावस्थानकल्पनवत् प्राक्सृष्टेः प्राणनाश्रयतया मुख्यप्राणावस्थानावश्यम्भावात् , 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुः' (मु० २-१-३) इति वायुप्राणयोः पृथङ्निर्देशेन 'योऽयं वायुस्स प्राणः' इति प्राणस्य वाय्वाप्यायितार्थकत्वेन वायोस्तत्त्वान्तरतया आनीदवातमिति वायुनिषेधाविरोधात्, प्राणोत्पत्तिश्रुतेर्जीवोत्पत्तिश्रुतिवन्नेतुं शक्यत्वाच्च श्रेष्ठः प्राणो जीववदनुत्पन्न इति शङ्कायाम्—

'सदेव सोम्येदमग्र आसीत्' (छा० ६-२-१) इत्यादिबहुतरवाक्येषु सावधारणं ब्रह्मणः प्राक्सृष्टेरवस्थानावगमेन तद्विरोधात्, 'एतस्माज्जायते प्राणः' (मु० २-१-३) इत्युत्पत्तिश्रुतिविरोधात्, मुख्यप्राणस्य वायुतत्त्व एवान्तर्भाव इति व्युत्पादयिष्यमाणत्वेन 'आनीदवातं' इति वायुतत्त्वसामान्यनिषेधविरोधात्, 'एतस्माज्जायते' इत्यत्र खशब्दोक्तवियदादिसहपाठावगतस्वरूपोत्पत्तिबाधेन स्वभावोत्पत्तौ वैरूप्यापातात्, 'स्वधा त्वं लोकपावनी' इत्यादिप्रयोगप्रसिद्धस्वधाशब्दाभिहितलक्ष्मीसाहचर्यविरोधात्, 'को ह्येवान्यात्कः प्राण्यात्' (तै०

२-७) इत्यादिप्रसिद्धपरमात्मधर्मभूतनिरुपाधिकप्राणनपरतयापि 'आनीदवातं' इति श्रुत्युपपत्तेश्च श्रेष्ठः प्राणो वियदादिवदुत्पन्न एव। 'तथा प्राणाः' (ब्र० सू० २-४-१) इत्युक्तेन्द्रियोत्पत्तिप्रसाधकन्यायेनैव मुख्यप्राणोत्पत्तिसिद्धावपि 'पौष्णं पेषणं विकृतौ प्रतीयेत' (मी० सू० ३-३-३४) इति पूर्वतन्त्रसूत्रवत् 'श्रेष्ठश्च' इति सूत्रमुत्तरचिन्ताप्रसङ्गसम्पादकत्वेनोत्तराधिकरणशेष एव न त्वधिकरणान्तरमिति निर्धारितम्।

॥ इति अणुत्वाधिकरणम् ॥

---

## (४) ॥ अथ वायुक्रियाधिकरणम् ॥

### सू०॥ न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥
### सू०॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥
### सू०॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥
### सू०॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥

'न वायुक्रिये पृथगुपदेशात्' इत्यत्र—'योऽयं वायुस्स प्राणः' इति वायुत्वावस्थस्यैव तत्त्वस्य प्राणत्वोपदेशात् 'एतस्माज्जायते' (मु० २-१-३) इत्यत्र प्राणवाय्वोः पृथगुपदेशस्येन्द्रियमनसोरिव वायोर्भोग्ये प्राणात्मना भोगोपकरणे चान्तर्भावेनोपकारातिशयाभिप्रायकत्वाद्वायुमात्रं प्राणः। तत एव 'जगत्प्राणसमीरणाः' इति कोशोऽपि। लोके हि उच्छ्वासादिक्रियां दृष्ट्वा प्राण एवाय(न)मिति व्यवहारात् प्राणः स्पन्दते इत्यादिप्रयोगस्य पाकं पचतीतिवत् प्राणो वर्तत इत्युपपत्तेः वायुक्रियाविशेषः प्राणः। 'योऽयं वायुः' इति श्रुतिश्च क्रियातद्वतोरपृथग्भावात 'नीलो घट' इत्यादिवदुपपन्नेत्युच्छ्वासादिक्रियाविशेष एव प्राण इति प्राप्यय—

'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी' (मु० २-१-३)

'यस्य वायुश्शरीरं' (बृ० ३-७-७) 'यस्य प्राणश्शरीरं' (बृ० ३-७-१६) इत्यादिषु प्राणवाय्वोः पृथङ्निर्देशेन वायुमात्रे प्राणशब्दप्रयोगाभावेन च प्राणवाय्वोः पार्थक्यावगमात् न वायुमात्रं प्राणः। न चेन्द्रियमनसोरिव पृथङ्निर्देशोपपत्तिः। इन्द्रियमनश्शब्दयोस्सामान्यविशेषपरतयोपकारातिशय-विशेषवैलक्षण्यसूचनाय तत्र गोबलीवर्दन्यायावतारेऽपि प्राणवाय्वोर्द्वयोरप्येक-रूपद्रव्यतां वदतस्तव तन्न्यायेनोपपत्तेरयोगात्, सहद्विरुक्तेरभावेनोपकारातिशय-प्रयुक्तादरार्थतयोपपत्तेरप्ययोगात् जगत्प्राणशब्दसमुदायस्य वायुशब्दपर्यायत्वेऽपि कोशेन प्राणशब्दस्य तथात्वासिद्धेः। न ह्यश्वकर्णशब्दसमुदायरूढिग्राहककोशे तद्घटकाश्वकर्णशब्दयोर्वृक्षे रूढिस्सिध्यति। 'योऽयं वायुस्स प्राणः' इति श्रुतेश्च घटस्य मृदवस्थतया मृद्घट इतिवत् प्राणस्य वाय्यवस्थाविशेषतया वायुः प्राण इत्यर्थकत्वेनाविरोधात्। 'पृथिव्या ओषधयः' (तै० २-१) इत्यादिवत् भौतिकानामपि परमात्मसकाशादुत्पत्तिप्रदर्शनार्थतया 'एतस्माज्जायते प्राणः' (मु० २-१-३) इत्यस्याप्युपपत्तेश्च। तस्मान्न वायुमात्रं प्राणः। नाप्युच्छ्वासादिक्रियाविशेषः। क्वचिदपि तत्र प्राणशब्दाप्रयोगात्, द्रव्योत्पत्ति-प्रस्तावानौचित्यात् गुणक्रियोत्पत्तेः पृथगनुपदेश्यत्वाच्च, प्राणः स्पन्दत इत्यादि-प्रयोगस्य औपचारिकत्वापाताच्च। तस्माद्वायवीयावस्थाविशेष एव प्राणो नाग्न्या-दिवत्तत्त्वान्तरं तत्र वायुत्वानुवृत्तेरानुभाविकत्वात्। 'योऽयं वायुस्स प्राणः' इति (अस्य) 'योऽयं प्राणस्स वायुः' इति [च] नाग्न्यादिवदवस्थामात्रं तत्त्वा-न्तरयोग्यमित्यवगमाच्च। प्राणसंवादादिषु चक्षुराद्युपकरणैस्सह प्राणस्य 'अथ य एवायं मुख्यः प्राणः' (छा० १-२-७) 'योऽयं मध्यमः प्राणः' इति विशिष्या-भिधानं चक्षुरादीनां विषयोपभोगरूपजीवविषयोपकारवत् देहादिधारणरूपोपकार-मुखेन चक्षुरादिसाम्ये सत्येव संभवतीति चक्षुरादिवत्प्राणोऽपि न भूततत्त्वान्तरं किन्तु वायोरवस्थाविशेषस्सन् वायुतत्त्वान्तर्गत एव प्राण इति स्थापितम्। मनसः कामादिवृत्तिभेदेन कामस्सङ्कल्प इत्यादिव्यपदेशभेदवत् प्राणस्यैव वृत्ति-भेदेन प्राणापानादिव्यपदेशभेदश्चेति सिद्धम्। —

॥ इति वायुक्रियाधिकरणम् ॥

---

## (५) ॥ अथ प्राणाणुत्वाधिकरणम् ॥

### सू०॥ अणुश्च ॥ १२ ॥

'अणुश्च' इति सूत्रे—'सर्व एव समा' (बृ० १-५-१३) इत्यादिना इन्द्रियेषु श्रुतस्यानन्त्यस्योपासनविधिशेषत्वेनोपास्यविशेषणीभूतकार्यबाहुल्यरूपत्वेन च विभुत्वासिद्धावपि 'सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' (बृ० १-३-२२) इति श्रुतेन 'प्राणे सर्वं प्रतिष्ठितं' 'सर्वं हीदं प्राणेनाऽऽवृत'-मित्युपपत्तिसहितेन सर्वसमत्वलिङ्गेनोत्क्रमणादीनामेवौपचारिकत्वकल्पनौचित्येन श्रेष्ठप्राणस्य विभुत्वमवश्यमभ्युपेयमित्यधिकाशङ्कायाम्—

एतत्साम वेदेत्युपासनविधिसन्निधानेन सर्वसमत्वस्यापि इन्द्रियानन्त्यवदुपासनविधिशेषत्वाविशेषात् प्रसिद्धिपरहिशब्दमहिम्ना 'प्राणे सर्वं' 'सर्वं ही'-त्याद्युपपत्तिवाक्येऽपि प्रसिद्धयोस्सर्वधारकत्व (सर्ववृत) [सर्वावारक] त्वयोरवगमेन शरीरगतयोः प्राणप्रतिष्ठितत्वप्राणावृतत्वयोर्लोकवेदप्रसिद्धयोरुपपत्तिवाक्ये प्रतीयमानत्वेन 'सम एभिः त्रिभिर्लोकैः' (बृ० १-३-२२) इत्यत्र वाक्येऽपि देवतिर्यङ्मनुष्यात्मना बाल्युवस्थविरात्मना वा त्रिभिर्लोकैर्लोक्यन्त इति व्युत्पत्त्या शरीरैस्सम इति व्यानात्मना सर्वशरीरव्यापनौपयिकतत्तच्छरीरसमपरिमाणप्रतिपादनमुखेन मुख्यप्राणस्तुतित्वार्थतया तस्य विभुत्वं न सम्भवतीति परिहृतम्। अणुत्वञ्चेन्द्रियवद्ग्राह्यम्।

॥ इति प्राणाणुत्वाधिकरणम् ॥

---

## (६) ॥ अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥

### सू०॥ ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ १३ ॥

### सू०॥ तस्य च नित्यत्वात् ॥ १४ ॥

'ज्योतिराद्यधिष्ठानन्तु तदामननात्' इत्यत्र—अभिमानिव्यपदेशसूत्रोक्तमग्न्यादिदेवतानां वागादीन्द्रियाद्यधिष्ठातृत्वं स्वायत्तमेव न परमात्मायत्तम्।

परमात्मदत्तैश्वर्याणामग्न्यादीनां परमात्मवदाराध्यत्वफलप्रदत्वादिसत्त्वेन (स्वातन्त्र्याविघातेने) इन्द्रियाद्यधिष्ठाने स्वातन्त्र्याविघातात्। परमात्मायत्तताश्रुतिस्तु मनुष्यादिविषया। अग्न्यादीनां तन्नियाम्यता च 'भीषाऽस्माद्वातः पवते' (तै० २-८) इत्यनेनैकार्थ्यात् पवनादिक्रियाविशेषविषयेति 'परात्तु तच्छ्रुतेः' (ब्र० सू० २-३-४०) इत्युक्तं परमात्मायत्तत्वं सङ्कुचितमेवेत्याशङ्क्य ;

'योऽग्निमन्तरो यमयति' (बृ० ३-७-५) 'यो वायुमन्तरो यमयति' (बृ० ३-७-७) 'यश्चक्षुषि तिष्ठन् यश्चक्षुरन्तरो यमयति' (बृ० ३-७-१८) 'भीषास्माद्वातः पवते' (तै० २-८) 'एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ० ३-८-९) इत्यादिनाऽधिष्ठेयानामिन्द्रियादीनामधिष्ठातृणाञ्च [अग्न्यादीनां] परमात्मसङ्कल्पायत्तस्वकार्यत्वप्रतिपादनेन स्वातन्त्र्यासम्भवात्।

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' (गीता० ९-२४)

'तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्' (गीता० ९-२३)

'लभते च ततः कामान्मयैव विहितान्हि तान्' (गीता० ७-२२)

इत्यादिना तेषामाराध्यत्वफलप्रदत्वादावपि परमात्मायत्तत्वावगमात्, 'तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्' (तै० २-६) 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (गीता० १०-४२) इत्यादिना सर्वस्मिन्नपि चिदचिद्वस्तुनि परमात्मानुप्रवेशस्य स्वरूपानुबन्धित्वनियततया नित्यत्वावगमाच्चाग्न्यादीनां क्वापि स्वातन्त्र्यासम्भवात् अग्न्याद्यधिष्ठातृत्वमपि परमात्मायत्तमेवेति 'परात्तु तच्छ्रुतेः' (ब्र० सू० २-३-४०) इत्युक्तं परायत्तत्वमसङ्कुचितमेवेति दृढीकृतम्।

॥ इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥

---

## (७) ॥ अथ इन्द्रियाधिकरणम् ॥

## सू०॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥

## सू०॥ भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

'त इन्द्रियाणि तद्व्यपदेशात्' इत्यत्र—प्राणवायाविव इन्द्रियेषु च श्रौतप्राणशब्दयोगदर्शनेन एकयैव शक्त्या तदुपपत्तौ अनेकशक्तिकल्पनानुपपत्ते-स्तुल्यप्रयोगविषययोस्तयोरेकत्र गौणत्वकल्पनानुपपत्तेः प्राणवायुसाधारणस्येन्द्रियप-दप्रवृत्तिनिमित्तस्य भोगोपकरणत्वस्य सम्भवात् 'अथ ह य एवायं मुख्यप्राणस्त-मुद्गीथमुपासाञ्चक्रे' (छा० १-२-७) इति प्राणवायोर्मुख्यप्राणत्वव्यपदेशेन मुख्येन्द्रियत्वपरेण मुख्यब्राह्मणस्य ब्राह्मणत्ववत् इन्द्रियत्वावगमाच्च प्राणवायुसहि-तान्येव चक्षुरादीनीन्द्रियाणीति सिद्धम् । 'एतस्माज्जायते प्राणो मनः' (मु० २-१-३) इत्यत्र प्राणस्य पृथगुक्तिस्तु मनोवदुपकारातिशयाभिप्रायिकेत्यु-पपत्तेश्च । तस्मात् प्राणवायोरपीन्द्रियत्वेन 'यो ह वैताननन्तानुपास्ते' (बृ० १-५-१३) इत्यत्र इन्द्रियोपासने प्राणवायोरप्युपास्यत्वं सिध्यतीति प्राप्ते—

प्राणवायुव्यतिरिक्तान्येवेन्द्रियाणि । तेष्वेव लोकवेदयोरिन्द्रियशब्द-प्रयोगात् । न च चक्षुरादिष्वनुगतानतिप्रसक्तमिन्द्रियत्वं दुर्वचनमिति वाच्यम् । सात्त्विकाहङ्कारविकारत्वस्य तादृशत्वात् । न च प्राणवायोरिन्द्रियत्वाभावे प्राणपदस्येन्द्रियेषु शक्त्यन्तरकल्पनागौरवमिति वाच्यम् । लक्षणयैव तदुपपत्तेः । न च विनिगमनाविरहः । 'त एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेनाख्या-यन्ते' इतीन्द्रियाणां प्राणाधीनप्रवृत्तिकत्वेन प्राणपदयोगविषयत्वप्रतिपादकश्रुतेरेव विनिगमकत्वात् । प्राणवायौ शरीरेन्द्रियधारकत्वनिमित्तेन मुख्यस्य प्राणशब्दस्ये-न्द्रियेषु श्रुत्युक्तनिमित्तेन गौणत्वोपपत्तेः मुख्यप्राण इत्यत्र मुख्यशब्दो न श्रैष्ठ्यवाची किन्तु मुखभवत्ववाची । बृहदारण्यके समानप्रकरणे 'अथ हैनमा-सन्यं प्राणमूचुः' (बृ० १-३-७) इत्यत्र भवार्थकस्यासन्यशब्दस्य प्रयोगदर्शनेन तदैकार्थ्यस्यैव युक्तत्वात् । मुख्यशब्दस्य श्रैष्ठ्यार्थकत्वेऽपि मुख्यामुख्यवृत्तिद्वयेन प्राणशब्दोक्तानां मध्ये श्रैष्ठ्योक्तिसम्भवाच्च ।

किञ्च 'एतस्माज्जायत' (मु० २-१-३) इति मन्त्रे प्राणस्य पृथगुक्तिवैयर्थ्यम्। 'मनष्षष्ठानीन्द्रियाणि' (गीता० १५-७) इत्यादिवचनेनेन्द्रियत्वसिद्ध्या गोबलीवर्दन्यायेन [मनसः] पृथगुक्त्युपपत्तावपि प्राणे तदभावात् [तथोक्त्यसम्भव एव]। किञ्च सुषुप्ताविन्द्रियव्यापारोपरतेः प्राणव्यापारानुपरतेर्वैलक्षण्यात् शरीरधारणज्ञानोक्त्यादिकार्यवैलक्षण्याच्च प्राणवायोरिन्द्रियत्वमयुक्तम्। अतो न तस्येन्द्रियोपासनोपास्यत्वमिति सिद्धान्तितम्।

॥ इति इन्द्रियाधिकरणम् ॥

---

## (८) ॥ अथ संज्ञामूर्त्यधिकरणम् ॥

### सू० ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥

### सू० ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ १८ ॥

### सू० ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥

वियदधिकरणमारभ्य एतावता ग्रन्थेन भूतेन्द्रियादिसृष्टौ परमात्मनः कर्तृत्वमुक्त्वा अधुना देवादिव्यष्टिसृष्टौ परमात्मकर्तृत्वमुच्यते इति पेटिकासङ्गतिः।

'भेदश्रुतेर्वैलक्षण्याच्च' (ब्र० सू० २-४-१६) इति पूर्वाधिकरणगुणसूत्रविषयवाक्यभूतेन 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुः। (मु० २-१-३) इति वाक्येन प्रतिपादितभूतेन्द्रियादिसमष्टिसृष्टिसारितायां 'अनेन जीवेनात्मनानुप्रविश्य' (छा० ६-३-२) इति श्रुत्युक्तदेवादिव्यष्टिसृष्टौ परमात्मकर्तृत्वमुच्यत इति प्रासङ्गिकी पूर्वाधिकरणसङ्गतिः।

'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६-३-२) इति श्रुत्युक्तदेवादिनामरूपसृष्ट्यात्मिका व्यष्टिसृष्टिः किं हिरण्यगर्भजीवकर्तृका किं वा तच्छरीरकपरमात्मकर्तृकेति संशयः। व्यष्टिसृष्टिः चतुर्मुखस्येति पूर्वः पक्षः। 'जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति जीवेनेति तृतीययाऽनुप्रवेशनामरूपव्याकरणयोर्जीवस्यैव कर्तृत्वप्रतीतेः।

## (७) ॥ अथ इन्द्रियाधिकरणम् ॥

### सू०॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥

### सू०॥ भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

'त इन्द्रियाणि तद्व्यपदेशात्' इत्यत्र—प्राणवायाविव इन्द्रियेषु च श्रौतप्राणशब्दयोगदर्शनेन एकयैव शक्त्या तदुपपत्तौ अनेकशक्तिकल्पनानुपपत्ते-स्तुल्यप्रयोगविषययोस्तयोरेकत्र गौणत्वकल्पनानुपपत्तेः प्राणवायुसाधारणस्येन्द्रियप-दप्रवृत्तिनिमित्तस्य भोगोपकरणत्वस्य सम्भवात् 'अथ ह य एवायं मुख्यप्राणस्त-मुद्गीथमुपासाञ्चक्रे' (छा० १-२-७) इति प्राणवायोर्मुख्यप्राणत्वव्यपदेशेन मुख्येन्द्रियत्वपरेण मुख्यब्राह्मणस्य ब्राह्मणत्ववत् इन्द्रियत्वावगमाच्च प्राणवायुसहि-तान्येव चक्षुरादीनीन्द्रियाणीति सिद्धम् । 'एतस्माज्जायते प्राणो मनः' (मु० २-१-३) इत्यत्र प्राणस्य पृथगुक्तिस्तु मनोवदुपकारातिशयाभिप्रायिकेत्यु-पपत्तेश्च । तस्मात् प्राणवायोरपीन्द्रियत्वेन 'यो ह वैताननन्तानुपास्ते' (बृ० १-५-१३) इत्यत्र इन्द्रियोपासने प्राणवायोरप्युपास्यत्वं सिध्यतीति प्राप्ते—

प्राणवायुव्यतिरिक्तान्येवेन्द्रियाणि । तेष्वेव लोकवेदयोरिन्द्रियशब्द-प्रयोगात् । न च चक्षुरादिष्वनुगतानतिप्रसक्तमिन्द्रियत्वं दुर्वचनमिति वाच्यम् । सात्विकाहङ्कारविकारत्वस्य तादृशत्वात् । न च प्राणवायोरिन्द्रियत्वाभावे प्राणपदस्येन्द्रियेषु शक्त्यन्तरकल्पनागौरवमिति वाच्यम् । लक्षणयैव तदुपपत्तेः । न च विनिगमनाविरहः । 'त एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेनाख्या-यन्ते' इतीन्द्रियाणां प्राणाधीनप्रवृत्तिकत्वेन प्राणपदयोगविषयत्वप्रतिपादकश्रुतेरेव विनिगमकत्वात् । प्राणवायौ शरीरेन्द्रियधारकत्वनिमित्तेन मुख्यस्य प्राणशब्दस्ये-न्द्रियेषु श्रुत्युक्तनिमित्तेन गौणत्वोपपत्तेः मुख्यप्राण इत्यत्र मुख्यशब्दो न श्रैष्ठ्यवाची किन्तु मुखभवत्ववाची । बृहदारण्यके समानप्रकरणे 'अथ हैनमा-सन्यं प्राणमूचुः' (बृ० १-३-७) इत्यत्र भवार्थकस्यासन्यशब्दस्य प्रयोगदर्शनेन तदैकार्थ्यस्यैव युक्तत्वात् । मुख्यशब्दस्य श्रैष्ठ्यार्थकत्वेऽपि मुख्यामुख्यवृत्तिद्वयेन प्राणशब्दोक्तानां मध्ये श्रैष्ठ्योक्तिसम्भवाच्च ।

किञ्च 'एतस्माज्जायत' (मु० २-१-३) इति मन्त्रे प्राणस्य पृथगुक्तिवैयर्थ्यम्। 'मनष्षष्ठानीन्द्रियाणि' (गीता० १५-७) इत्यादिवचनेनेन्द्रियत्वसिद्ध्या गोबलीबर्दन्यायेन [मनसः] पृथगुक्त्युपपत्तावपि प्राणे तदभावात् [तथोक्त्यसम्भव एव]। किञ्च सुषुप्ताविन्द्रियव्यापारोपरतेः प्राणव्यापारानुपरतेर्वैलक्षण्यात् शरीरधारणज्ञानोक्त्यादिकार्यवैलक्षण्याच्च प्राणवायोरिन्द्रियत्वमयुक्तम्। अतो न तस्येन्द्रियोपासनोपास्यत्वमिति सिद्धान्तितम्।

॥ इति इन्द्रियाधिकरणम् ॥

---

## (८) ॥ अथ संज्ञामूर्त्यधिकरणम् ॥

### सू० ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥
### सू० ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ १८ ॥
### सू० ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥

वियदधिकरणमारभ्य एतावता ग्रन्थेन भूतेन्द्रियादिसृष्टौ परमात्मनः कर्तृत्वमुक्त्वा अधुना देवादिव्यष्टिसृष्टौ परमात्मकर्तृत्वमुच्यते इति पेटिकासङ्गतिः।

'भेदश्रुतेर्वैलक्षण्याच्च' (ब्र० सू० २-४-१६) इति पूर्वाधिकरणगुणसूत्रविषयवाक्यभूतेन 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुः।' (मु० २-१-३) इति वाक्येन प्रतिपादितभूतेन्द्रियादिसमष्टिसृष्टिस्मारितायां 'अनेन जीवेनात्मनानुप्रविश्य' (छा० ६-३-२) इति श्रुत्युक्तदेवादिव्यष्टिसृष्टौ परमात्मकर्तृत्वमुच्यत इति प्रासङ्गिकी पूर्वाधिकरणसङ्गतिः।

'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६-३-२) इति श्रुत्युक्तदेवादिनामरूपसृष्ट्यात्मिका व्यष्टिसृष्टिः किं हिरण्यगर्भजीवकर्तृका किं वा तच्छरीरकपरमात्मकर्तृकेति संशयः। व्यष्टिसृष्टिः चतुर्मुखस्येति पूर्वः पक्षः। 'जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति जीवेनेति तृतीययाऽनुप्रवेशनामरूपव्याकरणयोर्जीवस्यैव कर्तृत्वप्रतीतेः।

नन्वत्र जीवसामान्यकर्तृत्वप्रतीतेः कथं चतुर्मुखविषयविचारावकाश इति चेन्न। 'यो ब्रह्माणं विदधाति पूर्वं' (श्वे० ६-१८) इत्यादिप्रमाणेन भगवदाहितज्ञानशक्त्यादिमत्तया चतुर्मुखस्यार्थसामर्थ्यरूपयोग्यतावशेन सामान्यश्रुतेर्विशेषपरत्वमाश्रित्य चतुर्मुखविषयविचारारम्भसम्भवात्। 'हस्तेनावद्यति' इत्यादाववदानसामान्यश्रुतेरर्थसामर्थ्यरूपयोग्यतावशेन पुरोडाशाद्यवदानविशेष—परत्वस्य तान्त्रिकैराश्रितत्वात्।

ननु तर्हि सिद्धान्ते जीवशब्दस्य हिरण्यगर्भविषयत्वेन तद्द्वारैवाचिदनुप्रवेशप्राप्त्या गवादिशब्दानां तत्तच्छरीरकजीवद्वारा परमात्मपर्यन्तत्वे नामरूपव्याकरणश्रुतिः कथं प्रमाणं स्यात्। कथं वा अणुस्वरूपहिरण्यगर्भाख्यजीवद्वारा सकलाचिदनुप्रवेशसम्भवः परमात्मन इति चेन्न। देवताशब्दोक्ताचिदनुप्रवेशः परमात्मनो जीवसामान्यद्वारकः देवादिनामरूपव्याकरणन्तु योग्यतावशेन जीवशब्दार्थान्तर्गतचतुर्मुखद्वारकमिति सिद्धान्ततात्पर्येण गवादिशब्दानां तत्तच्छरीरकजीवद्वारा परमात्मपर्यन्तत्वे नामरूपव्याकरणश्रुतेः प्रमाणत्वसम्भवात्। **श्रुतप्रकाशिकायां** "योग्यतावशात् जीवविशेषनिष्ठो विचारः सूत्राभिप्रेतः" [इति] परमात्मनो जीवसमष्टिद्वारेणाचिदनुप्रवेशस्य प्रतिपाद्यत्वा" इति चानुगृहीतम्। तस्मात्सद्वारकाद्यव्यष्टिसृष्टौ 'यो ब्रह्माणं' इत्युक्तभगवद्दत्तकरणकलेबरज्ञानशक्त्यादिमत्तया चतुर्मुखस्यैव नामरूपव्याकरणे द्वारत्वयोग्यत्वेन चतुर्मुखविषय एव विचारः प्रवर्तयितुमुचितः। समानन्यायेनान्यत्र नवप्रजापतीन्द्रादिकृतव्यष्टिसृष्टौ चतुर्मुखान्तर्यामिभगवद्दत्तकरणकळेबरज्ञानशक्त्यादिमत्तया योग्यत्वेन इन्द्रादितत्तच्चेतनशरीरकः परमात्मा सृज्यगततत्तच्चेतनद्वारा सृज्यं कारणावस्थमचिद्वस्त्वनुप्रविश्य तत्तद्वस्तुनामरूपव्याकरणं करोतीत्ययमर्थस्सिद्ध्यतीत्यस्याधिकरणस्य जीवसामान्यविषयत्वाभावेऽपि दोषाभावात्।

'नामरूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम्।
वेदशब्देभ्य एवादौ देवादीनां चकार सः॥' (वि० पु० १-५-६३)

इत्यादिस्मृतिपुराणानुसारेण योग्यतानुसारेण च चतुर्मुखविषयो विचारः प्रवर्तितो भाष्य इति विभावनीयम्।

नन्वत्र श्रुतौ 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छा॰ ६-३-२,३) इति त्रिवृत्करणसमानकर्तृकं नामरूपव्याकरणं प्रतीयते। त्रिवृत्करणन्तु परमात्मकर्तृकमेव न चतुर्मुखकर्तृकम्। त्रिवृत्कृतभूतारब्धाण्डसृष्ट्यनन्तरभाविनश्चतुर्मुखस्य स्वपूर्वभाविनि त्रिवृत्करणे कर्तृत्वासम्भवात्। ततो जीवेनेति तृतीया न कर्तरीति चेन्न। 'नामरूपे व्याकरोत् त्रिवृतं त्रिवृतमेकैकामकरोत्' (छा॰ ६-३-३,४) इति पाठक्रमेण 'यदग्ने रोहितं रूपं तत्तेजसः यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' (छा॰ ६-४-१) इति अण्डान्तर्वर्तिषु त्रिवृत्करणप्रदर्शनेन 'अन्नमशितं त्रेधा विधीयते' इत्यन्नादीनां त्रिवृत्करणश्रुत्या च त्रिवृत्करणस्य नामरूपव्याकरणोत्तरकालीनत्वावगमेन तत्र चतुर्मुखस्य कर्तृत्वसम्भवात् जीवेनेति तृतीयावगतकर्तृत्वस्य बाधानर्हत्वात्। न ह्यत्र यवागूपाकाग्निहोत्रहोमन्यायावतारः; मूर्तस्य यवागूद्रव्यस्य प्रक्षेपरूपहोमक्रियां प्रति कारणत्वस्य लोकप्रमाणावगतत्वेन 'यवाग्वा जुहोति' इति वाक्यान्तरावगतत्वेन चार्थक्रमेण पाठक्रमबाधेऽपि त्रिवृत्करणव्याकरणयोः कार्यकारणभावस्य प्रमाणान्तरानवगतत्वेनात्र तदनवकाशात्। प्रकृतिमहदहङ्कारशब्दतन्मात्रादीनामिव त्रिवृत्करणं विनैव तेजःप्रभृतीनामप्यारम्भकत्वसम्भवे व्यभिचारादनवश्यकल्प्यत्वाच्च त्रिवृत्करणकारणत्वस्य केनापि प्रमाणेन बोधयितुमयुक्तत्वात्, अग्न्यादावन्नादेश्च त्रिवृत्करणप्रदर्शनतच्छ्रुत्योः कथञ्चिदन्यथानयनस्य कुदृष्टिकल्पकत्वेनानादेयत्वाच्च, चतुर्मुखस्यैव नामरूपव्याकरणे कार्यविशेषारम्भार्थत्रिवृत्करणे च कर्तृत्वमुपपन्नमेव।

अत एव लोकेऽन्वयव्यतिरेकाभ्यां मृत्सिकतासलिलानामन्योन्यसंसृष्टानामेव कुड्यादिकार्यारम्भकत्वावगमेन घटादौ सामान्यतः कर्तृत्वकार्यत्वाभ्यां हेतुहेतुमद्भाववत् संसृष्टाचित्वभूतत्वादिकार्यद्रव्यहेतुत्वं? कल्प्यत इति निरस्तम्। प्रकृत्यादौ शब्दतन्मात्रादौ च व्यभिचारेण तथा कारणत्वकल्पनानवकाशात् महदादिकारणतत्कार्यव्यावृत्तानुगतानतिप्रसक्तसामान्यधर्माभावेन तद्व्यावृत्तसामान्यकार्यकारणभावकल्पनानवकाशाच्च पाठक्रमादिसिद्धपौर्वापर्ययोर्नामरूपव्याकरणत्रिवृत्करणयोश्चतुर्मुख एव कर्ता।

नन्वेवं तयोर्जीवस्य कर्तृत्वेन कथं व्याकरवाणीत्युत्तमनिर्देशः। कथं वा तत्समानकर्तृक्रियावाचिनः अनुप्रविश्येति ल्यबन्तस्य निर्देशः 'चारेणानुप्रविश्य

[परबलं]प्रबलं सङ्कलयानि ' इतिवत् लाक्षणिकत्वापातादिति चेन्न । घटत्वविशिष्टस्य घटतत्त्वस्वरूपत्ववत् चिदचिद्विशिष्टस्य परमात्मतत्त्वस्वरूपत्वेन हन्ताहमित्यत्राहम्पदार्थतया अंशो नानेत्यधिकरणोक्तन्यायेन विशिष्टैकदेशतया चेतनस्य परमा[त्मां]शत्वेन वृक्षांशभूतशाखाचलनेन वृक्षश्चलतीतिवत् अंशभूतजीवकृतानुप्रवेशादिना वृक्षस्थानीयचिदचिद्विशिष्टपरमात्मरूपाहम्पदार्थगततया ' अनुप्रविश्य व्याकरवाणि ' इति ल्यप्प्रत्ययोत्तमनिर्देशोऽपि मुख्य एव ।

यद्यपि भुक्त्वा गच्छामीत्यादौ साक्षात्सम्बन्धे क्रियाद्वयसामानाधिकरण्य एव भूरिप्रयोगान्मुख्यत्वं तथापि शाखापादादिचलनेऽपि ' वृक्षश्चलति देवदत्तश्चलति ' इत्यादिबहुतरप्रयोगेणांशांशिभावरूपनियतपरम्परासम्बन्धगर्भसामानाधिकरण्येऽपि समानकर्तृकत्वादिप्रतीत्यविलम्बेन मुख्यकल्पत्वम् । यथा प्राभाकरमते गोत्वादिजातेर्गवादिपदमुख्यत्वेऽपि स्वशक्यगोत्वाद्यविनाभावरूपनियतैकसम्बन्धेन व्यक्तिप्रतीतेर्नियमेनाविलम्बभावितया व्यक्तिर्मुख्यकोटिरुच्यते तद्वदिति पूर्वपक्षिणोऽभिप्रायः । न च सहयोगविहितेयं तृतीयेति न जीवकर्तृकत्वसिद्धिरिति वाच्यम् । उपपदविभक्तेरपि कारकविभक्तेर्बलीयस्त्वात् । सूक्तवाकाधिकरणे तथा व्युत्पादितत्वात् । न च ' कर्तृकरणयोः' इति विहितकरणतृतीयेयमिति वाच्यम् । परमात्मानुप्रवेशादौ साधकतमत्वाभावेन जीवस्य करणत्वासम्भवात् । न चेयं ' अध्ययनेन वसति ' इतिवत् हेतुतृतीया । जीवस्यानादेरनुप्रवेशादिसाध्यत्वाभावेन हेतुभावासम्भवात् । तस्मात्कर्तरि तृतीयेति प्रतिपत्तव्यम् ।

ननु ' हन्ताहमिमास्तिस्रो देवता अनेन जीवेन ' (छा० ६-३-२) इत्यादिव्याकरणवाक्ये तृतीयाख्याताभ्यां जीवपरयोर्द्वयोरप्यनुप्रवेशादिकर्तृत्वश्रुत्या क्रियाद्वयकर्तुरैक्यञ्चावगम्यते । तथा च जीवरूपपरमात्मा अनुप्रवेशादिकर्तेति वाक्यार्थः पर्यवस्यति । तथा च 'स्नात्वा भुञ्जीत' इत्यादिवत् (सल्यप्रत्ययावन्तं स्नान) [ल्यप्प्रत्ययावगतं समान] कर्तृकत्वमपि स्वरसमित्युक्तरीत्या मुख्यप्रायतन्निर्वाहाश्रयणमयुक्तमिति चेन्न । अहमनेनेति पदावगताभ्यां अहमिदंपदार्थयोर्जीवपरयोर्भेदावगमेन ' तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः' (तै० २-५) ' य आत्मनि तिष्ठन् ' (बृ० ३-७-२२) ' पृथगात्मानं प्रेरितारञ्च

मत्वा ' (श्वे० १-६) ' तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ' (मु० ३-१-१) 'जुष्टं यदा पश्यत्यन्यमीशं' (मु० ३-१-२) 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे० १-१०) 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां' (श्वे० ६-१३) 'ज्ञाज्ञौ द्वावीशनीशौ' (श्वे० १-९) ' भेदव्यपदेशाच्चान्यः' (ब्र० सू० १-१-२२) 'उभयेऽपि हि भेदेनैनमधीयते' (ब्र० सू० १-२-२१) ' अधिकन्तु भेदनिर्देशात् ' (ब्र० सू० २-१-२२) इत्यादिश्रुतिसूत्राभ्यां जीवपरयोर्भेदावगमेन स्वरूपैक्यासम्भवात् अंशांशिभावमादायैवोक्तरीत्या समानकर्तृकत्वस्य मुख्यकल्पत्वेनैव (मुख्यत्व)निर्वाहस्योचितत्वात् । दृष्टान्ते तु राजचारयोरत्यन्तभेदाल्लाक्षणिकमिति वैषम्यात् । स्वरूपैक्याश्रयणेऽपि समानकर्तृकत्वं न मुख्यं [जी]वत्वपरत्वरूपभिन्नधर्मावच्छिन्नतया कर्तृत्वैक्यासम्भवात् । ' देवदत्तः स्नात्वा भुङ्क्ते देवदत्तो भुक्त्वा गच्छति ' इत्यादिप्रयोगानुसारेण एकधर्मावच्छिन्नक्रियाद्वयकर्तृत्वैक्यस्थल एव मुख्यत्वावगमात् कर्तृत्वाधिष्ठानैक्यमादाय क्त्वाप्रत्ययस्य मुख्यत्वे देवदत्तः स्नात्वा ब्राह्मणो भुङ्क्त इत्यपि प्रयोगापातात् । तस्मादपृथक्सिद्धविशेषणतया परमात्मांशचतुर्मुखजीवकृतानुप्रवेशव्याकरणे वृक्षशाखाचलनन्यायेन परमात्मकृततया व्यपदिश्येते हन्ताहमित्यादिनेति प्राप्ताप्राप्तविवेकेन चतुर्मुख एवाद्यदेवादिव्यष्टिसृष्टिकर्तेति पर्यवसानान्न परमात्मनस्सर्वकर्तृत्वमिति ।

सिद्धान्तस्तु—' नामरूपे व्याकरवाणि त्रिवृतं त्रिवृतमेकैकां करवाणि ' (छा० ६-३-२) इति त्रिवृत्कुर्वत एव नामरूपव्याकरणोपदेशात् त्रिवृत्करणस्य परमात्मकर्तव्यत्वात् तत्समकर्तृकत्वाद्व्याकरणस्य चतुर्मुखशरीरकः परमात्मैव आद्यदेवादिव्यष्टिसृष्टिकर्ता त्रिवृत्करणानन्तरभावितया चतुर्मुखस्य त्रिवृत्करणकर्तृत्वासम्भवेन तत्समकर्तृकव्याकरणेऽपि कर्तृत्वासम्भवात् ।

चतुर्मुखस्य त्रिवृत्करणोत्तरभावित्वं स्मर्यते—

" नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥

(वि० पु० १-२-५२, ५३)

तदण्डमभवद्धैमं तस्मिन् जज्ञे पितामहः ॥" (वि० पु०)

इत्यादित्रिवृत्करणानन्तरोत्पन्नाण्डोत्तरोत्पन्नतया चतुर्मुखस्य त्रिवृत्करणपश्चाद्भावित्वं सिद्धम् ।

ननु प्रकृतिमहदादाविव त्रिवृत्करणं विनैव कार्यारम्भसम्भवादन्यथासिद्धं तदिति चेत्; महदादिनाण्डोत्पत्तिप्रकारो मृद्घटादादिव न लोकप्रमाणगम्यः। शुद्धभूतस्याव्यक्तशब्दादिगुणस्य प्रत्यक्षागोचरत्वात्। सांख्यवैशेषिकाद्युक्तकारणानुमानप्रकारस्य परपक्षप्रतिक्षेपपाद एव निरस्तत्वात्। किन्तु शब्दैकगम्यः। तत्र च प्रबलप्रमाणबाधं विना यथाशब्दं प्रतिपत्तव्यम्। शास्त्रञ्च केवलानां प्रकृत्यादीनां महदाद्यारम्भकत्वं आकाशादिभूतानां त्रिवृत्कृतानां अण्डादिकार्यविशेषारम्भकत्वञ्चाह। 'पृथिव्यप्सु प्रलीयते आपस्तेजसि' (सुबा० २) इत्यारभ्य, 'महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते' (सुबा० २) इति लयक्रमेण प्रकृत्यादितो महदाद्युत्पत्तिस्सूच्यते। तथा 'आकाशाद्वायुः, वायोरग्निः' (तै० २-१) इत्यादिना शुद्धभूतोत्पत्तिश्चोच्यते। ततः प्रकृत्यादीनां केवलानामेव स्वस्वकार्यारम्भसामर्थ्यं ज्ञायते। तथा—'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना' (वि० पु० १-२-५२) इत्यादिना आकाशादिभूतानां त्रिवृत्कृतानामेवाण्डादिकार्यारम्भसामर्थ्यमवगम्यते। यथाप्रमाणं त्रिवृत्करणस्य व्याकरणहेतुतया यवागूपाकहोमन्यायेनार्थक्रमात्पाठक्रमस्य बाध्यत्वेन त्रिवृत्करणं व्याकरणपूर्वकालीनमेव। तथा अण्डान्तर्वर्त्यग्न्यादिषु त्रिवृत्करणप्रदर्शनञ्च शुश्रूषोः श्वेतकेतोरण्डान्तर्वर्तित्वेनाण्डबहिष्ठवस्तुज्ञानाभावेन तत्र तत्प्रदर्शनासम्भवकृतमिति न ततस्त्रिवृत्करणं व्याकरणोत्तरकालीनं सिध्यति।

ननु तथापि चतुर्मुखसृष्टान्नादिषु त्रिवृत्करणप्रकार उपदिश्यते—'यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति' (छा० ६-४-७) 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति, यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः।' (छा० ६-५-१) 'आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं यो मध्यमस्तल्लोहितं योऽणिष्ठस्स प्राणः' (छा० ६-५-२) 'तेजोऽशितं त्रेधा

विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमस्स मज्जा योऽणिष्ठस्सा वाक्' । (छा० ६-५-३) 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' (छा० ६-५-४) इति । ततश्च त्रिवृत्करणं व्याकरणोत्तरकालीनं चतुर्मुखकर्तृकं सम्भवतीति तत्समानकर्तृकं व्याकरणं चतुर्मुखकर्तृकं स्यादिति चेत्; उच्यते । नात्र त्रिवृत्करणवदुपदिश्यते । तथा सति मांसमनसोराप्यत्वतैजसत्वप्रसङ्गात् । अत्रिवृत्कृतानां पृथिव्यप्तेजसां स्थूलत्वाणुत्वाणीयस्त्वधर्मकतया त्रिवृत्कृतेषु तत्कार्येष्वपि स्थूलत्वादिधर्मवत्तयोक्तानां पुरीषादीनां पार्थिवत्वाप्यत्वतैजसत्वप्राप्तेरनिवार्यतया मांसमनसोराप्यत्वतैजसत्वे स्याताम् । न च तदिष्टम् । अन्नमशितमिति प्रक्रमावगतस्य मांसमनसोः पार्थिवत्वस्य विरोधापातात् । एवं 'आपः पीताः' (छा० ६-५-३) इति पर्यायद्वयेऽपि मूत्रप्राणयोः स्थविष्ठाणीयसोः 'आपः पीताः' इति प्रक्रमावगताप्यभावयोः स्थविष्ठयोः पार्थिवत्वतैजसत्वे स्याताम् । 'अन्नमशितं' (छा० ६-५-१) इति प्रक्रमावगततैजसत्वयोः स्थविष्ठाणुभूतयोरस्थिमज्जयोः पार्थिवत्वाप्यत्वे च स्याताम् । 'अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वाक्' (छा० ६-५-४) इति मनःप्राणवाचां पार्थिवत्वाद्यवगमविरोधाच्च । अतोऽत्र न त्रिवृत्करणप्रकार उपदिश्यते । किन्तु प्रागेव त्रिवृत्कृतानां पुरुषं प्राप्ताना (मन्नानामपि तेजसां) [मन्नाप्तेजसां] त्रेधा त्रेधा परिणाम उच्यते । पुरुषेण भक्षितस्यान्नस्य मध्ये स्थविष्ठांशानां पुरीषात्मना परिणामः सूक्ष्मांशानां मांसरूपपरिणामः सूक्ष्मतरांशानां मनइन्द्रियाप्यायकतात्मना परिणामः । तथा उत्तरपर्यायद्वयेऽपि बोध्यम् । 'अन्नमयं हि सोम्य मनः' अन्नांशविकारो मनआप्यायकः । 'आपोमयः प्राणः' अम्बंशविकारः प्राणाप्यायकः । 'तेजोमयी वाक्' तेजश्शब्दोक्तघृततैलादिसूक्ष्मांशविकारो वागाप्यायक इति । तथा चान्नादीनामत्र वाक्ये त्रिवृत्करणाप्रदर्शनेनाग्न्यादित्याद्यण्डान्तर्वर्तिविषयत्रिवृत्करणप्रकारप्रदर्शनस्य शुश्रुषुसान्निध्यप्रयुक्तत्वेन 'नानावीर्याः' (वि० पु० १-२-५२) इत्यादिवचनसिद्धत्रिवृत्करणकारणतामूलकार्थक्रमेण च व्याकरणपूर्वकालीने त्रिवृत्करणे तदुत्तरभाविचतुर्मुखकर्तृत्वासम्भवेन तत्समानकर्तृकव्याकरणेऽपि परमात्मैव कर्तेति समष्टिसृष्टाविव व्यष्टिसृष्टावपि स एव कर्ता ।

नन्वेवं कथमनेन जीवेनेति सङ्गच्छते। जीवस्य व्याकरणकर्तृत्वाभावेन कर्तरि तृतीयानुपपत्तेरर्थान्तरतृतीयायाश्च पूर्वपक्ष एव निरस्तत्वादिति चेन्न। जीवेनात्मनेति सामानाधिकरण्येन शरीरवाचिनां शरीरिणि मुख्यत्वेन 'सिंहेन भूत्वा बहवो मयात्ताः' इतिवत् जीवशरीरकेण मयाऽनुप्रविश्य व्याकरवाणीति तदर्थोपपत्तेः।

नन्वेवं सति व्याकरवाणीति तिङा तत्कर्तुरभिधानादनभिहिताधिकार-विहिततृतीया कथमुपपद्यते। न च व्याकरणकर्तुरभिधानेऽपि प्रवेशकर्तुरनभि-धानात् तृतीयोपपत्तिः। वस्तुतस्तदुभयकर्तुरैक्येऽपि तिङा प्रवेशकर्तृत्वेनानभिधा-नात् इति विभाव्यम्। तर्हि मया भुक्त्वा व्रजामीति प्रयोगस्य साधुत्वापातः व्रजिकर्तुस्तिङाभिधानेऽपि भुजिकर्तुस्तिङानभिधानात् (क्त्वाप्रत्ययस्य भाक्तत्वात्)। 'पक्त्वौदनं भुङ्क्ते देवदत्तः पक्त्वा ओदनो भुज्यते देवदत्तेन' इत्यत्रापि पाकक्रियाकर्तृकर्मणोस्तिङानभिधानात् तृतीयाद्वितीयापत्तिमाशङ्कय आख्यात-पदवाच्यक्रियाया विशेष्यतया प्राधान्यात् इतरक्रियायाश्च विशेषणत्वेनाप्राधान्यात् तत्क्रियासाधनयोरपि शक्त्योस्तद्द्वारा गुणप्रधानभावावश्यम्भावेन गुणानां प्रधा-नानुसारितया तद्विरुद्धस्वकार्यारम्भायोगेन च 'प्रधानशक्त्यभिधानसमये गुणक्रियाशक्तिरप्यभिहितवत्प्रकाशत' इति **कैयटेनो**क्ततया व्याकरवाणीति तिङा प्रवेशकर्तुरप्यभिहिततया जीवेनात्मनेति न तृतीयोपपत्तिरिति चेत्;

जीवेनात्मना जीवशरीरकेण स्वरूपेण मृदात्मको घट इत्यादाविव आत्मशब्दस्य स्वरूपवाचित्वात्। मयेत्यात्मशब्दविवरणन्तु अहंशब्दसमभिव्या-हारलब्धम्। ततश्च जीवशरीरकानुप्रवेशकर्तृस्वरूपस्य व्याकर्तृस्वरूपाभेदेऽपि 'व्यपदेशिवदेकस्मिन् बुद्धिनानात्वकल्पना' इति न्यायेन कल्पितभेदं पुरस्कृत्या-नभिहिततृतीयोपपत्तिः। 'घटः स्वेन रूपेणेतरव्यावृत्तिं करोति' इत्यादिप्रयोग-दर्शनात्करोतीति तिङा व्यावृत्तिकर्तुरभिहिततया उक्तन्यायेन कल्पितभेदमादायैव तृतीयोपपत्तेरभ्युपेतव्यत्वात्।

यद्वा तिङा करणत्वस्य अनभिधानादात्मना आत्मानं जानातीतिवत् जीवशरीरकस्य परमात्मनः करणत्वविवक्षया तृतीयोपपत्तिः। तथा चोक्त-**मधिकरणसारावल्यां** 'तेनेशस्तद्विशिष्टस्वकरणकतयानुप्रवेशेऽपि कर्ता' इति।

अथ वा **अनेन** प्रमाणसिद्धेन, **आत्मना** शरीरेण, शरीरवाचित्वादात्मशब्दस्य । **जीवेन** प्रमाणप्रसिद्धमच्छरीरभूतजीवेनेत्यर्थः । **अनेन** शरीरभूतेन, बुद्धिस्थवाचित्वादिदंशब्दस्य । **जीवेन** जीवात्मनेति वार्थः । चारेण प्रविश्य परसैन्यं सङ्कलयानि, देवदत्तेन पक्त्वा ओदनं भुङ्क्ते ' इत्यत्रेव प्रवेशक्रियाप्रयोजककर्त्रा परमात्मना व्याप्रियमाणस्य जीवात्मनः करणतया तृतीयोपपत्तिः । परमात्मनो व्याकरणांशे साक्षात्कर्तृत्वमप्यस्ति । प्रवेशे तु सर्वव्यापकस्य परमात्मनः साक्षात्कर्तृत्वासम्भवात्प्रयोजककर्तृत्वमात्रमिति प्रवेशव्याकरणयोः परमात्मनः कर्तृत्वसामान्येन प्रविश्य व्याकरवाणीति ल्यप् चोपपद्यते ।

न च करणे तृतीयेति पक्षे हिरण्यगर्भशरीरकपरमात्मनः व्याकरणकर्तृत्वमिति सिद्धान्तः कथं सिध्यतीति वाच्यम् । पुराणादिषु चतुर्मुखसृष्टिप्रकरणे नामरूपव्याकरणवचनेन चतुर्मुखकर्तृत्वावगमे तदनुसारेण चतुर्मुखशरीरकपरमात्मनः कर्तृत्वमत्र श्रुतौ प्रतिपाद्यमिति सिद्धान्तकरणात्तदभिप्रायेण भाष्ये सिद्धान्तग्रन्थे 'चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याक्रियोपदेशश्चोपपद्यत' इत्यनुगृहीतं भाष्यकृता । तस्मात त्रिवृत्कुर्वतः परस्यैव देवादिव्यष्टिसृष्टिः ।

ननु 'अन्नमशितं' इत्यादिना प्रागेव त्रिवृत्कृतानामन्नापेजसां पुरुषेणाशितपीतानां त्रेधा परिणाम उच्यत इत्ययुक्तम् । सर्वेषां भौतिकपदार्थानां त्रिवृत्कृततया त्र्यात्मकत्वेन कथं ' अन्नमशितं आपः पीताः तेजोऽशितं ' इति व्यवहारव्यवस्था सर्वेषां सर्वात्मकत्वादिति केवलानामेव भूतानामारम्भकत्वम् । न च तत्र तत्र तत्तदंशाधिक्याद्व्यवहारव्यवस्थेति वाच्यम् । आधिक्यकल्पनायां मानाभावात्, त्रिवृत्करणश्रुतेर्विप्रतिपन्नत्वात् , वैशेषिकनयवन्निमित्तकारणसंसृष्टिपरतयापि तदुपपत्तेः । शब्दादिगुणविनिमयस्य च अग्न्यादिसंसृष्टजलादावौष्ण्याद्युपलम्भवदुपपत्तेरिति चेदुच्यते । ' स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति ' (छा० ६-१-२) इत्येकविज्ञानेन सर्वविज्ञानमुखेनोपादानत्वमुपक्षिप्य ' यथा सोम्यैकेन मृत्पिण्डेन ' (छा० ६-१-४) इति दृष्टान्तेन उपादानोपादेयद्रव्यानन्यत्वकथनेन सर्वविज्ञानमुपपाद्य, असत्कार्यवादमुखेनोपादानोपादेयद्रव्यभेदवादिवैशेषिकमतं प्रतिक्षिप्य, ' सदेव सोम्येदमग्र आसीत् ' (छा० ६-२-१) इति कार्यकारणवाचिपदसामानाधिकरण्येन स्थूलचिदचिद्विशिष्टब्रह्मणः कार्यस्य

सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणः कारणस्य चानन्यत्वकथनेनोपादानत्वं प्रतिष्ठाप्य, 'तदैक्षत बहु स्यां' (छा० ६-२-३) इति सङ्कल्पमुखेन ब्रह्मण एव बहुभावं प्रजायेयेति समष्टिसृष्टिसङ्कल्पमुखेन निमित्तत्वञ्चोक्त्वा, 'तत्तेजोऽसृजत' (छा० ६-२-३) इत्यादिना समष्टिसृष्टिमुक्त्वा, तेजोबन्नानां देवादिव्यष्टिभूतोपादानत्वं 'तेषां खल्वेषां भूतानां त्रीणि त्रीणि बीजानि भवन्ति अण्डजं जीवजमुद्भिज्जं' (छा० ६-३-१) इत्यण्डजादिशब्दनिर्दिष्टव्यष्टिभूतानां तेजोबन्नानि त्रीणि बीजानि उपादानस्वरसबीजशब्देन त्रित्वावच्छिन्नोपादानत्वं त्रीण्येवेत्यवधारणेन प्रत्येकोपादानत्वनिषेधपूर्वकमुक्त्वा त्रयाणां तेजःप्रभृतीनां मिलितानां व्यष्टिभूतोपादानत्वे व्यष्टिभूतेषु पार्थिवत्वादिव्यवस्थानुपपत्तिं परिहर्तुं 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छा० ६-३-३) इति तेजोबन्नानामुपादानकारणानां त्रिवृत्करणमुच्यते। न सहकारिकारणसंसर्गः, तस्याप्रस्तुतत्वादनपेक्षितत्वाच्च, व्यवस्थास्थापनाय तेजःप्रभृत्युपादानानां त्रिवृत्करणरूपसंसर्गविशेषस्यापेक्षितत्वाच्च। समभागेन त्रिवृत्कृतौ व्यवस्थासिद्ध्यनुपपत्त्या विषमभागेन त्रिवत्करण एव श्रुतितात्पर्यावगत्या तत्र तत्र भूते तत्तदंशाधिक्ये श्रुतेरेव मूलत्वात्।

किञ्च शब्दस्पर्शरूपरसगन्धेषु केवलानामाकाशवायुतेजोजलपृथिवीनां क्रमेण शब्दाद्येकद्वित्रिचतुःपञ्चगुणकतया तदारब्धेषु भौतिकपदार्थेषु भूतान्तरगुणोपलब्ध्यनुरोधेन त्रिवृत्कृतानामुपादानत्वमास्थेयम्। व्यवस्थासिद्ध्यर्थमंशाधिक्यञ्च कल्प्यम्। नीलपीतरक्ततन्त्वाद्यारब्धपटादौ नीलाद्युपलब्धेः यावद्द्रव्यभाविन्याः नीलपीताद्युपादानत्वनिबन्धनत्ववत् इहापि तथात्वस्यैवोचितत्वात्। न चात्र अग्निसंसृष्टजलौष्ण्यवदुपपत्तिः। तद्वत्कादाचित्कत्वाभावात्। अग्निसंसर्गाद्यनुविधानाच्च औष्ण्योपलम्भस्य परम्परासम्बन्धावगाहित्वेऽप्यत्र तथात्वे कल्पकाभावात्। न च सुवर्णादौ यावद्द्रव्यसततमुपष्टम्भकपार्थिवरूपाद्युपलम्भवदत्रापि शब्दादिगुणपञ्चकयुक्तपृथिव्युपष्टम्भेन केवलाकाशाद्यारब्धेष्वपि भौतिकेषु शब्दादिगुणोपलम्भ इति न त्रिवृत्करणं सिध्यतीति वाच्यम्। सुवर्णकरकादौ पीतिमगुरुत्वादिना पार्थिवभागोपष्टम्भाभ्युपगमेऽपि प्रकृते पृथिव्युपष्टम्भस्यानुपलम्भबाधितत्वेन त्रिवत्करणस्यैव शब्दादिगुणोपलम्भनियामकत्वेनाङ्गीकार्यत्वात्। विशरणशीलेषु विशरणप्रतिबन्धाय सांसिद्धिकद्रवत्वेषु जलांशेषु स्यन्दनप्रतिबन्धाय च सुवर्णकरकादौ पार्थिवभागोपष्टम्भोपपत्तावपि अन्यत्र तेजःप्रभृतिषु तत्स्वीकारे

विशरणस्वभावत्वस्यन्दनस्वभावत्वभङ्गप्रसङ्गात्। अप्रामाणिकान्यादृशोपष्टम्भकल्पनापेक्षया श्रुत्या त्रिवत्करणाभ्युपगमेन शब्दादिगुणोपलम्भनिर्वाहस्यैव युक्तत्वात्।

किञ्च श्रुत्युक्तत्रिवृत्करणं पञ्चीकरणोपलक्षणम्। तत्प्रकारश्चेत्थम् व्यपदेशव्यवस्था च भूतांशाधिक्येनेत्युपबृंहितम्—

'एवं जातेषु भूतानि प्रत्येकं स्याद्द्विधा ततः।
चतुर्धा भिन्नमेकैकमर्धमर्धं तथा स्थितम्॥
व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम्।
अर्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम्॥'

इत्यादिना। तदेवं त्रिवृत्कृताकाशादिभूतारब्धाण्डान्तर्वर्तिभौतिकवस्तुष्वाकाशादिव्यपदेशव्यवस्था तावदाकाशभूतांशवैषम्यादित्येव युक्तम्।

तस्मात्परमात्मा भूतेन्द्रियादिसृष्टिं त्रिवृत्करणपूर्वकाण्डचतुर्मुखादिसृष्टिं [च] चेतनमद्वारीकृत्य करोति। तदुत्तरं चतुर्मुखसृष्टतया पुराणादिप्रमाणसिद्धवस्तुसृष्टिस्थले सृष्टयन्वयितत्तच्चेतनशरीरकः कारणावस्थसृज्यजातमनुप्रविश्य चतुर्मुखान्तर्यामी सृजति। तथा नवप्रजापतीन्द्रादिचेतनसृष्टतया प्रसिद्धस्थले सृष्टयन्वयितत्तच्चेतनशरीरकः कारणावस्थं सृज्यमनुप्रविश्य नवप्रजापतीन्द्राद्यन्तर्यामी सृजति। तथान्यत्र सर्वत्रापि गोवर्धनोद्धरणाद्यवतारकार्यस्थले भूतेन्द्रियादिसृष्टाविवाद्वारकं कर्तृत्वम्। तदिदमनुगृहीतम**धिकरणसारावल्यां वेदान्तदेशिकैः**—

'तत्तज्जीवान्तरात्मा सृजति च भगवांस्तादृशं कार्यजातम्'

इति। चकारात् चेतनमद्वारीकृत्यापि स्वयमेवावतारे कार्यविशेषं सृजतीति प्रतीयते। तस्मात्परमात्मा साक्षात्सर्वकारणं मुख्यं सर्वजगत्कारणम्; न तु भूतेन्द्रियादौ मुख्यं कारणं व्यष्टिसृष्टौ चतुर्मुखः कारणमिति (परमात्मेति?) सिद्धम्।

**इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**द्वितीयस्याध्यायस्य**
**चतुर्थः पादः॥**
**अधिकरणानि ८. सूत्राणि १९**
**॥ समाप्तश्च द्वितीयाध्यायः॥**

॥ श्रीरस्तु ॥

# ॥ अथ तृतीयोऽध्यायः ॥

## ॥ प्रथमः पादः ॥

### (१) ॥ तदन्तरप्रतिपत्त्यधिकरणम् ॥

**सू०॥ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

**सू०॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥**

**सू०॥ प्राणगतेश्च ॥ ३ ॥**

**सू०॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥**

**सू०॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥**

**सू०॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥**

**सू०॥ भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥**

पूर्वद्विकेन ब्रह्मकारणवादे साङ्ख्यादिपरोद्भावितस्मृतिन्यायविरोधपरिहार-साङ्ख्यादिपरपक्षप्रतिक्षेपवेदान्तवाक्यापातप्रतीतान्योन्यविरोधपरिहारसमेतायोगा-न्ययोगव्यवच्छेदकथनमुखेन कारणवाक्यानां समन्वयकथनेन सिद्धविषय-ब्रह्मरूपं चिन्तितम् । अथोत्तरद्विकेन वेदान्तवाक्यप्रतिपाद्यं साधनफलस्वरूपरूपं साध्यविषयं स्वरूपं चिन्त्यते । तत्र तृतीये साध्यसिद्धेस्साधनसापेक्षत्वेन साधनभूतब्रह्मोपासनविषयिणी चिन्ता प्रवर्तते । ततश्चतुर्थे तत्फलभूतपरि-पूर्णब्रह्मानुभव(रूप)विषयिणी चिन्तेति विभागः । तृतीयाध्याये चाद्यद्वितीययोः पादयोर्ब्रह्मोपासिसिषान्तरङ्गहेतुभूतप्राप्येतरवैतृष्ण्यप्राप्यतृष्णासिद्धये प्राप्येतरचेत-नस्य हेयत्वं प्राप्यभूतब्रह्मणो निर्दोषकल्याणगुणाकरत्वलक्षणोभयलिङ्गत्वञ्चोच्यते । तृतीयचरणे तु उपासनस्वरूपतद्भेदाभेदादि चिन्त्यते । चतुर्थे ब्रह्मोपासनाङ्गभूतं

यज्ञादिकर्म शमादि च चिन्त्यते। यत्किञ्चित्प्रतिबन्धकसत्त्वे साधकसहस्राणामप्यकिञ्चित्करत्वेन प्रतिबन्धकस्य प्रथममवश्यनिरसनीयतया प्राप्येतरतृष्णालक्षणोपासिसिषाप्रतिबन्धकनिवृत्तये चेतनस्य हेयत्वज्ञापनाय जाग्रत्स्वप्नसुषुप्त्याद्यवस्थासु चेतनस्वरूपं चिन्त्यते। चिदचिदीश्वरेषु त्रिषु तत्त्वेषु ईश्वरस्य प्राप्यकोटित्वेन अचेतनस्वरूपहेयत्वस्य सार्वजनीनत्वेन विषमिश्रमधुबिन्दुवदत्यल्पानन्दादिना चेतनस्वरूपस्याप्यत्वशङ्काङ्कुरशोषणाय तत्स्वरूपहेयत्वमेव ज्ञापनीयमिति तदेव प्रथमं चिन्त्यते। [तत्रापि] जाग्रदवस्थायां सुखादिगुणातिशयेन झटिति प्राप्यत्वशङ्कासंभावनया तदवस्थायां तत्स्वरूपं प्रथमं चिन्त्यते। देहयोगायत्तत्वेन चेतनहेयत्वस्य देहवियोगे सति अतिरोहितस्वरूपतया प्राप्यत्वं प्रसजत इति तदवस्थायां स्वरूपं शोध्यते।

देहं विसृज्य देहान्तरं गच्छंश्चेतनः किं भूतसूक्ष्मैरपरिष्वक्तो गच्छति किं वा परिष्वक्त इति संशये, कर्मानुगुणं गन्तव्यस्वर्गादितत्तल्लोकस्थितैः भूतसूक्ष्मैरेव भोगौपयिकदेहारम्भसम्भवेन गमनदशायां भूतपरिष्वङ्गे प्रमाणाभावात् 'वेत्थ यथा पञ्चम्यां' (छा० ५-३-३) इत्यादिपञ्चाग्निविद्यावाक्यगतप्रश्नप्रतिवचनयोरपामेव श्रवणेन केवलाद्भिर्देहारम्भासम्भवात् त्रिवृत्करणमर्यादया तदारम्भोपपत्तौ अप्शब्दनिर्देशोपपत्तयेऽंशभूयस्त्वस्याश्रयणीयतया तदारब्धास्मदादिदेहानामाप्यत्वेन पार्थिवत्वानुपपत्तेः 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छा० ५-४-२) इत्यत्र प्रथमाहुतावपां होम्यत्वाश्रवणेन प्रश्नप्रतिवचनयोर्विरूपतयान्यपरत्वस्यैवाश्रयणीयत्वात् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तम्' (बृ० ४-४-२) इत्याद्यनुशब्देन उत्क्रमणपौर्वापर्यावगत्या कालभेदेन निष्क्रान्तानां जीवप्राणेन्द्रियाणां सहगतौ प्रमाणाभावेन इन्द्रियगत्यर्थं भूतगत्यसिद्धेः 'यत्रास्य मृतस्य पुरुषस्याग्निं वागप्येति' (बृ० ३-२-१३) इत्यादिना वागादीन्द्रियाणामत्रैवाप्ययश्रवणेन गत्यनुपपत्तेः 'वेत्थ यथा' (छा० ५-३-३- इत्यादिप्रश्नतदुत्तरतदुपपादकतदुपसंहाररूपे अस्मिन् गमनवाक्ये क्वापि जीवप्रतीत्यभावेन भूतपरिष्वक्तजीवगमनकल्पनानवकाशात् व्यवहितोत्तरवाक्ये क्वचित् सोमराजशब्दस्य प्रापकप्रमाणबलेन कथञ्चिच्चेतनाभिधायित्वेऽपि प्रकृते प्रमाणाभावेन सोमराजशब्दस्य तथात्वायोगात्। 'तं देवा भक्षयन्ति' (छा० ५-१०-४) इति सोमराजशब्दोक्तस्य देवभक्ष्यत्वोक्त्या चेतनस्य तदसम्भवेन

तत्रापि तदसिद्ध्या प्रत्यभिज्ञानानवतारात् । अतो भूतसूक्ष्मापरिष्वक्त एव जीवो गच्छतीति तद्दशायामतिरोहितस्वरूपतया चेतनस्वरूपस्य प्राप्यतावकाश इति प्राप्ते—

तदपि नेति सिद्धान्त्यते । न हि वयं देहारम्भाय भूतसूक्ष्मपरिष्वङ्गं ब्रूमः ; येन गन्तव्यस्वर्गादिलोकस्थितभूतसूक्ष्मैरेव देहारम्भसम्भवं ब्रूयाः । किन्तु पञ्चाग्निविद्यावाक्यगतप्रश्नप्रतिवचनाभ्यां परिष्वङ्गं ब्रूमः । तथा हि—श्वेतकेतुमारुणेयं प्रति नाम्ना प्रवाहणः पाञ्चालो नृपतिः, 'वेत्थ यदितोऽधि प्रजाः प्रयन्ति' (छा० ५-३-२) इति इतोऽधि इत ऊर्ध्वं प्रयातानां कर्मिणां गन्तव्यदेशं, 'वेत्थ यथा पुनरावर्तन्ता' (छा० ५-३-२) इति पुनरावृत्तिप्रकारं, 'वेत्थ पथो देवयानस्य पितृयाणस्य च व्यावर्तना' (छा० ५-३-२) इति देवयानपितृयाणव्यावर्तकस्वरूपं, 'यथासौ लोको न सम्पूर्यता' (छा० ५-३-३) इत्यामुष्मिकस्याप्राप्तारञ्च पृष्ट्वा 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा० ५-३-३) इत्यपां पुरुषपदप्रतिपाद्यदेहावस्थाप्राप्तिप्रकारं पृष्टवान् । अत्र प्रश्ने पञ्चमाहुतिहुतानामपां पुरुषशब्दोक्तदेहाकारपरिणामभाक्त्वं प्रतीयते । तत्र 'पञ्चम्यामाहुतौ' (छा० ५-३-३) इत्युक्ते कस्य द्रव्यस्य पञ्चमाहुतावित्यपेक्षायामुपस्थितानामेवापां हूयमानतया सम्बन्धौचित्येन तासां पञ्चमाहुतावित्यवगतौ पूर्वाहुतिचतुष्टयेऽपि तासां होम्यत्वं सिध्यति । तथा प्रतिवचनेऽपि 'इति तु पञ्चम्यामाहुतौ' (छा० ५-९-१) इति पूर्वोक्तप्रकारवाचिनेतिशब्देन द्युलोकपर्जन्यपृथिवीपुरुषयोषिद्रूपेषु पञ्चस्वग्निषु देवशब्दोक्तेन्द्रियैः प्रक्षिप्तानामपां क्रमेण सोमराजवर्षान्नरेतोभावमुखेन योषिद्रूपाग्निप्रक्षेपेण गर्भभाव एव पुरुषपदाभिलप्यदेहपरिणाम इत्यवगम्यते । तदेवं प्रश्नोत्तराभ्यां जीवो भूतसूक्ष्मपरिष्वक्तो गच्छतीति सिद्धम् ।

ननु प्रश्नप्रतिवचनयोरपामेव श्रवणेन कथं देहारम्भकत्रिवृत्कृतभूतपरिष्वङ्गसिद्धिरिति चेन्न । अत एवारम्भकत्वश्रुत्युपपत्तये अप्शब्देन त्रिवृत्कृताभिधायकत्वस्वीकारेण तादृशभूतपरिष्वङ्गावगत्युपपत्तेः देहारम्भकत्रिवृत्कृतभूतेष्वबंशाधिक्येनाशोकवनिकान्यायेनाप्छब्देन व्यपदेशोपपत्तेः । न चैवं तदारब्धेष्वस्मदादिपुरुषशब्दाभिलप्यदेहेष्वाप्यत्वापात इति वाच्यम् । अबंशाधिकत्रिवृ-

त्कृतारब्धत्वनिबन्धनाप्यत्वस्य अस्मदादिदेहेष्विष्टत्वात् । तदभिप्रायेणैव भगवता भाष्यकृता 'देहे लोहितादिभूयस्त्वेन आरम्भकेष्वपां भूयस्त्वं गम्यते' इत्यनुगृहीतम् । पार्थिवत्वव्यवहारोऽस्मदादिदेहेष्वस्ति चेत् भूयोभिः पार्थिवैरन्नसूपघृतव्यञ्जनैराप्यायितत्वनिबन्धनो गौण इत्यदोषात् ।

ननु 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छा० ५-४-२) इति प्रथमाहुतौ मनोवृत्तिविशेषश्रद्धाया एव होम्यत्वावगतेरपां पञ्चस्वपि होम्यत्वमसिद्धमिति चेन्न । 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा० ५-३-३) इति प्रश्नस्य प्रतिवचनोपक्रमे श्रुतश्रद्धाशब्देनापामनभिधाने प्रतिवचनत्वानुपपत्तेः । 'इति तु पञ्चम्यामाहुतावापः' (छा० ५-९-१) इत्याहुतिपञ्चकेष्वपि अपां होम्यत्वेन प्रतिवचननिगमनानुपपत्तेः । 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेस्सोमो राजा भवति' (छा० ५-४-२) इति श्रुतसोमाकारामृतमयदेहाख्यपरिणामस्य मनोवृत्तिविशेषेऽनुपपत्त्या 'श्रद्धा वा आपः' (अष्ट० २-४-३३) इत्यप्सु वैदिकप्रयोगानुसाराच्चापामेव श्रद्धाशब्दाभिधानार्हत्वात् प्रथमे होमेऽपामश्रवणदोषानवकाशात् । अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात् ।

किञ्च 'तमुत्क्रामन्तं' (बृ० ४-४-२) इत्यादिश्रुत्या प्राणशब्दाभिहितप्राणवाय्विन्द्रियाणां गच्छता जीवेन सह गतिश्रवणेन तेषाञ्च निराश्रयाणां गत्यसम्भवेन भूताश्रयाणां जीवेन सह गत्यवश्यम्भावात् सेन्द्रियभूतसूक्ष्मसम्परिष्वक्तो जीवो गच्छतीत्यवश्यमभ्युपेत्यम् । न च तेषां स्वतो गमनं कुतो न स्यात् । अणुपरिमाणतया गमनक्रियासम्भवादिति वाच्यम् । 'गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' (गीता० १५-८) इति गन्धदृष्टान्तेन तेषामाश्रयं विना स्थितिगत्यनुपपत्तिप्रतीत्या 'प्रकृतिस्थानि कर्षति' (गीता० १५-७) इति शब्दितस्वाश्रयभूतस्थित्या सहैव कर्षणावगत्या च दीपप्रभावदाश्रयाधीनस्थितिगत्यादिस्वभावतया निराश्रयगत्यनुपपत्तेः 'गृहीत्वैतानि संयाति' (गीता० १५-८) 'प्रकृतिस्थानि कर्षति' (गीता० १५-७) इति वचनाभ्यां, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ० ४-४-२) इत्यादिवर्तमानार्थकप्रत्ययेन चानुशब्दस्यानुकूल्यं देशपौर्वापर्यं वार्थ इति गतिकालपौर्वापर्यासिद्धेः । न च

'अग्निं वागप्येति' (बृ० ३-२-१३) इत्यादिना इन्द्रियाणामत्रैवाप्ययश्रवणात् न सहगतिसम्भव इति वाच्यम्। वैकारिकाणामिन्द्रियाणां स्वानुपादानाग्न्यादिष्वप्ययायोगेन 'ओषधीर्लोमानि वनस्पतीन्केशा' (बृ० ३-२-१३) इत्यनपियद्भिर्लोमादिभिस्सह पाठेन चाप्ययश्रुतेरभिमानिदेवतापक्रमणपरत्वेन भाक्तत्वात्।

ननु तथाप्यस्मिन्वाक्ये 'वेत्थ यथा पञ्चम्यां' (छा० ५-३-३) इत्यादिप्रश्नप्रतिवचनात्मके जीवप्रत्यायकशब्दाभावेन कथमत्र भूतसूक्ष्मपरिष्वक्तस्य जीवस्य गमनसिद्धिरिति चेन्न। अस्मिन्प्रश्नप्रतिवचनपरम्परात्मके पञ्चाग्निविद्यावाक्ये तावदुत्तरत्र पितृयाणपथव्यावर्तकप्रश्नोत्तरवाक्यभागे 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड् दक्षिणैति मासान् नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा' (छा० ५-१०-३) इत्यत्र कर्मिणां गन्तव्यदेशप्रश्नोत्तरे एष इति प्रागारं जीवं परामृश्य एष जीवः सोमो राजा सोमराजाख्यदिव्यदेहविशिष्टो भवति 'तस्या आहुतेस्सोमो राजा सम्भवति' (छा० ५-४-२) इति वाक्यानुसारात्। न च 'तद्देवानामन्नं तं देवा भक्षयन्ति' (छा० ५-१०-४) इति सोमराजशब्दोक्तस्य देवभक्ष्यत्ववचनाच्चेतनप्रतीत्यसम्भव इति वाच्यम्। 'अथ य इमे ग्राम' (छा० ५-१०-३) इत्युपक्रमप्राप्तचेतनप्रतीत्यनुसारेणानन्तरश्रुतान्नत्वभक्ष्यत्ववादस्य आजानसिद्धदेवकिङ्करतया भाक्तत्वावश्यंभावात्। कर्मिणामिह लोके देवानामाराधकत्वेनोपकरणत्वम्। आमुष्मिके कर्मरूपाराधनप्रीतदेवैर्दत्तममुं लोकं प्राप्य तत्र तत्समानभोगानां तदुपकरणत्वमिति 'यथा पशुरेवं स देवानां' (बृ० १-४-१०) इत्यनात्मविदां देवोपकरणत्वश्रुतेः। ततश्चान्नत्वेन भक्ष्यत्ववचनस्य भाक्ततया तत्र सोमराजशब्दस्य तच्छरीरविशिष्टजीववाचित्वेन श्रद्धाहोमवाक्येऽपि तत्प्रत्यभिज्ञानेन 'तस्या आहुतेस्सोमो राजा सम्भवति' (छा० ५-४-२) इत्युक्तसोमराजाख्यदेहपरिमाणस्य 'अनेन जीवेनात्मनानुप्रविश्य' (छा० ६-३-२) इति सिद्धजीवानुप्रवेशसापेक्षत्वेन 'कर्मभिर्देवो जायत' इत्यादिवत् सोमराजशरीरविशिष्टो भवतीति सोमराजशब्दस्य तच्छरीरकजीववाचित्वावश्यम्भावेन जीवप्रत्यायकशब्दाभावशङ्कानवकाशात् पञ्चमप्रश्नप्रतिवचने द्युलोकपर्जन्यपृथिवीपुरुषयोषित्सु देवशब्दार्थे-

न्द्रियैरुत्पाद्यमानानां भूतसूक्ष्माणां क्रमेण श्रद्धासोमवृष्ट्यन्नरेतोभावयोषिद्योनिप्रवेशायत्तगर्भभावमांसासृङ्मूत्रपुरीषपूयपूरितातिहेयमातृकुक्षिनिवासजरायुलब्धनिर्बन्धमातृभक्षितरूक्षवस्तुसंसर्गकृतक्लेशयोनिद्वारसङ्कटनिर्गमनदुःखादिपूर्वकं घटीयन्त्रकुण्डिकान्यायेन पुनःपुनर्भ्रमणोपन्यासस्य कर्मिणां वैराग्योपजननार्थतया केवलाचेतनविषयत्वे स्वारस्यानुपपत्त्या चेतनविषयप्रश्नोत्तरसहपाठेन प्रायदर्शनन्यायेन च चेतनविषयत्वावश्यम्भावेन सोमराजशब्दस्य श्रद्धाशब्दस्य च विशिष्टजीवपर्यन्ताभिधायित्वेनात्र चेतनप्रत्यायकशब्दाभावशङ्कानवकाशाच्च ।

तस्मात्पञ्चाग्निविद्यागतप्रश्नप्रतिवचनाभ्यां प्राणशब्दप्रतिपन्नेन्द्रियादिगतेश्च भूतसूक्ष्मसम्परिष्वक्तो जीवो देहान्तरं गच्छतीति तद्दशायामपि तिरोहितस्वरूपतया न प्राप्यत्वप्रसक्तिरिति निर्धारितम् ।

॥ इति तदन्तरप्रतिपत्त्यधिकरणम् ॥

---

## (२) ॥ अथ कृतात्ययाधिकरणम् ॥

**सू०॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ॥ ८ ॥**

**सू०॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥**

**सू०॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥**

**सू०॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥**

प्रसङ्गात्प्रत्यवरोहतः प्रत्यगात्मनो धर्मविशेषश्चिन्त्यते ।

'कृतात्ययेऽनुशयवान्' इत्यत्र—'अथैतमेवाध्वानं पुनर्निवर्तन्ते' (छा० ५-१०-३) इति श्रूयमाणः प्रत्यवरोहन् जीवः किमनुशयवान् प्रत्यवरोहति उत निश्शेषभुक्तकर्मेति विशये 'यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' (छा० ५-१०-३) इति संपात्यतेऽनेन सुखादाविति सम्पातः कर्म । यावच्छब्द-

स्साकल्यवचनः । 'यावत्तावच्च साकल्ये' इति नैघण्टुकोक्तेः । साकल्यञ्च फलदानप्रवर्तककर्मविषयम् । स्वस्वप्रारब्धं सकलं कर्म भोक्तुमुषित्वा स्वर्गादिलोके स्थित्वा भुक्त्वेति यावत् । तथा च 'यावत्सम्पातमुषित्वा' इति वचनात्,

'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे ॥' (बृ० ४-४-६)

इति वचनान्तराच्च निरवशेषकर्मभोगप्रतीतेर्न सावशेषकर्मा प्रत्यवरोहति । न च 'रमणीयचरणा रमणीयां योनिमापद्येरन्' (छा० ५-१०-७) इति श्रुत्या ब्राह्मणादिशरीरप्राप्तिहेतुकर्मशेषोऽवगम्यत इति वाच्यम् । चरणशब्दस्य सन्ध्यावन्दनाद्याचारार्थकतया पुण्यादिकर्मवाचित्वाभावेन ततः कर्मावशेषत्वासिद्धेः । अत एव 'यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । यान्यस्माकं सुचरितानि' (तै० १-११) इति पृथङ्निर्देश उपपद्यते । तस्मान्निरवशेषकर्मा प्रत्यवरोहतीति पूर्वपक्षं प्रापय्य—

'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्' 'अथ कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्' (छा० ५-१०-७) इति श्रुत्या, 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य ततः कर्मफलमनुभूय ततश्शेषेण विशिष्टदेहजातिकुलरूपे' (गौतम० २-११-१२, १३) इत्यादिस्मृत्या च रमणीयचरणकपूयचरणशब्दयो रमणीयकपूययोनिहेत्वभिधायकतया सन्ध्यावन्दनाद्याचारस्य कर्मानुष्ठानयोग्यतापादकस्य रमणीयशरीरप्राप्त्यादिफलहेतुत्वायोगेन फलसाधनसुकृतदुष्कृतकर्मपरत्वावश्यम्भावेन कर्मशेषसद्भावस्य दुर्वारत्वात् । न च 'यावत्सम्पातमुषित्वा' (छा० ५-१०-३) इत्यादिवचनविरोधः । स्वर्गादिलोकविशेषानुभाव्यफलदानप्रवृत्तकर्मसाकल्यार्थकतया तस्य विरोधाभावात् । न च सङ्कोचो दोषः, प्रामाणिकस्य सङ्कोचस्यादोषत्वात् । न चात्र प्रमाणाभावः । 'रमणीयचरणा रमणीयां योनिं' (छा० ५-१०-७) इत्यादिश्रुतेः 'ततश्शेषेण विशिष्टदेहजातिकुलरूपे' (गौतम० २-११-१२) इत्यादिस्मृतेश्च तत्सङ्कोचे प्रमाणत्वात् । न चैवमाचारे चरणमाचारःशीलं वृत्तं इति 'यान्यस्माकं सुचरितानि' [इति च] लोकवेदप्रसिद्धचरणादिशब्दस्य चरतिधातुनिष्पन्नस्य कर्मणि

लक्षणा दोष इति चरणाच्छीलाद्योनिप्राप्तिरिति युक्तमिति वाच्यम् । सुखदुःखयोः पुण्यपापरूपकर्मफलतया केवलाचारात्सुखादिप्राप्त्यसम्भवेन योन्यादिप्राप्त्यनुपपत्त्या 'गङ्गायां घोष' इत्यादाविव लक्षणायाः प्रामाणिकत्वेनादोषत्वात् । 'पुण्यं कर्माचरति पापं कर्माचरति' इत्यादौ कर्मानुष्ठानेऽपि चरतेः प्रयोगात् चर्यतेऽनुष्ठीयते इदं सुकृतदुष्कृतमिति कर्मणि व्युत्पत्त्या मुख्यावयवशक्तिरूपया योगवृत्त्यैव चरणशब्देन सुकृतदुष्कृताभिधानसम्भवेन लक्षणाप्रसङ्गाभावाच्च । न च तर्हि स्मृतिविहितस्याचारस्याफलतया आनर्थक्यं स्यादिति वाच्यम् ।

'आचारहीनं न पुनन्ति वेदाः ।
सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु'

इत्यादिवचनेन सर्वेषामपि कर्मणामाचारसापेक्षत्वेन आचारस्य कर्मानुष्ठानार्थतया आनर्थक्याभावात् ।

तस्मात् 'रमणीयां योनिमापद्येरन्' (छा० ५-१०-७) इत्यादिश्रुतेः 'वर्णा आश्रमा' (गौतम० २-११-१२) इत्यादिस्मृतेश्चानुशयवान् प्रत्यवरोहति । सौत्रेणानुशयशब्देनामुष्मिकस्वर्गलोकानुभाव्यफलदानप्रवृत्तभुक्तफलकर्मव्यतिरिक्तमैहिकलोकानुभाव्यफलसाधनभूतकर्मजातमुच्यते न तु स्वर्गार्थकर्मैकदेशभूतमैहिकफलसाधनं कर्म । तस्यैहिकफलस्यापि ज्योतिष्टोमसाध्यत्वे 'ज्योतिष्टोमेन स्वर्गकाम' इति स्वर्गस्य कामश्रुतिप्रतिपन्ननिरपेक्षसाध्यत्वभङ्गप्रसङ्गात् । पूर्वतन्त्रे 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादौ शास्त्रस्य बहुविषयत्वलिप्सया विश्वजिन्न्यायेन स्वर्गस्यापि फलत्वकल्पने कामश्रुतिप्रतिपन्नस्य ब्रह्मवर्चसगतनिरपेक्षसाध्यत्वस्य बाधापत्त्या न स्वर्गार्थत्वमिति निर्धारितत्वात् । तस्माज्जीवस्य आमोक्षं कर्मसम्बन्धोऽवर्जनीय इति सिद्धान्तितम् ।

॥ **इति कृतात्ययाधिकरणम्** ॥

---

## (३) ॥ अथानिष्टादिकार्यधिकरणम् ॥

**सू० ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥**

**सू०॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥**

**सू० ॥ स्मरन्ति च ॥ १४ ॥**

**सू०॥ अपि सप्त ॥ १५ ॥**

**सू०॥ तत्रापि तद्व्यापारादविरोधः ॥ १६ ॥**

**सू० ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥**

**सू०॥ न तृतीये तथोपलब्धेः ॥ १८ ॥**

**सू०॥ स्मर्यतेऽपि च लोके ॥ १९ ॥**

**सू०॥ दर्शनाच्च ॥ २० ॥**

**सू०॥ तृतीयशब्दावरोधस्संशोकजस्य ॥ २१ ॥**

'तदन्तरप्रतिपत्तौ' (ब्र० सू० ३-१-१) इत्यत्र जीवस्यामोक्षं प्रकृतिसम्बन्धस्यावर्जनीयत्वमुक्तम्। 'कृतात्ययेऽनुशयवान्' (ब्र० सू० ३-१-९) इत्यत्र तद्धेतुभूतकर्मसम्बन्धस्यावर्जनीयत्वं चिन्तितम्। इदानीमनिष्टादिकारिणामित्यत्र कर्मसम्बन्धेऽपि साधुकर्मसम्बन्धनियमो नास्तीत्युच्यते।

'अनिष्टादिकारिणामपि च श्रुत' मित्यत्र—ये निषिद्धं कर्मानुतिष्ठन्ति ये च विहितं नानुतिष्ठन्ति ते द्वयेऽपीष्टादिकारिभ्यो भिन्ना अनिष्टादिकारिणः। तेषां चन्द्रप्राप्तिरस्ति न वेति संशये 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौषी० १-२) इत्यविशेषेण लोकान्तरं गच्छतां चन्द्रगमनश्रुतेः 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा० ५-९-१) इति श्रुत्या पञ्चमाहुतेः पुरुषरूपदेहपरिणामहेतुत्वसिद्ध्या तस्य चन्द्रप्राप्तिसापेक्षत्वेन देहारम्भाय च तेषामपि चन्द्रप्राप्तिरस्त्येव। न चैवं पुण्यपापयोर्द्वयोरपि तुल्यफलत्वे बहुवित्तव्ययायाससाध्यसुकृतस्य वैयर्थ्यं स्यात् पापस्य नैष्फल्यञ्च स्यात्। द्युलोकप्राप्त्यादेस्सुकृतफलत्वात् पापिनां देहारम्भहेतुपञ्चमाहुत्यार्थ(वचसम्पन्नत्वेन)द्युलोकप्राप्त्यादेर्नान्तरीयकश्रमवत्पापफलत्वासम्भवात् ? पापानां

नरकाद्यफलकत्वे प्रायश्चित्तविधिवैयर्थ्यञ्च स्यादिति वाच्यम्। यमाज्ञया तत्तत्पापानुगुणरौरवादिपापफलानुभवानन्तरं पापिनां चन्द्रारोहावरोहाभ्युपगमेन तुल्यफलत्वादिशङ्कानवकाशात्। न च पापिनां यमाज्ञाधीनतायां [नरकादिफलकत्वे च] मानाभाव इति शङ्क्यम्। 'अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे।' (कठ० २-६) 'वैवस्वतं सङ्गमनं जनानां यमं राजानं' इत्यादि(ना) यमवश्यत्व[श्रुतेः] (श्रुत्या) [तस्य] तदाज्ञाप्रयुक्तयातनानुभवप-(र्याय)[र्यन्त]स्य तत्राभिप्रेतत्वात्। कारणोक्तेः कार्यपर्यन्ततायामेवार्थवत्वादन्यथा कारणोक्तिवैयर्थ्यात्। 'न तस्य यमवश्यता नरकपातभीतिः कुतः' (अभीतिस्तव०) इति व्यतिरेकोक्त्या यमवश्यताया नरकपातशब्दोक्तदुःखानुभवहेतुत्वप्रतीतेः। सप्तस्वपि रौरवादिस्थानेषु पापिनां गमनेऽपि तेष्वपि तद्व्यापारस्य यमशासनात्मकस्य कार्यकारित्वात् सर्वत्र यमाज्ञाप्रयुक्तयातनानुभवाविरोधात्, चन्द्रप्राप्तेः 'ते सर्वे' (कौ० १-२) इति सर्वश्रुत्या असङ्कोचप्राप्ताया अपरित्याज्यत्वात्।

न च तथापि 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते' (छा० ५-१०-८) इति तृतीयस्थानशब्दोक्ततच्छब्दपरामृष्टपापिनो द्युलोकस्याप्राप्यत्वप्रतिपादनेन पापिनो देहारम्भे पञ्चमाहुत्यनपेक्षावगमेन न तदर्थं पापिनश्चन्द्रप्राप्तिस्सिध्यतीति वाच्यम्। 'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते' (छा० ५-१०-८) इति पापकर्मणां न द्युलोकाप्राप्तिरुच्यते, किन्तु केषाञ्चित्क्रिमिकीटादीनामतिपापिनामुक्तरीत्या यातनानुभवोत्तरं द्युलोकं गतानां तदा तदा झटित्येव जननमरणभाक्तया द्युलोकारोहावरोहशालित्वेन नित्यं बहूनां जन्तूनां द्युलोकगमनेऽपि तैस्सम्बाधरूपसम्पूर्तिर्नास्तीत्यपूर्तिरुच्यते। 'वेत्थ यथासौ लोको न संपूर्यता' इति प्रश्नप्रतिवचनस्वारस्यात्। तस्मात् द्युलोकासम्पूरणवचनस्य पापिनां देहारम्भे पञ्चमाहुत्यनपेक्षत्वानवगमकतया पुरुषत्वनिष्पत्तेः पञ्चमाहुतिसापेक्षत्वेन 'य इमे ग्रामे' (छा० ५-१०-३) इत्युपक्रमस्य इष्टादिकारिविषयत्वानवगमकतया पितृयाणस्य सर्वसाधारणत्वादनिष्टादिकारिणामपि प्राप्तत्वात्, 'सर्वे गच्छन्ति' इति सर्वशब्दस्य प्रेतमात्रविषयतया 'ये वै के च' (कौषी० १-२) इत्यादिवाक्येन

सर्वेषां चन्द्रप्राप्त्यवगमेनानिष्टादिकारिणोऽपि यातनानुभवानन्तरं चन्द्रमसं गत्वा निवर्तन्त इति पूर्वः पक्षः ।

राद्धान्तस्तु—पापकर्मणां न चन्द्रप्राप्तिस्सम्भवति । देवयानपितृयाण-साध्यत्वाच्चन्द्रप्राप्तेस्तयोश्च विद्याकर्मफलभोगार्थतया विद्याकर्मवतामेव तदु-पपत्तेः तद्विधुराणां पापकर्मणां देवयानवैधुर्यवत्पितृयाणस्याप्यभावात् । देव-यानपितृयाणसाध्यत्वञ्च चन्द्रप्राप्तेः 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य-माणपक्षं' (छा० ५-१०-१) इत्यारभ्य 'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं' (छा० ५-१०-२) [इति] 'ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपर-पक्षं' (छा० ५-१०-३) इत्यारभ्य 'पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा' (छा० ५-१०-४) इति [च] वाक्यादवगम्यते । देवयानपितृ-याणयोर्विद्याकर्मफलभोगार्थत्वात् । विद्याकर्मफलत्वञ्च देवयाने विद्यायास्सन्निहि-तत्वात् पितृयाणे पुण्यकर्मणस्सन्निहितत्वाच्चावगम्यते । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' (छा० ५-१०-१) इत्यादिनार्चिरादिविधानात् देवयाने विद्या सन्निहिता । 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' (छा० ५-१०-३) इत्यादिना धूमादिविधानात् पितृयाणे इष्टापूर्तादिपुण्यकर्म सन्निहितम् । अतो विद्याकर्म-फलभूता चन्द्रप्राप्तिर्विद्याकर्मविधुराणामनिष्टादिकारिणां न सम्भवति ।

न च 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति'-(कौषी० १-२) इत्यविशेषेण चन्द्रप्राप्तिवचनानुसारेण विद्याकर्मनिष्ठविषयार्चि-रादिवाक्यमुपलक्षणं नेयमिति युक्तम् । सामान्यवाक्यस्यैव विशेषविषयतया 'छागो वा मन्त्रवर्णात्' (मी० सू० ६-८-३१) इति न्यायसिद्धतया ये वैके चेष्टादिकारिणोऽस्माल्लोकात्प्रयान्ति ते सर्वे चन्द्रमसं गच्छन्तीत्येव नयनौचि-त्यात् इष्टादिकारिणामेव चन्द्रमःप्राप्तेः प्राप्तचानिष्टादिकारिणां प्रापकप्रमाणाभावेन चन्द्रप्राप्तिर्न युज्यते ।

ननु पापकर्मणां चन्द्रगमनाभावे पञ्चमाहुत्यसम्भवात् शरीरारम्भ एव नोपपद्येत । 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा० ५-९-१) इति पञ्चम्या आहुतेः देहपरिणामहेतुत्वश्रवणात् तस्याश्चाहुतेश्चन्द्रप्राप्तिपूर्व-

कत्वस्य 'आकाशाचन्द्रमसमेष सोमो राजा' (छा० ५-१०-४) इति वचनेन प्रतीयमानत्वात् । अतः पापकर्मणां शरीरारम्भाय तेषामपि चन्द्रारोहावरोहाव-भ्युपेत्याविति चेत्; तृतीये (तृतीयस्थाने) विद्याकर्मफलानुभवाश्रयविद्यावत्सु-कृतिजीवद्वयापेक्षया पापफलानुभवाश्रयतया तृतीयस्थाने पापकर्मणि देहारम्भाय न पञ्चमाहुत्यपेक्षेति न तदर्थं पापकर्मणश्चन्द्रप्राप्तिरभ्युपेया। 'वेत्थ यथासौ लोको न सम्पूर्यता' (छा० ५-१-३) इति तृतीयप्रश्नप्रतिवचने 'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रिय-स्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यता' (छा० ५-१०-८) इत्यत्र 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इत्यत्र तच्छब्देन दध्यानयन-वाक्ये प्रधानप्रस्तुतपयसः परामर्शवत् 'षड्विंशतिरस्य वङ्क्रयः ता अनुष्ठायोच्चावय-तात्' इत्यत्र तच्छब्देन स्त्रीलिङ्गद्वितीयाबहुवचनान्तेन प्रधानभूतवङ्क्रीणां परामर्शवच्च भूतानीति प्रथमानिर्दिष्टप्रधानभूतभूतशब्दार्थपापकर्मणः तृतीयस्था-नस्य तेनेति परामृश्य 'असौ लोको न सम्पूर्यते न प्राप्यत' इति पापकर्मणां द्युलोकगमनाभाववचनेन चन्द्रप्राप्तिपूर्वकपञ्चमाहुतिनैरपेक्ष्यस्य तेषां शरीरारम्भे प्रतीयमानत्वात् ।

न च प्रश्नप्रतिवचनयोस्सम्पूर्यत इति पदस्वारस्यान्निबिडीकाराभाव एवो-च्यते। न तु गमनाभावः। पापकर्मणां यातनानुभवानन्तरारम्भकर्मफलदेहा-रम्भाय पञ्चमाहुतिसम्पत्तये तेषां द्युलोकगमनचन्द्रप्राप्तिस्वीकारेण झटित्येव देहप्राप्तये पुनरवरोहस्वीकारेण पुण्यकर्मणामिव तत्र लोके चिरकालावस्थाना-भावेन तैर्निबिडीकाराभावोपपत्तिरिति वाच्यम्। 'अथैतयोः पथोर्न कतरेण' (छा० ५-१०-८) इति देवयानादिमार्गद्वयमध्ये केनापि न गच्छन्तीति कण्ठतः पापिनां द्युलोकगमनाभावप्रतिपादनेन न सम्पूर्यत इत्यत्र प्राप्त्यभावार्थ-कत्वस्यैवोचितत्वात् । तेन च पञ्चमाहुत्यनपेक्षावगमात् ।

न च पञ्चमाहुतौ 'आपः पुरुषवचसः' (छा० ५-९-१) इति कथमु-पपद्यत इति वाच्यम्। व्रीहिभिर्यजेतेत्यत्रेवायोगव्यवच्छेदेन हेतुत्वप्रतिपादनो-पपत्तेः। कार्याव्यवहितपूर्वक्षणावच्छेदेन सकलकार्याधिकरणवृत्त्यभावाप्रतियोगित्वे सत्यनन्यथासिद्धत्वस्य कारणत्वरूपतया तस्य च कार्यपूर्वं कतिपयकार्याधिकरण-

वृत्तिषु व्रीहिपञ्चमाहुत्यादिषु अयोगव्यवच्छेदिष्वपि सम्भवात् । कतिपयघटादि-कार्यपूर्ववृत्तिरासभादीनां अनन्यथासिद्धत्वविशेषणेनैव घटादिकारणत्वनिरासात् । लोके केषाञ्चि(त्पूर्व) [पुण्य] कर्मणां द्रौपदीधृष्टद्युम्नप्रभृतीनां देहारम्भे पञ्चमाहुत्यन-पेक्षणदर्शनात्, वेदेऽपि 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्जं' (छा० ६-३-१) इत्युक्तोद्भिज्जपदसङ्गृहीतसंशोकजकीटादिशरी-रारम्भे पञ्चमाहुत्यनपेक्षणदर्शनाच्च, अत्रावधारणश्रवणाच्चान्ययोगव्यवच्छेदक-ल्पनानुपपत्तेः ।

तस्मात् द्युलोकासम्पूरणवचनस्य पापकर्मणां देहारम्भे पञ्चमाहुत्यनपेक्षा-वगमकतया नैरपेक्ष्येण 'अथ य इमे ग्रामे' (छा० ५-१०-३) इत्युपक्रमस्य इष्टादिकारिमात्रविषयतया सन्निधानात्पितृयाणमार्गस्य तद्विषयत्वेन तत्साध्य-चन्द्रप्राप्तिरपि तद्विषयैवेति । 'ये वै के चास्माल्लोकात्प्रयन्ति' (कौषी० १-२) इत्यस्येष्टादिकारिणस्ते सर्वे चन्द्रमसं गच्छन्तीत्यर्थकतया प्रापकप्रमाणाभावान्ना-निष्टादिकारिणां चन्द्रप्राप्तिरिति फलितम् [इति] ।

॥ इत्यनिष्टादिकार्यधिकरणम् ॥

---

## (४) ॥ अथ तत्स्वाभाव्यापत्त्यधिकरणम् ॥

## सू०॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

एवं पुण्यकर्माणो भूतसूक्ष्मसम्परिष्वक्ताः पितृयाणेन धूमरात्र्यपरपक्ष-दक्षिणायनषण्मासपितृलोकाकाशान्तक्रमेणामुं लोकं गताः पुण्यफलानुभवान्ते सानुशयाश्चन्द्रमसः स्थानात् आकाशमभिसम्भवन्तीत्याकाशस्यारोहणावरोहणयो-स्तुल्यत्वात् 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' (छा० ५-१०-५) इति वचनात् वायुमारभ्यानेवञ्चावरोहन्तीत्युक्तम् ।

तत्रावरोहतोऽस्याकाशादिप्रतिपत्तौ किमाकाशादिभावादेव मनुष्यादिभाव-वत्तच्छरीरिभावः? किं वा आकाशादिसादृश्यापत्तिरिति विशये श्रद्धावस्थस्य

सोमराजभाववदविशेषात् आकाशादिभावोऽप्याकाशादिशरीरिभाव एव। सोम-राजभावपुरुषभावयोराद्यन्तयोश्शरीरशरीरिभावापत्तिदर्शनेनाग्रचप्रायन्यायेन आकाशादिप्राप्तावपि तथाभावस्यैव निर्णयात्। 'सोमो राजा सम्भवति' (छा० ५-४-२) 'गर्भस्सम्भवति' (छा० ५-४-८) इतिवदविशेषेण 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति' (छा० ५-१०-५) इत्याख्यार्थतौल्याद्भवतेरुत्पत्त्यर्थकतया चेतनोत्पत्तेश्शरीरपरिग्रहरूपतया आकाशादिभावस्यापि तथारूपत्वस्यैव प्राप्तत्वादिति प्राप्तय्य—

द्युलोके पुण्यकर्मपरतया स्वर्गादिसुखानुभवयोग्यसोमराजाख्यामृतमयदिव्यदेहप्राप्तिसम्भवेऽप्यत्र लोके मनुष्यादिशरीरप्रापकभुक्तशिष्टकर्मफलतया मनुष्यादिशरीरप्राप्तिसम्भवेऽपि सर्गादिकालक्लृप्ततत्तदभिमानिदेवताधिष्ठिताकाशादिशरीरप्रापकस्य भुक्तभोक्ष्यमाणकर्मातिरिक्तकर्मणस्सद्भावेन आकाशादिशरीरप्राप्त्यसम्भवेन आकाशादिभावस्तत्स्वाभाव्यापत्तिः तत्सादृश्यापत्तिः आकाशादिसादृश्यापत्तिः चन्द्रमण्डले सोमराजाख्यदेहारम्भकाणामपां कर्मक्षये द्रवीभूतानामाकाशगतानां भेदकाकारप्रहाणेन आकाशात्पृथङ्निर्देशानर्हाकाशादिसंसर्गविशेषरूपैव। तासामपां तथाविधसादृश्यापत्तौ तत्संश्लिष्टचेतनानामपि आकाशसाम्यं भवतीति आकाशादिभावस्तत्संसर्गविशेषरूपतत्सादृश्यात्मकतत्स्वाभाव्यापत्तिरिति 'तत्स्वाभाव्यापत्तिरुपपत्तेः' इत्यत्र निरणायि।

**॥ इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥**

---

## (५) ॥ अथ नातिचिराधिकरणम् ॥

## सू०॥ नातिचिरेण विशेषात् ॥ २३ ॥

आकाशादिभावे विचारिते तस्य प्रसङ्गादचिरावस्थानमुच्यते।

'नातिचिरेण विशेषा' दित्यत्र—आकाशादिभावप्रभृति वर्षभावावधि किं नातिचिरं तिष्ठन्ति किं वा नातिचिरं चिरं वेत्यनियम इति सन्दिह्य नातिचिरमेव तिष्ठन्तीत्यत्र नियमग्राहकप्रमाणाभावादाकाशादिसंश्लेषस्य मार्गगतिसम्पन्न-

तया तत्र तत्र आकाशादाववस्थानस्यावस्थातुरिच्छाधीनतया यथेच्छं चिरमचिरं वा तिष्ठन्तीत्यनियम इति प्राप्य—

'इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते ततो वै खलु दुर्निष्प्रपतरं' (छा० ५-१०-६) इति पूर्वत्राकाशादावनुक्तस्य अतो वै खल्वित्यतश्शब्देन सन्निहितव्रीह्यादीन्परामृश्य ततो दुर्निष्प्रपततरस्यातिशयितदुःखनिष्क्रमणस्योक्ततया तस्य चिरकालावस्थानायत्ततया व्रीह्यादिषु चिरकालावस्थानावगत्या आकाशादावचिरावस्थानं गम्यते । खलन्ताद्दुर्निष्प्रपतशब्दादातिशायनिके तरप्प्रत्यये सति छान्दसे तशब्दलोपे च सति दुर्निष्प्रपतरमिति रूपे ततश्चातिशयितदुःखनिष्क्रमणप्रतिपादनेऽतिशयस्य प्रतियोग्याकांक्षायां पूर्वानुक्रान्ताकाशादीनामेव सन्निहिततया प्रतियोगित्वेनान्वये सत्याकाशाद्यपेक्षया व्रीह्यादिषु चिरकालावस्थानावगत्या व्रीह्याद्यपेक्षया आकाशादिष्वल्पकालावस्थानावगत्यवसानात् दुर्निष्प्रपतरमिति विशेषकप्रमाणसद्भावादाकाशादिष्वचिरावस्थानमवरोहतामिति सिद्धान्तितम् ।

॥ इति नातिचिराधिकरणम् ॥

---

## (६) ॥ अथान्याधिष्ठिताधिकरणम् ॥

### सू०॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

### सू०॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

### सू०॥ रेतस्सिग्योगोऽथ ॥ २६ ॥

### सू०॥ योनेश्शरीरम् ॥ २७ ॥

अवरोहतां जीवानामाकाशभावे सप्रपञ्चं निरूपिते तत्प्रसङ्गाद्व्रीह्यादिभावो विचार्यत इति प्रासङ्गिकी सङ्गतिः । यद्वा आकाशादिभावस्य तत्संश्लेषविशेषरूपत्वेऽपि व्रीह्यादिभावस्तच्छरीरकत्वरूपः स्यादिति शङ्कयोत्थानात्सङ्गतिः ।

'अन्याधिष्ठिते पूर्वव' दित्यत्र—'व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' (छा० ५-१०-६) इति श्रूयमाणो व्रीह्यादिभावः किं

मनुष्यादिभाववत्तच्छरीरकत्वं ? किं वाकाशादिभाववत् व्रीह्यादिसंश्लेषमात्रमिति सन्दिह्य देवो जायते मनुष्यो जायत इतिवत् 'तिलमाषा इति जायन्त' इति जननवचनात् चेतनस्य शरीरसम्बन्धो जन्मेत्यभ्युपगमात् स्थावरशरीर-सम्बन्धस्य पापमूलत्वात्, इष्टादिकारिणामपि हिंसादिगर्भयागादिकारितया पापांशमिश्रत्वेन द्युलोके पुण्यफलमनुभूयावरोहतां पापांशफलतया व्रीह्यादिस्थावर-शरीरप्राप्तिसम्भवेन मनुष्यादिभाववत्तच्छरीरकत्वमेव युक्तं वक्तुम्। आकाशादि-भावे त्वचिरनिष्क्रमणावगत्या संश्लेषमात्रकल्पनम्।

न च क्रत्वङ्गतया विहितस्य अग्नीषोमीयहिंसात्मककर्मणः कथं पापत्वं ? निषिद्धं हि कर्म पापं भवति। न हिंस्यादिति निषेधशास्त्रस्य पदाहवनीयन्यायेन विहितेतरविषयत्वादिति वाच्यम्। विधिनिषेधयोर्भिन्नविषयतया विरोधाभावेनो-त्सर्गापवादन्यायानवतारात्। अग्नीषोमीयहिंसा विधिर्हिंसायाः क्रतूपकारकत्वं बोधयति ; न हिंस्यादिति निषेधस्तु हिंसायाः प्रत्यवायफलकत्वम्। भोजनादेः श्रमतृप्त्युभयहेतुत्ववत् विहितहिंसाया अप्यल्पदुःखस्वर्गादिसुखद्वयहेतुत्वसम्भवात्। न च निषेधविधे रागप्राप्तहिंसाविषयतया न वैधहिंसामास्कन्दतीति वाच्यम्। वैधेऽपि रागं विना प्रवृत्त्यनुपपत्त्या तस्यापि रागप्राप्तत्वाविशेषात्। तस्मादिष्टा-दीनां पापमिश्रत्वेन स्वर्गे पुण्यफलमनुभूय पापांशफलमवरोहणकाले व्रीह्यादिस्था-वरभावेनानुभवन्ति। 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः'। (मनु० १-२-९) इति स्थावरभावस्य पापफलत्वस्मरणात्। अतो व्रीह्यादिभावो व्रीह्यादिशरीर-कत्वरूप इति प्राप्ते—

चेतनाधिष्ठिते कर्मफलानुभवार्थं चेतनान्तरपरिगृहीते व्रीह्यादिस्थावरशरीरे संश्लेषमात्रमाकाशादि(उभया)भाववद्व्रीह्यादिभावोऽपि न तच्छरीरत्वम्। आका-शादिमेघपर्यन्तवदत्रापि केवलतद्भावाभिलापात् भोक्तृत्वहेतुकर्माभिलापाभावात्। भोक्तृत्वाभिप्रायस्थलेऽत्र श्रुतिवाक्ये 'अथ य इमे ग्राम इष्टापूर्ते' (छा० ५-१०-३) इत्यारभ्य 'एष सोमो राजा' 'रमणीयचरणा रमणीयां योनिमापद्येरन्' (छा० ५-१०-७) इति भोगहेतुकर्माभिलापदर्शनेनात्र व्रीह्यादिभावे आकाशादा-विव कर्माभिलापाभावात् आकाशादिभाववत् व्रीह्यादिभावोऽपि तत्संश्लेषमात्रम्।

न चैवं कर्माभावे व्रीह्यादिसंश्लेषस्यादृष्टापरपर्यायकर्महेतुकत्वं न स्यादिति वाच्यम्। रमणीयचरणादेरैहिकरमणीयशरीरप्राप्तिहेतुत्वमवरोहाकाशव्रीह्यादिसंश्लेषमन्तरानुपपन्नमिति तस्यैवावरोहाकाशादिसंश्लेषहेतुत्वस्यार्थसामर्थ्यप्राप्तत्वात् कर्महेतुत्वसम्भवात्। रमणीयचरणानां पापफलव्रीह्यादिस्थावरशरीरहेतुत्वासम्भवात्। न चेष्टादीनां निषिद्धहिंसादिगर्भत्वेन पापमिश्रत्वेन तत्फलस्थावरव्रीह्यादिशरीरप्राप्तिसम्भवेन व्रीह्यादिभावस्थले कर्मानभिलापोऽप्रयोजक इति वाच्यम्। अग्नीषोमीयसंज्ञपनस्य हिंसात्वाभावश्रुत्या तस्य न हिंस्यादिति निषेधसिद्धचनाक्रान्ततया पापत्वाभावात्तत्फलत्वासम्भवात्। व्रीह्यादिभावस्य 'न वा उवेतन्म्रियसे न रिष्यसि' (काठक० २-६-९-४९) इति हिंसात्वाभावः श्रूयते। **न रिष्यसि** न हिंस्यस इत्यर्थः। 'रुष रिष हिंसाया' मिति धातुः। प्रत्युत 'देवां इदेषि पथिभिस्सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतः। तत्र त्वा देवस्सविता दधातु' (काठक० २-६-९-४९) इति स्वर्गादिप्राप्तिहेतुत्वं श्रूयते।

हिंसापदप्रवृत्तिनिमित्तञ्च बलवदनिष्टजनकत्वे सति दुःखसाधनव्यापारत्वमेव। तच्च पशुसंज्ञपनस्य तादात्विकदुःखजनकस्यापि बलवदिष्टभूतस्वर्गजनकतया न संभवतीति न निषिद्धत्वमितीष्टादीनां न पापमिश्रत्वम्। व्रीह्यादिभावानन्तरमपि 'यो यो ह्यन्नमत्ति यो यो रेतस्सिञ्चति भूय एव तद्भवति' (छा० ५-१०-६) इत्यत्र स इत्यध्याहारः। भूयः पश्चात् स **तद्भवति** रेतस्सिग्भवति रेतस्सिग्योगी भवतीत्यर्थः। न तु तच्छरीरकः चेतनान्तराधिष्ठितत्वात्। तथा चौपचारिकाकाशादिभावप्रकरणाविच्छेदात् तन्मध्यगतव्रीह्यादिभावोऽप्यौपचारिक इत्येव युक्तम्।

योषिद्योनिप्राप्त्युत्तरभाविषु अनुशयिनां शरीरेषु 'स उल्बावृतो गर्भो दश वा नव वा मासानन्तश्शयित्वा यावद्वाथ जायते स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवातो यतस्सम्भूतो भवति' (छा० ५-९-१, २) इत्युक्तरीत्या सुखदुःखोपभोगार्थत्वतद्धेतुपुण्यापुण्यकर्ममूलत्वयोर्दर्शनेन व्रीह्यादिभावे सुखदुःखोपभोगरूपकार्यस्य पुण्यापुण्यरूपकारणस्य चाभावेन व्रीह्यादिभावो नानुशयिनां व्रीह्यादिशरीरकत्वरूपः किन्तु तत्संश्लेषरूप एव पुण्यस्य स्वर्गलोक एव भुक्तत्वात् अनुशिष्टस्य च भोक्ष्यमाणत्वात् व्रीह्यादिस्थावरस्य पुण्यफलत्वायोगात्। इष्टादिपुण्यकर्मणां पापाभावाच्च।

'अन्याधिष्ठिते पूर्ववदभिलापात्' (ब्र० सू० ३-१-२४) इत्यस्मिन् सूत्रे—पुण्यपापरूपकर्माभावात व्रीह्यादिभावस्तत्संश्लेषमात्रमिति साधितम् । 'योनेश्शरीरं' (ब्र० सू० ३-१-२७) इत्यत्र सुखदुःखोपभोगरूपकार्याभावात् व्रीह्यादिभावस्तत्संश्लेषमात्रमिति साध्यत इति भेदः । अन्याधिष्ठित इति सूत्रव्याख्याने 'यत्र भोक्तृत्वमभिप्रेतं तत्र तत्साधनभूतं कर्माभिलप्यते रमणीयचरणा' इत्यादि भाष्यम् । योनेश्शरीरमित्यत्र च 'योनिप्राप्तेः पश्चादेवानुशयिनां शरीरप्राप्तिः । तत्रैव सुखदुःखोपभोगसद्भावात्' इत्यादि भाष्यम् ।

**इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**तृतीयस्याध्यायस्य**
**प्रथमः पादः ॥**

**अधिकरणानि ६.   सूत्राणि २७.**

---

## ॥ द्वितीयः पादः ॥

### (१) ॥ संध्याधिकरणम् ॥

**सू०॥ संध्ये सृष्टिराह हि ॥ १ ॥**

**सू०॥ निर्मातारञ्चैके पुत्रादयश्च ॥ २ ॥**

**सू०॥ मायामात्रन्तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥**

**सू०॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ४ ॥**

**सू०॥ देहयोगाद्वा सोऽपि ॥ ५ ॥**

**सू०॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥**

जाग्रदवस्थाचिन्तानन्तरं ज्ञानवत्तया तुल्या स्वप्नावस्था चिन्त्यते ।

'सन्ध्ये सृष्टि' रित्यत्र—स्वप्नदृशं प्रस्तुत्य 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथस्सृजते स हि कर्ता' (बृ० ४-३-१०) इति श्रूयमाणो जाग्रत्कालीनरथादिविलक्षणरथादीनां स्रष्टा, जीवः परो वेति संशये, प्रकृतपरामर्शिना स हि कर्तेति तच्छब्देन प्रस्तुतं स्वप्नदृशं परामृश्य कर्तेति स्वाप्नरथादिकर्तृत्वोक्तेः, केषाञ्चिच्छाखिनां शाखायां 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (कठ० ५-८) इति कामशब्देन 'सर्वान्कामांश्छन्दतः प्रार्थयस्व शतायुषः पुत्रपौत्रान् वृणीष्व' (कठ० १-२५) इति पूर्वप्रस्तुतपुत्रादीन्निर्दिश्य तन्निर्मातृत्वोक्तेः, 'य आत्मापहतपाप्मा' (छा० ८-७ १) इत्यादिप्रजापतिवाक्योक्तापहतपाप्मत्वादिसत्यसङ्कल्पपर्यन्तगुणशालिनस्तस्य प्रसिद्धोपकरणाद्यभावेऽपि सङ्कल्पमात्रेण विलक्षणरथादिनिर्मातृत्वसम्भवाच्च स्वाप्नपदार्थानां स्रष्टा जीव एवेति पूर्वपक्षे—

प्रसिद्धोपकरणाभावकालीना स्वाप्नरथादिपदार्थसृष्टिः मायामात्रं मायैव आश्चर्यरूपैव । मायाशब्दो ह्याश्चर्यवाची । 'जनकस्य कुले जाता देवमायेव

निर्मिता' (रामायण० १-१-२७) इत्यादौ तथा दर्शनात्। निर्मिता मूर्तिमती देवस्य माया आश्चर्यशक्तिरिवेति तदर्थत्वात्। माया विचित्रा सान्ध्यसृष्टिः परमपुरुषसङ्कल्पसिद्धेति यावत्। 'न तत्र रथा न रथयोगा' (बृ० ४-३-१०) इत्यादिना प्रसिद्धरथादिवैलक्षण्यस्य प्रतिपादने सत्यर्थवशात् सकलेतराननुभाव्यत्वतत्कालमात्रावसानत्वरूपाश्चर्यपर्यवसन्नतया तादृशी च सृष्टिस्सत्यसङ्कल्पस्य परस्यैव। जीवस्य सत्यसङ्कल्पत्वसत्त्वेऽपि तत्तत्कर्मानुगुणभगवत्सङ्कल्पेन बन्धहेतुभूतेन स्थूलसूक्ष्माचित्संसर्गद्वारेण आमोक्षं तिरोहिततया कार्योपधानायोगात्। स्वाप्नपदार्थसृष्टिमात्रोपयोगिसत्यसङ्कल्पत्वाद्याविर्भावस्वीकारे—

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात्' (छा० ५-२-९)

इत्यादिश्रुत्या स्वाप्नपदार्थदर्शनस्य शुभाशुभसूचकत्वावगमेन जीवस्य तत्स्रष्टृत्वे शुभसूचकपदार्थमात्रसृष्ट्यापत्त्या शाखान्तरे च—

'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' (कठ० ५-८)

इति स्वाप्नपदार्थस्रष्टुः जागर्तीति सार्वकालिकासङ्कुचितज्ञानशुक्रशब्दोक्तनिर्दोषत्वामृतशब्दावगतनिरुपाधिकासङ्कुचितभोग्यत्वब्रह्मशब्दार्थानवधिकातिशयबृहत्त्वानां जीवासम्भावितानां प्रतिपादनात्। कामं काममित्यस्य णमुलन्तत्वेन सङ्कल्प्येत्यर्थकतया पुत्रादिनिर्मातृत्वानवगतेः। स हि कर्तेति तच्छब्दहिशब्दयोः प्रमाणप्रसिद्धिमादायाप्युपपत्तेः परमात्मैव स्वाप्नपदार्थस्रष्टेति न तदानीमपि जीवस्यातिरोहितत्वेन प्राप्यत्वशङ्कावकाश इति राद्धान्तितम्॥

॥ इति संध्याधिकरणम् ॥

## (२) ॥ अथ तदभावाधिकरणम् ॥

### सू० ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

### सू० ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥

ज्ञानगर्भावस्थाचिन्तनानन्तरं तदभावगर्भसुषुप्त्यवस्था चिन्त्यते ।

'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इत्यत्र—'आसु तदा नाडीषु सृप्तो भवति' (छा० ८-६-३) 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ० २-१-१९) 'सता सोम्य तदा सम्पन्नो भवति सति सम्पद्य न विदुः' (छा० ६-८-१) इति श्रूयमाणानि नाडीपुरीतच्छब्दोक्तपरमात्मरूपाणि सुषुप्तिस्थानानि विकल्प्येरन् समुच्चयेरन्वेति विशये समुच्चये सामर्थ्याधिकाररहितसप्तमीविभक्त्यवगतनैरपेक्ष्यबाधापत्त्या विनिगमकप्रमाणाभावेन प्रासादखट्वापर्यङ्कन्यायानवतारेण 'सत आगच्छामः' (छा० ६-१०-२) इति ब्रह्मणस्सकाशात्प्रबोधोक्तेश्च विकल्पप्राप्तसुषुप्तिस्थानमादायाप्युपपत्तेः सुषुप्तौ नाड्या हृदयान्निष्क्रम्य पुरीतति शयानं प्रत्यवसृप्येति श्रुतेरपि विकल्पप्राप्तपरमात्मविषयतयाप्युपपत्तेरणुत्वेन जीवस्य युगपदनेकत्रावस्थानासम्भवाच्च सुषुप्तावेषां स्थानविकल्प इति पूर्वपक्षे—

पाक्षिकबाधगर्भस्य विकल्पस्यान्याय्यत्वेन प्रासादखट्वापर्यङ्कवन्नाड्यादीनां कार्यभेदासम्भवात् समुच्चयः । नाड्या हृदयान्निष्क्रम्य पुरीतति शयानं प्रत्यवसृप्येति श्रुतेः । तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ । ब्रह्म तु पर्यङ्कस्थानीयम् । द्वासप्ततिसंख्याकहिताख्यनाड्यात्मकसिरासन्ततमांसखण्डविशेषात् विषयानुभवस्थानभूतहृदयान्निष्क्रम्य निर्गत्य हृदयमध्यवर्तिलोहितमांसखण्डात्मकपुरीतति शयानं दहरपुण्डरीकावच्छिन्नाकाशरूपं ब्रह्म प्रत्यवसृप्य प्राप्य शेते इत्युक्त्या सिरासन्ततहृदयस्य भोगस्थानतया नाडीनां प्रासादस्थानीयत्वं हृदयाधेयतया दहरपुण्डरीकद्वारा दहरपुण्डरीकावच्छिन्नाकाशाधारतया च पुरीततः खट्वास्थानीयत्वं 'सत आगत्य न विदुस्सत आगच्छाम' (छा० ६-१०-२) इति ब्रह्मणस्सकाशात्प्रबोधोक्तिस्वारस्यानुरोधेन अनतिशीतवर्मच्छायातरुभूतानवधिकातिशयकल्याणगुणपरिपूर्णदहराकाशपरब्रह्मसम्पत्तेर्जाग्रत्कालीनविषयानुभवज -

नितकालुष्यशान्तिकरतात्मकार्थसामर्थ्येन च दहराकाशब्रह्मणः पर्यङ्कशब्दाभिप्रेतास्तरणस्थानीयत्वं 'हृदयस्य मध्ये लोहितं मांसपिण्डं यस्मिंस्तद्दहरं पुण्डरीकं कुमुदमिवानेकधा विकसित' मिति सौबालश्रुत्यां हृदयमध्यवर्तिदहरपुण्डरीकाधारभूतं लोहितं मांसपिण्डं यत्तदेव पुरीतदिति ज्ञायते। तस्मान्नाडीपुरीतत्परमात्मनां समुच्चयेन सुषुप्तिस्थानत्वमिति सिद्धान्तः ॥

॥ इति तदभावाधिकरणम् ॥

---

## (३) ॥ अथ कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥

## सू०॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

सुषुप्तिप्रसङ्गात् प्रबोधविषयचिन्ता प्रवर्तते—

'स एव तु कर्मानुस्मृतिशब्दविधिभ्य' इत्यत्र—किं सुप्तादन्यः प्रबोधे उत्तिष्ठति किं वा स एवेति संशये 'सता सोम्य तदा सम्पन्नो भवति' (छा० ६-८-१) इति सुषुप्तौ सच्छब्दोक्तब्रह्मसम्पत्तिवचनेन तत्सम्पत्तेश्च 'न कञ्च पाप्मानं स्पृशति' इति श्रुत्या सकलोपाधिनिर्मोकपूर्वकत्वावगमेन तस्य च पुनः प्राकृतशरीरयोगासम्भवादन्य एव तच्छरीरे कर्मविशेषफलभोगाय परकायप्रवेशन्यायेन प्रविश्य प्रबुध्यतीति प्राप्ते—

तत्त्वज्ञानभोगयोरन्यतरदन्तरेण निश्शेषकर्मनिवृत्त्यसम्भवात् पुनस्तस्य प्राकृतशरीरप्राप्तितन्मूलभोगयोरवर्जनीयत्वात् 'न कञ्च पाप्मानं स्पृशति' इत्यस्य सुषुप्तिकाले कर्मानुष्ठानाभावविषयतया नेतव्यत्वात् सुप्त एवाहमुत्थितोऽस्मीति सुप्तप्रबुद्धयोरभेदस्मृतेः 'त इह व्याघ्रो वा सिंहो वा वृको वा यद्यद्भवन्ति' (छा० ६-१०-२) इति सुप्तप्रबुद्धयोरैक्यश्रुतेः सुप्तस्य मुक्तत्वे मोक्षसाधनविधिवैयर्थ्यापत्तेः 'नाह खल्वयमेवं संप्रत्यात्मानं जानाति अयमहमस्मीति नो एवेमानि भूतानि' (छा० ८-११-२) इत्यज्ञत्ववचनात् मुक्तस्य 'सर्वं ह पश्यः पश्यति' (छा० ७-२६-२) इत्यादिना सर्वज्ञत्वकामचारत्वादिवचनाच्च विरुद्धस्वभावत्वाच्च स एव सुप्तः प्रबुध्यति। सुषुप्तौ जाग्रत्कालीनविषयानुभवायस्तो विषयभोगाशक्तः

परमात्मानं विश्रमस्थानं लीलाप्रवृत्तभगवत्सङ्कल्पेन सम्पद्याश्वस्तः पुनर्भोगायो· त्तिष्ठतीति सम्पत्तेः प्रयोजनं विश्रम इति सिद्धान्तः ।

॥ इति **कर्मानुस्मृतिशब्दविध्यधिकरणम्** ॥

---

## (४) ॥ अथ मुग्धाधिकरणम् ॥

### सू०॥ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

ज्ञानाभावतौल्यात् सुषुप्त्यवस्थाचिन्तानन्तरं मूर्छावस्था चिन्त्यते ।

'मुग्धेऽर्धसम्पत्तिः परिशेषात्' इत्यत्र—मूर्छावस्था किं सुषुप्तिमरणादावन्तर्भूता किं वा ततोऽन्येति संशये करणव्यापारोपरतितौल्यान्मरणादिषु कचिदन्तर्भावसम्भवेऽवस्थान्तरत्वे प्रमाणाभावाच्च नान्येति प्राप्ते—

ज्ञानाभावात्, जाग्रत्स्वप्नावस्थानन्तर्भाववदभिघातादिनिमित्तवैरूप्यात, अनुभवसिद्धाकारवैरूप्याच्च सुषुप्तिमरणादावनन्तर्भावात् मरणायार्धसम्पत्तिरूपा सूक्ष्मप्राणमात्रावस्थितिरूपान्यैव मूर्छावस्थेति निर्णीतम् ।

॥ **इति मुग्धाधिकरणम्**॥

---

## (५) ॥ अथ उभयलिङ्गाधिकरणम् ॥

### सू०॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

### सू०॥ भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

### सू०॥ अपि चैवमेके ॥ १३ ॥

### सू०॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

### सू०॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

### सू०॥ आह च तन्मात्रम ॥ १६ ॥

सू०॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

सू०॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

सू०॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

सू०॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ २० ॥

सू०॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥२१॥

सू०॥ तदव्यक्तमाह हि ॥ २२ ॥

सू०॥ अपि संराधने प्रत्यक्षानुमानाभ्याम ॥ २३ ॥

सू०॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥

सू०॥ अतोऽनन्तेन तथा हि लिङ्गम ॥ २५ ॥

इत्थं ब्रह्मोपासनायापेक्षितस्य प्राप्येतरवैतृष्ण्यस्य सिद्धये प्राप्यभूतब्रह्मव्यतिरिक्तचेतनस्वरूपस्य जाग्रत्स्वप्नसुषुप्तिमूर्छाद्यवस्थासु हेयत्वावगतये दोषः ख्यापितः । अथ प्राप्यभूतब्रह्मविषयतृष्णासिद्ध्यै निर्दोषत्वकल्याणगुणाकरत्वरूपमुभयलिङ्गत्वं ब्रह्मणः स्थाप्यते ।

'न स्थानतोऽपि परस्य' इत्यत्र— ब्रह्मणः निरुक्तमुभयलिङ्गत्वं युक्तमयुक्तं वेति संशये स्वप्रकाशज्ञानानन्तस्वरूपस्य प्रजापतिवाक्योदितस्वाभाविकापहतपाप्मत्वादिगुणस्यापि चेतनस्य स्थूलसूक्ष्माचित्संसर्गकृताज्ञत्वदुःखित्वभ्रमप्रमादादिदोषसंस्पर्शवत् ब्रह्मणोऽपि 'यः पृथिव्यां तिष्ठन्' (बृ० ३-७-३) 'योऽप्सु तिष्ठन्' (बृ० ३-७-४) 'यस्तेजसि तिष्ठन्' (बृ० ३-७-१४) 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' (मु० ३-१-१) इत्यादिप्रमाणसिद्धाचिच्छरीरसंसर्गेणाज्ञानादिदोषाः प्रादुःष्युः । 'न ह वै सशरीरस्य सतः' (छा० ८-१२-१) इत्यनेन शरीरसंसर्गस्यैव प्रियाप्रियहेतुत्वावगमात् 'रमणीयचरणा रमणीयां योनिं' (छा० ५-१०-७) इत्यादिना कर्मणां शरीरोपक्षीणत्वावगमेन सुखादिहेतुत्वासिद्धेः कर्मणारब्धशरीरसंसर्गस्य ज्ञानादिहेतुतया अस्मदादिकर्मारब्धशरीरसंसर्गस्येश्वरेऽपि सत्वात् स्वकर्मारब्धशरीरस्य तद्धेतुत्वे परकायप्रवेशेन

भोगानापातात् । तस्माद्ब्रह्मणोऽचित्संसर्गकृतदोषावश्यम्भावात् निर्दोषत्वमयुक्तम् । तथा कल्याणगुणाकरत्वञ्च नोपपद्यते 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' (छा० ६-२-१) इत्यत्राद्वितीयपदेन गुणतस्सद्वितीयता निषेधात् 'निर्गुणं'(आत्मोप) 'निरञ्जनं' (श्वे० ६-१९) इति विशिष्य गुणनिषेधात्, 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २-१) इति सामानाधिकरण्येनाखण्डैकार्थपरेण निर्विशेषस्वरूपावगमात् 'नेह नानास्ति किञ्चन' (बृ० ४-४-१९) 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' (बृ० २-३-६) इति प्रकृतं सर्वं ब्रह्मणः प्रकारमितिशब्देन परामृश्य नेति सर्वस्य तस्य प्रतिषेधात् सर्वेषामेव विशेषाणां तस्मिन्परिकल्पितत्वेन मिथ्यात्वावश्यम्भावाच्च । तस्मान्नोभयलिङ्गं ब्रह्मेति पूर्वपक्षः ।

राद्धान्तस्तु—स्वेतरसमस्तवस्तुविलक्षणस्य स्वसङ्कल्पमात्रावक्लृप्तस्वेतरसमस्तवस्तुस्वरूपस्थितिप्रवृत्तिनियमनादिलीलस्य सर्वज्ञस्य सर्वशक्तेः कर्मातीतस्य परस्य ब्रह्मणोऽनादिकर्मप्रवाहपरम्पराप्राप्ताचित्संसर्गतिरोहितस्वरूपतत्कृतनिखिलाज्ञानादिदोषास्पदचेतनदृष्टदोषापादनमत्यन्तासङ्गतम् । कर्मातीतस्य कर्ममूलकाज्ञानादेरसम्भवात् । न च कर्माप्यावश्यकशरीरसम्बन्धोपक्षीणतयान्यथासिद्धम् । अज्ञानादिदोषहेतुशरीरसम्बन्धस्तु परेऽप्यस्तीति वाच्यम् । तर्हि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिबहुतरफलसाधनविधिविरोधापातात् । 'रमणीयचरणा रमणीयां योनिमापद्येरन्' (छा० ५-१०-७) 'न ह वै सशरीरस्य सतः' (छा० ८-१२-१) इत्यादिना शरीरस्य कर्मद्वारत्वमुच्यत इत्येव स्वीकर्तव्यत्वात् ।

किञ्च योग्य एव वस्तुनि सामग्री कार्यमुत्पादयति नायोग्ये । तत एव सामग्र्यां सत्यामपि शिलाशकले नाङ्कुरोत्पत्तिदर्शनम् । वस्तुनश्च योग्यता तत्तत्प्रमाणावसेया शब्दैकगम्ये वस्तुनि सा शब्दावसेया । तथा च 'अशरीरं शरीरेषु' (कठ० २-२१) इति [शरीरे] वर्तमानमपि ब्रह्म शरीरायत्तदोषानर्हस्वरूपमित्यवगम्यते । तथा 'यः पृथिव्यां तिष्ठन्' (बृ० ३-७-३) इत्यादिषु प्रतिपर्यायं 'एष त आत्मान्तर्याम्यमृतः' (बृ० ३-७-४) इति पृथिव्याद्यचित्सम्बन्धेऽप्यमृतो भोग्यभूत इति तद्गतदोषानर्हं ब्रह्मेति श्रूयते । चेतनस्तु 'अनीशया शोचति मुह्यमानः' (मु० ३-१-२) 'अनादिमायया सुप्तः' ।

'अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।
यथा क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ॥' (वि० पु० ६-७-६१)

इति कर्ममूलप्रकृतिसंसर्गकृताज्ञानादिदोषसंस्पर्शार्हस्वरूप इत्युच्यते । ततश्च नात्र चेतनवद्दोषप्रसक्तिः ।

किञ्च 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥'
(मु० ३-१-१)

इति द्वयोरेकस्मिन् शरीरे स्थितिसाम्येऽपि कस्यचिज्जीवस्य कर्मफलाशनं कस्यचित्परस्य तदनशनं नियमनरूपैश्वर्यायत्तदीप्तियोगश्च शब्देनैवोच्यते । ततश्च 'न हि वचनविरोध' इति न्यायात् अचित्संसर्गायत्तदोषो न कल्पनामर्हति ।

ननु 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६-३-२) इति ब्रह्मात्मकजीवानुप्रवेशपूर्वकनामरूपव्याकरणश्रुत्या ब्रह्मणस्सकललौकिकवैदिकशब्दवाच्यतया 'ब्राह्मणो यजेत' इत्यादिविधिवाक्यगतब्राह्मणादिशब्दगृहीतत्वेन विधिनियोज्यतया शास्त्रवश्यत्वेन कर्मानुष्ठानतत्फलभागित्वरूपकर्मवश्यत्वमवर्जनीयमिति चेत्; सर्वमपि शास्त्रमधिकारिणं विषयीकरोति नानधिकारिणम् । अधिकारी चार्थी समर्थो विद्वान् । तत्रार्थित्वं शास्त्रचोदितस्वर्गादिफलकामत्वम् । तच्च ब्रह्मणो न सम्भवति अवाप्तसमस्तकामत्वेन परिपूर्णतया फलकामनानवकाशात् । सामर्थ्यञ्च पटुतरदेहेन्द्रियादिमत्त्वम् भोगावच्छेदकभोगोपकरणरूपं देहेन्द्रियादिकम् । तस्यैव विष्णुक्रमणाज्यावेक्षणाद्युपयोगित्वात् । तच्च ब्रह्मणो न सम्भवति । 'न तस्य कार्यं करणञ्च विद्यते' (श्वे० ६-८) इति शरीरेन्द्रियनिषेधात् । विद्वत्ता च व्रतनियमविशेषोपनयनाद्यङ्गोपेताचार्योच्चारणानूच्चारणरूपाध्ययनसंस्कृतस्वाध्यायसम्पादितार्थज्ञानरूपा । सा च स्वतस्सिद्धसार्वज्ञ्यस्य ब्रह्मणो न सम्भवति । तदुक्तं भगवता भाष्यकृता 'विधिनिषेधशास्त्राण्यपि कर्मवश्यमेवाधिकुर्वन्ति' इति । कर्मफलभोगकामो हि कर्मवश्यः । ततश्च तात्पर्यायोगान्न विधिवाक्यगतब्राह्मणादिशब्दगृहीतं ब्रह्मेति जीववत्तस्य कर्मवश्यत्वाभावान्नियोज्यत्वं व्याहतमेव । तथा कल्याणगुणाकरत्वमपि—

'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमञ्च दैवतम् ।' (श्वे॰ ६-७)

'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वे० ६-९)

'भीषास्माद्वातः पवते' (तै० २-८) 'स एको ब्रह्मण आनन्दः' (तै० २-८) 'यस्सर्वज्ञस्सर्ववित्' (मु० १-१-९) 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे० ६-८) 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' (छा० ८-१-५) इत्यादिश्रुतेः, 'समस्तकल्याणगुणात्मकोऽसौ' वि० पु० ३-५-८४) इत्यादिस्मृतेश्च ।

न चैषां 'नेह नानास्ति किञ्चन' (बृ० ४-४-१९) इति निषेधेन बाधान्मिथ्यात्वमाशङ्क्यम् । 'सन्मूला' (छा० ६-८-४) इत्यादिना ब्रह्मात्मकत्वेन प्राप्तानामनुवादासम्भवेन श्रुत्या विधेयानां श्रुत्यैव निषेधे श्रुतेरुन्मत्तप्रलपितत्वापत्त्या स्वतन्त्राब्रह्मात्मकवस्तुनिषेधपरत्वावश्यम्भावेन वस्तुस्वरूपानिषेधेन मिथ्यात्वानवकाशात् । 'सदेव सोम्ये'त्यत्र कारणवाक्येऽद्वितीयपदेन वाक्याभिप्रेतकारणत्वापेक्षितज्ञानशक्त्यादिगुणनिषेधानौचित्यात् उपादानव्यतिरिक्तनिमित्तसद्भावायत्तप्रतिज्ञातसर्वविज्ञानानुपपत्तिशङ्कापरिहारायापेक्षितस्य निमित्तान्तरनिषेधस्यैव युक्तत्वेन ततो गुणनिषेधासिद्धेः । 'निर्गुणं निरञ्जनं' इत्यत्र प्रतियोगिसमर्पकाञ्जनपदसमभिव्याहारेण तथाविधगुणपदस्य सत्वादिगुणपरत्वौचित्येन तन्निषेधस्य युक्तत्वेन कल्याणगुणनिषेधस्य ततोऽसिद्धेः निर्गुणमिति सामान्यनिषेधस्य विहितसत्यकामादिगुणव्यतिरिक्तहेयगुणनिषेधविषयत्वेन वा अपहतपाप्मत्वादिरूपनिषेधविशेषविषयत्वेन वोपपत्तौ गुणसामान्यनिषेधायोगेन ततो हेयगुणनिषेधस्यैव सिद्धेः । नीलो घट इत्यादिसामानाधिकरण्यस्य पदद्वयावगतप्रवृत्तिनिमित्तधर्मद्वयवद्धर्म्यैक्यबोधकतया पदान्तरवैयर्थ्यादिदोषदुष्टाखण्डार्थबोधकत्वस्यानुभवविरुद्धस्यात्यन्तानुपपन्नत्वेन ततोऽपि गुणनिषेधासिद्धेः ।

'द्वे वाव ब्रह्मणो रूपे मूर्तञ्च' (बृ० २-३-१) इत्यादिना मूर्तामूर्ताख्यस्थूलसूक्ष्मप्रपञ्चं प्रमाणान्तराप्राप्तं ब्रह्मणो रूपमभिधाय, 'तस्य ह वा एतस्य पुरुषस्य रूपं यथा माहारजनं वासः' (बृ० २-३-६) इत्यप्राकृतरूपविशेषञ्चाभिधाय, इत्थं ब्रह्मप्रकारतया प्रमाणान्तराप्राप्तं स्वरूपरूपेण तत्प्रकारतया च प्रमा-

णान्तराप्राप्तं धर्मजातं ब्रह्मविशेषणत्वेन प्रतिपाद्य, प्रतिपादितधर्मप्रतिपन्नेयत्तारूपं प्रकारं प्रकारवाचिनेतिशब्देन 'अथात आदेशो नेति नेति' (बृ० २-३-६) इति परामृश्य प्रकृतेयत्ताया एव निषेधेन ततो गुणनिषेधासिद्धेः विहितगुणजात-निषेधे विहितप्रतिषेधविरोधो भूयश्च तदुपरि गुणविधिविरोधश्च स्यात्। 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २-१) इत्यादिश्रुत्या प्रमाणान्तराप्राप्ततदविरुद्धस्वरूप-सिद्धिवत् तथाविधश्रुत्या तथाविधगुणानामपि सिद्धिरनिवार्या। इतरथार्धजरती-न्यायापातात्। अतोऽनन्तेन कल्याणगुणेन विशिष्टं ब्रह्म। तस्मात् श्रुतिस्मृति-भ्यां निर्दोषकल्याणगुणगणमुभयलिङ्गं ब्रह्मेति सिद्धम्।

॥ इत्युभयलिङ्गाधिकरणम् ॥

---

## (६) ॥ अथ अहिकुण्डलाधिकरणम् ॥

### सू०॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥
### सू०॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥
### सू०॥ पूर्ववद्वा ॥ २८ ॥
### सू०॥ प्रतिषेधाच्च ॥ २९ ॥

प्रकृतैतावत्त्वमिति पूर्वाधिकरणगुणसूत्रप्रतिपादिताचित्प्रपञ्चगतब्रह्मरूपत्वं, ब्रह्मणः पूर्वाधिकरणोक्तनिर्दोषत्वस्थेम्ने निर्धार्यते।

'उभयव्यपदेशात्त्वहिकुण्डलव'दित्यधिकरणे — मूर्तामूर्तशब्दोक्ताचित्प्र-पञ्चस्य ब्रह्मरूपत्वं किमहिकुण्डलवदेकद्रव्यावस्थाविशेषेण, किं वा प्रभाप्रभाव-तोरेकतेजस्त्वजातियोगेनेव अचिद्ब्रह्मणोरेकजातियोगेन, आहोस्वित् जीवब्रह्म-णोरिव विशेषणविशेष्यभावरूपांशांशिभावेनेति संशय्य 'सर्वं खल्विदं ब्रह्म' (छा० ३-१४-१) 'आत्मैवेदं सर्वं' (छा० ७-२५-२) इत्यभेदव्यपदेशेन 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य' (छा० ६-३-२) 'यस्य पृथिवी शरीरं' (सु. ७) इत्यादि 'यस्याव्यक्तं शरीरं' (सु. ७) इत्यन्तेन, 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते' इत्यादिना भेदव्यपदेशेन च, 'मृद्धटः

मृद उत्पन्नो घटः' 'अहेः कुण्डलं अहिरेव कुण्डलं' इत्यादिवदुभयव्यपदेशोपपत्तये ब्रह्मणोऽवस्थाविशेषा एवाचिदर्थाः। यद्वा ब्रह्मणोऽवस्थाविशेषस्वीकारे ब्रह्माचित्प्रपञ्चयोः स्वप्रकाशत्वपरप्रकाशत्वादिविरुद्धधर्मयोगप्रतिपादकभेदश्रुतीनां ब्रह्मणो निर्विकारत्वप्रतिपादकश्रुतीनाञ्च बाधापत्त्या प्रभाप्रभावतोः स्वरूपेण भिन्नयोस्तेजस्त्वजातियोगेनाभेदवत् स्वरूपेण भिन्नयोरचिद्ब्रह्मणोरेकजातियोगेनाभेदः न विशेषणविशेष्यभावरूपांशांशिभावेन, तथा सति दण्डपुरुषयोरिवाभेदस्य सर्वथानुपपत्तेरिति पक्षद्वयं प्राप्यय—

अचित्प्रपञ्चस्य ब्रह्मावस्थाविशेषत्वे ब्रह्मणोऽपरिणामित्वश्रुतिविरोधेन, ब्रह्मत्वस्य जातित्वकल्पे सदसदव्याकृतादीश्वरवाचिपदसामानाधिकरण्यस्य इदमादिप्रपञ्चवाचिपदेऽनुपपत्त्या, ब्रह्मणो जातित्वकल्पे खण्डादिपदे गोत्वपदसामानाधिकरण्यानुपपत्तिवत् 'सर्वं खल्विदं ब्रह्म' (छा० ३-१४-१) इत्यादिब्रह्मपदे प्रपञ्चवाचिपदसामानाधिकरण्यानुपपत्त्या ब्रह्मणो जगत्कारणत्वादिश्रुत्यनुपपत्त्या च, जीवस्य 'अंशो नानाव्यपदेशात्' (ब्र० सू० २-३-४२) इत्यधिकरणे पूर्वत्रोक्तविशेषणत्वरूपांशत्ववत् अचित्प्रपञ्चस्यापि विशेषणत्वरूपांशत्वमेव युक्तम्। न च विशेषणविशेष्ययोः स्वरूपभेदेन प्रपञ्चब्रह्मवाचिपदसामानाधिकरण्यमनुपपन्नमिति वाच्यम्। 'नीलो घटः, खण्डो गौः, देवदत्तो विद्वान्' इत्यादावपृथक्सिद्धविशेषणीभूतगुणजातिशरीरवाचिनां गुणिव्यक्तिशरीरिवाचिपदसामानाधिकरण्यवत् चिदचिद्रूपविशेषणवाचिपदसामानाधिकरण्यस्य ब्रह्मवाचिपदे निर्व्यूढत्वात्। सामानाधिकरण्यं हि प्रकारद्वयवद्वस्त्वैक्यं बोधयति। तथा च विशेषणविशेष्ययोरचिद्ब्रह्मणोः स्वभावासाङ्कर्यात् ब्रह्मणो निर्दोषत्वं सुस्थमिति सिद्धान्तितम्।

**॥ इति अहिकुण्डलाधिकरणम् ॥**

---

## (७) ॥ अथ पराधिकरणम् ॥

**सू०॥ परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३० ॥**

**सू०॥ सामान्यात्तु ॥ ३१ ॥**

**सू०॥ बुद्ध्यर्थः पादवत् ॥ ३२ ॥**

**सू० ॥ स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥**

**सू० ॥ उपपत्तेश्च ॥ ३४ ॥**

**सू० ॥ तथान्यप्रतिषेधात् ॥ ३५ ॥**

**सू०॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥**

ब्रह्मणो निर्दोषत्वस्थिरीकरणायाचित्प्रपञ्चस्य चेतनवत् ब्रह्मविशेषणत्वलक्षणं ब्रह्मांशत्वात्मकं ब्रह्मरूपत्वमुक्तम् । अथात्र कल्याणगुणाकरत्वस्थेम्ने गुणविशेषसिद्ध्यौपयिकं तस्यैव प्राप्यत्वं निश्चीयते ।

परमतस्सेतून्मानसंबन्धे'त्यत्र—जन्मादिसूत्रमारभ्य प्रतिपादितादस्मात्परमकारणाद्ब्रह्मणः प्राप्यान्तरं तत्त्वमस्ति नवेति संशये 'अथ य आत्मा स सेतुर्विधृतिः' (छा० ८-४-१) इति कूलात्कूलान्तरप्राप्तिहेतौ प्रसिद्धसेतुशब्देनास्य ब्रह्मणः प्रापकत्वोक्त्या, तथा 'एतं सेतुं तीर्त्वा' (छा० ८-४-२) इति तरितव्यत्वोक्त्या च प्राप्यान्तरावगमात्, 'चतुष्पाद्ब्रह्म' (छा० ३-१८-२) 'षोडशकलं ब्रह्म' (प्रश्न० ६-१) इति उन्मानस्य उद्धृत्य परिच्छिद्य मानस्य परिमितत्वस्य व्यपदेशेनास्य प्रापकस्योन्मितस्य वेदान्तप्रसिद्धानुन्मितप्राप्यवस्तुभेदप्रतीत्यानुन्मितप्राप्यान्तरावगमात्, तथा 'अमृतस्य परं पारं' (श्वे० ६-१९) 'अमृतस्यैष सेतुः' (मु० २-२-५) इति षष्ठ्या प्रापकत्वसम्बन्धव्यपदेशेन सम्बन्धस्य च सम्बन्धिद्वयनिरूपितत्वेन प्रापकीभूतोक्तब्रह्मणः प्राप्यान्तरसिद्धेः, तथा 'परात्परं पुरुषमुपैति दिव्यं' (मु० ३-२-८) 'परात्परं यन्महतो महान्तं' (तै० ना० १-५) 'तेनेदं पूर्णं पुरुषेण सर्वं' (श्वे० ३-९) 'ततो यदुत्तरतरं तदरूपमनामयं' (श्वे० ३-१०) इति पञ्चम्यन्तशब्दनिर्दिष्टोक्तपरमकारणभूतपरब्रह्मणो तदन्यपरादिशब्दनिर्दिष्टप्राप्यान्तरतत्त्वप्रतीतेश्च वस्त्वन्तरं प्राप्यमस्तीति पूर्वपक्षं प्रापय्य—

'अथ य आत्मा स सेतुः' (छा० ८-४-१ इत्यत्र प्राप्यविशेषानुपादानेन प्राप्यपरत्वानवसायेन, 'स सेतुर्विधृतिरेषां लोकानामसम्भेदाय' (छा० ८-४-१) इति सिनोति बध्नाति स्वस्मिन्सर्वमसङ्कीर्णमिति असङ्करकरत्वरूपसेतुसाधारणधर्मप्रतिपादकसन्निहितश्रुत्यवगतगुणेन ब्रह्मणि गौणार्थतात्पर्यावधारणेन प्राप्यान्तरासिद्धेः, वेदान्तं तरति प्राप्नोतीतिवत् सेतुं तीर्त्वेत्यत्रापि प्राप्येति तरतेः प्राप्त्यर्थकतया सेतुशब्दार्थस्य ब्रह्मण एव प्राप्यत्वसिद्ध्या प्राप्यान्तरस्य ततोऽप्यनवगमात्, 'चतुष्पाद्ब्रह्म' (छा० ३१-८-२) इत्यादावपि परिमितत्वव्यपदेशस्योपासनार्थतया वस्त्वनुबन्धित्वाभावेन तस्यैव वस्तुनोऽनुन्मिततया ततोऽन्यस्य प्राप्यस्य वस्तुनस्सिद्ध्यसम्भवात्, कारणभूतब्रह्मण एव वेदान्तप्रसिद्धानुन्मितप्राप्यत्वोपपत्तेः, 'यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वां' (मु० ३-२-३) इति श्रुत्या स्वस्यैव स्वप्रापकत्वावगमात् तदनुरोधेन 'अमृतस्यैष सेतुः' (मु० २-२-५) इत्युक्तषष्ठ्यर्थप्रापकत्वसम्बन्धस्यापि स्वस्मिन्नेव प्राप्येऽप्यभेदेनोपपत्त्या ततः प्राप्यान्तरासिद्धेः, घटस्य स्वरूपं राहोश्शिरः इत्यादौ प्रत्यक्षादिप्रमाणान्तरानुरोधेनाभेदे षष्ठीवदिहाप्यभेदषष्ठ्युपपत्तेः, 'यस्मात्परं नापरमस्ति किञ्चित्' (श्वे० ३-९) 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे० ६-८) इति परमकारणपरब्रह्मव्यतिरिक्तपरतत्त्वनिषेधश्रुतिविरोधेन 'परात्परं पुरुषमुपैति' (मु० ३-२-८) इत्यादौ पञ्चम्यन्तपरशब्दस्य परमकारणपरब्रह्मपरत्वासम्भवेन 'अक्षरात्परतः परः' (मु० २-१-२) इत्यत्र पञ्चम्यन्तपरशब्दस्यैव जीवपरत्ववत् जीवपरत्वस्यैव न्याय्यत्वेन ततोऽपि प्राप्यान्तरासिद्धेः,

'वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था अयनाय विद्यते ।' (श्वे० ३-८)

इत्युपक्रान्तस्य ब्रह्मोपासनामृतत्वसाधत्वस्य 'ततो यदुत्तरतरं' (श्वे० ३-१०) इत्यत्र यद्यस्मात्तदुत्तरतरमरूपमनामयं ततस्तस्मात् 'य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति' (श्वे० ३-१०) इत्युपसंहार इत्येवोपक्रमानुगुण्यायाङ्गीकर्तव्यतया ततोऽपि प्राप्यान्तरासिद्धेरुक्तमेव परमकारणं परं ब्रह्म प्राप्यमिति सिद्धान्तितम् ॥

॥ इति पराधिकरणम् ॥

## (८) ॥ अथ फलाधिकरणम् ॥

### सू०॥ फलमत उपपत्तेः ॥ ३७ ॥

### सू०॥ श्रुतत्वाच्च ॥ ३८ ॥

### सू०॥ धर्मं जैमिनिरत एव ॥ ३९ ॥

### सू०॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥

उपासनोपयोगि निर्दोषत्वकल्याणगुणाकरत्वसर्वस्मात्परत्वगुणनिरूपणप्रस्तावात् सर्वकर्माराध्यत्वसर्वफलप्रदत्वरूपोपासनोपयोगिगुणनिरूपणमारभते—

'फलमत उपपत्ते' रित्यत्र—किं धात्वर्थयागादिकर्मस्वरूपादुपासनस्वरूपाच्चापूर्वद्वारकात् फलं किं वा यागादिकर्मदहराद्युपासनाराधितवाय्वादिदेवतारूपात्केवलाच्च ब्रह्मणः फलमिति सन्दिह्य लोके कृष्यादीनां दानादीनाञ्च कर्मणां साक्षात्परम्परया वा फलसाधनत्वदर्शनात् वैदिकानामपि यागादीनां फलार्थिपुरुषव्यापारविषयाणां फलसाधनत्वौचित्यात् क्षणध्वंसिनां यागादीनां साक्षात्कालान्तरभाविस्वर्गादिसाधनत्वासम्भवेऽपि परम्परया तदुपपत्तेः ज्योतिष्टोमादिवाक्यावगतफलत्वान्यथानुपपत्त्या व्यापारे कल्पनीये वाक्यशेषावगतदेवतातृप्त्यादेरपि क्षणध्वंसितया व्यापारत्वानुपपत्त्या स्थिरतरापूर्वरूपव्यापारकल्पनौचित्येन चापूर्वद्वारा यागोपासनादिकर्मणामेव फलहेतुत्वमिति प्राप्तय—

तत्तत्कर्मोपासनादिसाधनानुष्ठातृपुरुषाभिलषितेष्टानिष्टप्रापणनिवारणौपयिकज्ञानशक्त्यादिविधुराचेतनयागादिकर्मणां फलप्रदातृचेतनमन्तरा तत्साधनत्वानुपपत्त्या क्षणध्वंसिकर्मणां द्वारापेक्षायां तृप्त एवैनमित्यादिविध्यपेक्षितार्थसमर्पकार्थवादोपस्थापितदेवताप्रीत्यादेरेव धर्मिकल्पनान्यायेन स्थैर्यकल्पनया द्वारत्वौचित्येनानुपस्थापितापूर्वकल्पनानुपपत्त्या 'यजि देवपूजायां' इत्यनुशासनेन, 'स्वकर्मणा तमभ्यर्च्य' (गीता० १८-४६)

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।' (गीता० ९-२४)
'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
'तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ (गीता० ९-२३)
'लभते च ततः कामान् मयैव विहितान् हि तान् ।' (गीता० ७-२२)

'अन्नादो वसुदानः' (बृ० ४-४-२४) 'एष ह्येवानन्दयाति' (तै० २-७) इत्यादिसर्वकर्माराध्यत्वसकलफलप्रदत्वश्रुत्या च कर्मोपासनाराधितात् तत्तद्देवतारूपात् केवलाद्ब्रह्मणो वा स्वर्गापवर्गादिफलमिति ब्रह्मणस्सर्वकर्माराध्यत्वं सकलफलप्रदत्वञ्च सुस्थमिति सिद्धान्तितम् ॥

इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन
श्रीनिवासदासेन विरचितायां
श्रीभाष्यप्रकाशिकायां
तृतीयस्याध्यायस्य
द्वितीयः पादः ॥

अधिकरणानि ८. सूत्राणि ४०

---

## ॥ तृतीयः पादः ॥

### (१) ॥ सर्ववेदान्तप्रत्ययाधिकरणम् ॥

**सू०॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥**

**सू०॥ भेदान्नेति चेदेकस्यामपि ॥ २ ॥**

**सू०॥ स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

**सू०॥ दर्शयति च ॥ ४ ॥**

**सू०॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥**

तृतीयाद्यपादद्विकेन प्राप्येतरवैतृष्ण्याय प्रत्यगात्मनोऽचित्संसर्गायत्तं हेयत्वं प्राप्यतृष्णायै तस्य ब्रह्मणो निर्दोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गत्वञ्च चिन्तितम् । अथाद्य पादद्विकेन सहकारिणा सहोपासनचिन्ता प्रवर्तते । तत्र तृतीयपादे तावदुपासनविषयिणी चिन्तारभ्यते ।

सर्ववेदान्तप्रत्ययाधिकरणे—छान्दोग्यवाजसनेयकादिनानाशाखासु श्रूयमाणवैश्वानरादिविद्या किं भिद्यते किं वा न भिद्यत इति विशये विधिपुनःश्रवणरूपाभ्यासस्य प्रकरणान्तरस्य च भेदकतया पूर्वतन्त्रसिद्धस्य शाखाभेदे सत्यवश्यम्भावात् विद्या भिद्यत एव । न च चोदनासंयोगरूपाख्यानामैक्यसाधकतयात्र वैश्वानरादिविद्यायां चोदनाद्यविशेषान्न भिद्यत इति वाच्यम् । शिरोव्रतस्याथर्वणिकैकानुष्ठेयस्य विद्यासन्निध्याम्ननावगतविद्याङ्गभावस्य प्रधानानुवर्तननियतस्याथर्वणतदितरशाखाविहिताक्षरब्रह्मविद्ययोस्संयोगाद्यविशेषेणैक्ये तद्विद्यानुष्ठातॄणामन्यशाखिनामपि तद्विद्याङ्गभूतशिरोव्रतानुष्ठानावश्यम्भावेन तस्य चाथर्वणिकैकानुष्ठेयत्वविरोधादसम्भवेन 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' (मु० ३-२-१०) इत्यवगतनियमानुपपत्तिरूपबाधकेन संयोगिनामत्र

विद्यैक्यसाधकत्वानवकाशादित्यभ्यासप्रकरणान्तराभ्यां विद्याभेदान्न गुणोपसंहार इति प्राप्ते—

प्रकरणान्तराभ्यासयोरेकशाखाधीतयोः प्रयोजनान्तरशून्यत्वेनागत्या चोद-नाद्यविशेषापवादेन भेदकत्वेऽपि भिन्नशाखागतयोस्तयोस्तत्तत्प्रतिपत्त्यप्रतिपत्त्यर्थ-तया लब्धप्रयोजनयोस्संयोगाद्यविशेषापवादकत्वायोगात् विद्यैक्यमेव। न चैवं शिरोव्रतनियमानुपपत्तिरक्षरब्रह्मविद्यायामिति शङ्क्यम्। 'नैतदचीर्णव्रतोऽधीयीत' (मु० ३-२-११) इत्यध्ययनसंयोगात्, समाचाराख्यग्रन्थे 'इदमपि वेदव्रतेन व्याख्यातं' इति वेदव्रतशब्देन शिरोव्रतनिर्देशाच्च तस्याथर्वणवेदाध्ययनाङ्गत्वेन तदनुरोधात् 'तेषामेवैतां ब्रह्मविद्यां वदेत' (मु० ३-२-१०) इत्यत्र ब्रह्मविद्या-शब्दस्य वेदरूपविद्या इत्यर्थावश्यम्भावेन शिरोव्रतस्य ब्रह्मविद्याङ्गत्वाप्राप्त्या तेषा-मेवेत्युक्तनियमानुपपत्तिरूपबाधकाभावेन संयोगाद्यविशेषेण विद्यैक्यस्य दुर्वारत्वात्।

किञ्च तैत्तिरीयके—

'दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्।
तत्रापि दह्रं गहनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्॥' (तै० ना०)

इति तच्छब्देन सामान्यतो निर्दिष्टस्यापेक्षितविशेषकथनेन विशेषावधारणमन्त-रेणानुष्ठानासिद्ध्या तत्सिद्ध्ये समानप्रकरणे छान्दोग्योक्तार्थोपजीवनावश्यम्भावेन चोदकादिप्रमाणमन्तरेणान्यार्थोपजीवनानुपपत्त्या तदुभयविद्यैक्यावश्यम्भावेन तस्य च सर्ववेदान्तप्रत्ययन्यायाधीनत्वेन प्रकरणाभ्यासयोर्विद्याभेदकत्वे तदुभयशाखा-गतदहरविद्ययोर्भेदापत्त्या चोदनाद्यविशेषरूपसर्ववेदान्तप्रत्ययन्यायेन विद्यैक्यं तैत्तिरीयकदहरविद्याविषयश्रुतिवाक्यं सूचयति। तदेवमेकसंज्ञके एकफले चोपासने समाने सत्यभिन्ने सति शाखाद्वयाम्नातानां गुणानां सर्वेषामपि तद्विद्योपकारक-त्वाविशेषेण सर्वेषां समुच्चित्यानुष्ठानमुपसंहारो न तदभावरूपो विकल्प इति सिद्धान्तितम्।

॥ इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥

---

## (२) ॥ अथ अन्यथात्वाधिकरणम् ॥

**सू०॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥**

**सू०॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥**

**सू०॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥**

**सू०॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥**

सामान्येनोपासनशास्त्रेषु सर्वशाखाप्रत्ययन्यायावतरणमुक्तम् । अथ विद्याविशेषेषु केषुचित् तत्सम्भवासम्भवौ पादशेषे निरूप्येते इति पादशेषसङ्गतिः । वैश्वानरादिविद्यायाश्चोदनाद्यविशेषादैक्यवत् अत्राप्युद्गीथविद्यायां तथैवैक्यं स्यादिति शङ्कयोत्थानादनन्तरसङ्गतिः ।

'अन्यथात्वं शब्दादिति चेन्नाविशेषा' दित्यत्र—छान्दोग्यवाजसनेयकयोः श्रूयमाणोद्गीथविद्या न भिद्यते उत भिद्यत इति सन्दिह्य उभयत्र फलसम्बन्धकल्पितवेदनविषयविधिप्रत्ययात्मकचोदनायाः, अध्यस्तप्राणभावोद्गीथलक्षणोपास्यरूपस्य, असुरपराभवरूपसंयोगस्य, उद्गीथविद्येति समाख्यायाश्च द्वयोरपि छान्दोग्यवाजसनेकयोरविशेषाद्विद्यैक्यमाशङ्क्य—

छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा० १-१-१) इति प्रकृतोद्गीथावयवं प्रणवं प्रस्तुत्य, 'एतस्यैवाक्षरस्योपव्याख्यानं भवति देवा असुरा ह वै यत्र संयेतिरे' (छा० १-२-१) इत्यारभ्य 'अथ य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे' (छा० १-२-७) इत्यध्यस्तप्राणभावोद्गीथावयवस्योपास्यरूपत्वेन ; वाजसनेयके च तथाविधप्राचीनप्रकरणाभावेन कृत्स्नोद्गीथं प्रस्तुत्य, 'अथ हैनमासन्यं प्राणमूचुस्त्वन्न उद्गाय' (बृ० १-३-७) इति कृत्स्नस्योद्गीथस्याध्यस्तप्राणभावस्योपास्यरूपत्वेन उद्गीथगानकर्तुरुद्गीथघटितमूर्तिकतयोद्गीथस्यापि साधनकोटिप्रविष्टत्वेन 'उद्गीथेनात्ययाम' (बृ० १-३-१) इत्युपक्रमाविरोधेन 'प्राण उदगायत्' (बृ० १-३-७) इत्यध्यस्तप्राणभावस्योद्गातुरुपास्यरूपत्वेन चोभयत्र रूपभेदात् संयोगाद्यविशेषेऽपि शब्दान्तरादीनां प्रत्येकं भेदकत्वस्वीकारेऽपि चोदनादीनां समुच्चितानामेवैक्यसाधकत्वाभ्युपगमेन उक्तरीत्या प्रकृते

रूपभेदेन तदभावादुद्गीथविद्या भिद्यते । यथा एकस्यामेव शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्ट्यविशेषेऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्ट्युपासनं भिद्यते तद्वत् । वरीयोभ्यः परः परोवरीयान् 'कर्तृकरणे कृता बहुलं' (पाणिनि सू० २-१-३२) इति बहुलग्रहणात्समासः । पारस्करादित्वात्सुडागमः । परश्शतानि कार्याणि परोक्षमित्यादिवत्परोवरीयस्त्वमुत्तमोत्तमत्वम् । अग्निहोत्रभेदेऽप्यग्निहोत्रसंज्ञैक्यवत् उद्गीथविद्याभेदेऽपि संज्ञैक्यमुपपद्यत इति निर्णीतम् ।

॥ इत्यन्यथात्वाधिकरणम् ॥

---

## (३) ॥ अथ सर्वाभेदाधिकरणम् ॥

## सू०॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥

प्राणदृष्टिप्रसङ्गात्प्राणविद्या चिन्त्यते ।

'सर्वाभेदादन्यत्रेमे' इत्यत्र—कौषीतकिनामुपनिषदि दशमाध्यायप्रवृत्ता प्राणविद्या छान्दोग्यवाजसनेयोक्तप्राणविद्यातो भिद्यते नवेति संशये छान्दोग्यवाजसनेयकयोर्ज्यैष्ठ्यश्रैष्ठ्यवसिष्ठत्वप्रतिष्ठात्वसम्पत्त्यायतनत्वरूपगुणषट्कयुक्तप्राणस्योपास्यत्वेन कौषीतकिनामुपनिषदि प्राणे वसिष्ठत्वादिगुणचतुष्कानभिधानेन ज्यैष्ठ्यश्रैष्ठ्ययोर्द्वयोरेवाभिधानेनोपास्यगुणत्वावगमेन न्यूनाधिकगुणकृतोपास्यरूपस्य भेदात् कौषीतकीप्राणविद्या छान्दोग्याद्युक्तप्राणविद्यातो भिन्नेति प्राप्तौ—

सर्वासूपनिषत्सु वागाद्येकैकापक्रमणेऽपि इन्द्रियान्तराणां शरीरस्य तत्तत्कार्यकरत्वस्य चावैकल्यं मुख्यप्राणापक्रमणे सति सर्वेषां स्वरूपस्थितिवैकल्यञ्च दर्शयित्वा तथाभूतप्राणगतज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्याविशेषेण छान्दोग्याद्युक्तस्य प्राणगतवसिष्ठत्वादिगुणस्य वागादिगतवसिष्ठत्वादिगुणहेतुत्वरूपस्यानुगतत्वेन ज्यैष्ठ्यश्रैष्ठ्योपपादनेन वसिष्ठत्वाद्यनुसन्धानं विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानायोगेन च सर्वत्र ज्यैष्ठ्यवसिष्ठत्वादिगुणकप्राणस्योपास्यत्वसिद्ध्या रूपाद्यविशेषेण विद्यैक्यमिति सिद्धान्तितम् ।

॥ इति सर्वाभेदाधिकरणम् ॥

---

## (४) ॥ अथ आनन्दाद्यधिकरणम् ॥

**सू०॥ आनन्दादयः प्रधानस्य ॥ ११ ॥**

**सू०॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥**

**सू०॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥**

**सू०॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥**

**सू०॥ आत्मशब्दाच्च ॥ १५ ॥**

**सू०॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥**

**सू०॥ अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥**

ज्यैष्ठ्यश्रैष्ठ्ययोरुपपाद्ययोरनुसन्धानेन तदुपपादकवसिष्ठत्वादिविषयीभावावश्यम्भावेऽभिहिते तत्प्रसङ्गात् ब्रह्मविद्यायामानन्दत्वादीनां विषयीभावनैयत्यमुच्यते ।

आनन्दादयः प्रधानस्येत्यत्र — आनन्दत्वसत्यत्वज्ञानत्वानन्तत्वरूपगुणाः किं सर्वासु ब्रह्मविद्यासूपसंहार्याः किं वा यासु श्रुतास्तास्वेवेति संशये क्वचिच्छ्रुतानां प्रमाणमन्तरेणान्यत्र यत्र क्वापि सर्वत्र वोपसंहारे तार्तीयन्यायमात्रोच्छेदप्रसङ्गात् आनन्दत्वादीनां विद्याविशेषसन्निहितानां सर्वविद्यार्थत्वग्राहकश्रुत्यादेरभावात् सन्निधेश्च तेषामानन्दवल्ल्यादिविद्याविशेषनियतत्वात् विद्यानां प्रकृतिविकृतिभावाभावेनातिदेशाख्यप्रमाणाभावाच्च सन्निहितविद्यामात्रशेषतया तत्रैवोपसंहारो न सर्वत्रेति प्राप्ते—

प्राधानस्य गुणिनो ब्रह्मणस्सर्वविद्यानुयायित्वेन गुणानां प्रधानानुवर्तनशीलतया आनन्दत्वादिगुणानां सर्वविद्यानुयायित्वं सिध्यति ।

न चैवं प्रियशिरस्त्वादीनामपि तथात्वं स्यादिति वाच्यम् । तेषामानन्दत्वादिवत् स्वरूपनिष्ठत्वाभावात् तेषां स्वरूपनिष्ठत्वे मूलमध्याग्रभेदभिन्नपरिमाणरूपस्थूलत्वादेरस्थूलत्वादिश्रुतिविरुद्धस्य ब्रह्मणि प्रसङ्गात् ।

न च तर्हि शास्त्रे प्रियशिरस्त्वाद्याम्नानं व्यर्थं स्यादिति वाच्यम् । प्रयोजनान्तराभावात् ध्याननिर्वर्तनाय शास्त्रश्रवणदशायामपरिच्छिन्नस्य ब्रह्मणः प्रतीतिविषयत्वसम्पादनाय तथा परिच्छिद्योक्तेरर्थवत्वात् ।

न चैवमपि वात्सल्यादिगुणानामपि सर्वविद्यानुयायित्वं स्यात् गुणप्रधानन्यायतौल्यादिति वाच्यम् । आनन्दत्वादिवत् वात्सल्यादीनामपि स्वरूपापृथक्सिद्धत्वाविशेषेऽपि तद्वत्स्वरूपनिरूपकत्वाभावेन सर्वविद्यान्वयाप्रसक्तेः । स्वरूपनिरूपकत्वं नामार्थसमानत्वमर्थप्रतीत्यनुबन्धित्वमर्थप्रतीतिकाले प्रतीयमानत्वनियमरूपम् ।

न चानन्दत्वादेरप्युक्तं स्वरूपनिरूपकत्वमसम्भवि सत्यादिप्रत्येकप्रतीतौ भानाभावादिति वाच्यम् । तथाप्युपास्यस्वरूपप्रतीत्यनुबन्धित्वरूपं तन्निरूपकत्वमस्त्येव । 'कारणं तु ध्येयः' इति तुशब्दाभिप्रेतकारणत्वशङ्कितदोषव्यावृत्तकारणीभूतब्रह्मस्वरूपमुपास्यमिति प्रतीयते । कारणत्वप्रसञ्जितदोषाश्च परिणामित्वरूपानृतत्वपरप्रकाशैकस्वभावत्वरूपजडत्वनियतदेशकालसम्बन्धित्वरूपपरिच्छिन्नत्वसापेक्षत्वरूपापरिपूर्णत्वात्मकास्तद्व्यावृत्तिरूपाः तदभावात्मकास्सत्यत्वादय इति 'अक्षरधियाम्' (ब्र० सू० ३-३-३३) इत्यत्रोपपादयिष्यते । सत्यत्वादीनाञ्च तादृशव्यावृत्तिरूपतया तद्विशिष्टोपास्यस्वरूपप्रतीतिकाले प्रतीतिनियमोऽस्ति । प्रत्येकं तत्तद्विशिष्टप्रतीतिकाले प्रतीयमानत्वाभावे तादृशयत्किञ्चिद्धर्मविशिष्टस्वरूपाविषयकस्वरूपविषयकप्रतीत्यविषयत्वलक्षणप्रतीत्यनुबन्धित्वरूपोपास्यनिरूपकत्वं सत्यत्वादीनां न तु वात्सल्यादीनामित्यक्षरधियामित्यत्र निरूपयिष्यते । तस्मादानन्दादयस्सर्वविद्यानुयायिन इति सिद्धान्तितम् ।

॥ इत्यानन्दाद्यधिकरणम् ॥

---

## (५) ॥ अथ कार्याख्यानाधिकरणम् ॥

## सू०॥ कार्याख्यानादपूर्वम् ॥ १८ ॥

प्राणविद्याविषयविचारात्प्रसक्तविचारानन्तरं प्राणविद्याङ्गविषयचिन्ता प्रवर्तते ।

'कार्याख्यानादपूर्वमित्यत्र'—प्राणविद्यासन्निधौ 'स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवति' (छा० ५-२-२) इति छान्दोग्ये श्रुतम्। वाजसनेयके 'किं मे वासः' (बृ० ६)१-१४) इति प्राणप्रश्ने 'आपो वास इति तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्ति अशित्वा चाचामन्ति एतदेव तदनमनग्नं कुर्वन्तो मन्यन्ते' (बृ० ६-१-१४) 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेत् एतदेव तदनमनग्नं कुरुते' इति श्रुतम्। लम्भुको वासो भवति वासः प्राप्तवान् भवति। तदनं तत्प्राणं अनग्नं नग्नतारहितम्। किमत्र आचमनान्तरं प्राणविद्याङ्गं विधीयते, किं वा आचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानमङ्गं विधीयत इति संशये 'एतदेव तदनमनग्नं कुर्वन्तो मन्यन्त' (बृ० ६-१-१४) इति पूर्ववाक्ये मननस्य श्रवणेऽपि वेदनस्याश्रवणात् कथञ्चिद्वेदनस्य श्रवणेऽपि विधिप्रत्ययाश्रवणात् अनग्नतासङ्कीर्तनस्य भोजनात्पूर्वोत्तरयोः क्रियमाणविधित्सिताचमनस्तुत्यर्थतयान्वयोपपत्तेः, आचमनस्य स्मृत्याचारप्राप्तत्वेऽपि चातुर्मास्येषु मध्यमपर्वणोर्द्वयोः प्रणयन्तीत्यनेन चोदकप्राप्तप्रणयनभिन्नाहवनीयापादानकप्रणयनान्तरविधानवत् प्राणविद्याङ्गभूताचमनान्तरस्य 'अशिष्यन्नाचामेदशित्वा चाचामेत्' (बृ० ६-१-१४) इति विधिप्रत्ययबलाद्विधानमास्थेयमिति प्राप्य—

'किं मे वासः' (छा० ५-२-२) इत्याद्युपक्रमस्य, 'अद्भिः परिदधति' छा० ५-२-२) 'लम्भुको वासो भवति अनग्नो ह भवति' (छा०५-२-२) इति छान्दोग्योपसंहारार्थवादस्य 'तदनमनग्नं कुर्वन्तः' (बृ० (६-१-१४) इति वाजसनेयकोपसंहारार्थवादस्य च प्राणवासस्त्वानग्नत्वानुसन्धानानुगुणफलसमर्पकत्वेन वेदनस्योपक्रमोपसंहाररूपतात्पर्यलिङ्गोपेतत्वात् 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामे' दित्याचमनस्य माध्यन्दिनशाखामात्रगतत्वेन वेदनस्य छान्दोग्यकाण्वमाध्यन्दिनशाखात्रयानुयायित्वाच्च, 'यदिदं किञ्च आश्वभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नं' (बृ० ६-१-१४) इत्युक्तस्य सर्वप्राण्यन्नस्यादनं प्राणविद्यानिष्ठेन कर्तुमशक्यमिति तत्तत्प्राण्यदनीये वस्तुनि प्राणाप्यायकभूते प्राणान्नत्वदृष्टिरेव विधित्सितेति तत्साहचर्याच्च, 'स्नात्वा भुञ्जीत' इत्यत्राप्राप्तप्रतिपन्नस्नानवत् इहापि प्रतिपन्नाप्राप्तवेदनरूपार्थलाभे सत्यप्रतिपन्नाप्राप्तार्थान्तरपरिग्रहा-

योगाच्च, प्राप्तार्थस्थले, 'विष्णुरुपांशु यष्टव्यः' 'श्रोतव्यो मन्तव्य' इत्यादौ विधिप्रत्ययस्याकिञ्चित्करत्वाच्च, प्राप्त्यभावस्थले 'उपरि हि देवेभ्यो धारयति' इत्यादौ विधिदर्शनाच्च, आचमनीयास्वप्सु प्राणवासस्त्वानुसन्धानमङ्गं विधीयते नाचमनान्तरम्। द्वयोः प्रणयन्तीत्यत्र तु प्रतिपन्नाप्राप्तार्थालाभेन 'द्वावग्नी प्रणयत' इत्याहवनीयापादानकप्रणयनान्तरविधायकशाखान्तरगतवाक्यान्तरैकार्थ्येन चागत्या प्रणयनान्तरविधानमिति सिद्धान्तितम्।

॥ इति कार्याख्यानाधिकरणम् ॥

---

## (६) ॥ अथ समानाधिकरणम् ॥

## सू०॥ समान एवञ्चाभेदात् ॥ १९ ॥

प्राणविद्याया इव शाण्डिल्यविद्याया अपि रूपैक्यादैक्यमुच्यते।

'समान एवञ्चाभेदा' दित्यत्र—वाजसनेयकेऽग्निरहस्ये 'सत्यं ब्रह्मेत्युपासीत अथ खलु क्रतुमयोऽयं पुरुष' इत्यारभ्य 'आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मान' मिति स्वातन्त्र्यपर्यवसन्नाप्रतिहतसङ्कल्परूपसत्यसङ्कल्पत्वाकाशवद्व्यापकत्वरूपाकाशात्मत्वादिगुणयुक्ता या शाण्डिल्यविद्या श्रुता। [या च] तत्रैव बृहदारण्यके 'मनोमयोऽयं पुरुषो भास्सत्यं स्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति यदिदं किञ्च' (बृ० ५-६-१) इति पुनरप्यन्तर्हृदय इत्यणीयस्त्वसर्वपारतन्त्र्यरूपसर्ववशित्वादिगुणोपेता शाण्डिल्यविद्या श्रुता तत्र किं विद्या भिद्यते नेति संशय्य व्यापकत्वाणीयस्त्वयोः स्वातन्त्र्यपर्यवसन्नसत्यसङ्कल्पत्वपारवश्यत्वयोर्विरुद्धयोरेकत्रोपसंहारायोगात् विकल्पे चाष्टदोषापाताच्च विद्याभेदे प्राप्ते—

आकाशात्मानमित्यत्र आकाशवन्निर्मलस्वरूपत्वस्य विवक्षिततया सर्वस्य वशीत्यत्र सर्वनिष्ठस्वाधीनत्वविवक्षया स्ववश्यसर्ववस्तुकत्वस्य सत्यसङ्कल्पत्वानुगुणतया क्वापि विरोधाभावेन चोदनाद्यविशेषेण विद्यैक्यात् गुणोपसंहार इति निर्धारितम्।

॥ इति समानाधिकरणम् ॥

---

## (७) ॥ अथ सम्बन्धाधिकरणम् ॥

### सू०॥ सम्बन्धादेवमन्यत्रापि ॥ २० ॥
### सू०॥ न वा विशेषात् ॥ २१ ॥
### सू०॥ दर्शयति च ॥ २२ ॥

शाण्डिल्यविद्यावद्व्याहृतिविद्यापि रूपैक्यादेका स्यादिति शङ्कयोत्थानात्सङ्गतिः ।

'सम्बन्धादेवमन्यत्रापी'त्यत्र—'सत्यं ब्रह्म' (बृ० ५-५-१) इत्युपक्रम्य 'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' (बृ० ५-५-२) इत्युपक्रम्य "य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकं हि शिर एकमेतदक्षरं, भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे सुव इति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति' (इत्यधिभूतं) 'हन्ति च पाप्मानं जहाति च य एवं वेद । योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिर एकं हि शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे सुवरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहमिति इत्यध्यात्मम् हन्ति च पाप्मानं जहाति च य एवं वेद' (बृ० ५-५-३,४) इति व्याहृतिविद्या बृहदारण्यके श्रुता । प्रतिष्ठा पादौ उपनिषदिति रहस्यनाम । अहरिति प्रकाशवाची । अहमित्यात्मवाची । तत्र संशयः किं यथाश्रुतस्थानविशेषनियतविद्यायां नामनी व्यवस्थिते ? किमुभयत्रोक्तविद्यायामुभे विकल्पेनानियमेनोपसंहार्ये तदर्थं किं विद्या भिद्यते नेति, तदर्थं किमादित्यमण्डलाक्षिरूपस्थानमुपास्यशरीरप्रविष्टं नेति । तत्र पूर्वपक्षः । व्याहृतिशरीरकस्य सत्यस्यैव ब्रह्मण उपास्यत्वप्रतीत्या रूपाभेदाद्विद्यैक्यमेव । तस्य भूरिति तच्छब्देन पूर्ववाक्ये 'य एष एतस्मिन्मण्डले' (बृ० ५-५-३) इत्यत्र प्रथमान्तपदोपस्थाप्यविशेष्यपरामर्शौचित्येन 'य एवं वेद' (बृ० ५-५-४) इत्यत्रापि वेदनकर्मत्वेन प्रस्तुतप्रधानभूतविशेष्यस्यैवान्वयात् । न च स्थाननिर्देशस्योपासनार्थत्वाभावे व्यापकस्य ब्रह्मणः स्थानविशेषनिर्देशो व्यर्थस्स्यादिति वाच्यम् । सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वोपपत्तये चक्षुर्मण्डलयोः स्थित्या प्रसिद्धादित्येन सादृश्यं वक्तुं

'य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषः' (तै० ना० अनु १३) 'यश्चक्षुषि तिष्ठन्' (बृ० ३-७-१८) इत्यादिश्रुतिसिद्धस्थानस्य कीर्तनमिति पूर्वपक्षिणोऽभिप्रायात्। सव्याहृतिकगायत्रीप्रतिपाद्यतया प्रसिद्धादित्यस्य व्याहृतिशरीरत्वोपपत्तिवत् तत्सादृश्येन सत्यस्य तदुपपत्तेरभिप्रेतत्वात्। अत एव 'तावेतावन्योन्यस्मिन् प्रतिष्ठितौ' (बृ० ५-५-२) इति तत्रैवोच्यते। स्थानस्योपास्यबहिर्भावेऽपि व्याहृतिशरीरकस्य सत्यस्य ब्रह्मण एकविद्यावेद्यस्याहरिति वा नामास्तु अहमिति वा नामास्तु इत्यव्यवस्थायाः पूर्वपक्ष्यभिमतत्वसम्भवेन आदित्यमण्डलस्थपुरुषस्याप्यहमिति नामास्तु अक्षिपुरुषस्याप्यहरिति नामास्तु इत्यव्यवस्थासिद्धये पूर्वपक्षेऽपि स्थानस्योपास्यान्तर्भाव आवश्यक इत्यस्यासम्भवदुक्तिकत्वात्। नाम्नोऽनुपास्यत्वेऽपि 'व्याहरन्मामनुस्मरन्' (गीता० ८-१३) इत्युक्तरीत्या व्याहरणेनापि विद्याशेषत्वोपपत्त्या तयोरुपास्यत्वासिद्ध्या पूर्वपक्षे तत्कृतविद्याभेदाप्रसङ्गात् नाम्नोरेव विशेषयोः श्रवणेनाभ्यासाद्विद्याभेदस्य पूर्वपक्षेऽनवकाशहतत्वात्।

ननु 'अग्निहोत्रं जुहोति' इति वाक्योत्पन्ने निर्गुणे अग्निहोत्रे कर्मणि 'दध्ना जुहोति' 'पयसा जुहोति' इति वाक्याभ्यां विकल्पेन दधिपयसोर्निवेशवदिह केवलविद्योत्पत्तिविधेरश्रवणान्नाम्नो विकल्पेन कथमन्वय इति चेन्न। अर्थप्राप्तिफलकीर्तनादिना विधौ कल्पनीये सयोगरूपाद्यविशेषेण विद्यैक्ये च सति व्याहृतिशरीरं सत्यमुपासीतेति विद्याविधिं परीक्ष्य तदनुवादेन तत्र विकल्पेन नामद्वयविधायकं विधिद्वयं कल्पयित्वा तत्र नाम्नो विकल्पेन निवेश इति पूर्वपक्षनिगर्वः।

राद्धान्तस्तु—नात्र विद्यैक्यं सम्भवति। विशेषात् रूपविशेषात्। तथा हि व्याहृतिशरीरकसत्याख्यब्रह्मोपासनस्यान्यतरवाक्येनैव विधानसिद्धेरन्यतरवाक्यं व्यर्थं स्यात्।

न चैकत्र विद्याविधिः अन्यत्र गुणविधानायानुवाद इति वक्तुं युक्तम्। विनिगमकाभावात्। न चात्र भूयस्त्वेनोभयश्रुतिन्यायस्सम्भवति। स्थानव्याहृतिशरीरनामफलानां चतुर्णामुभयत्राविशेषतः श्रवणेन भूयोऽल्पभावासिद्धेः। उत्पत्तिशिष्टस्थानाद्यवरुद्धे स्थानान्तरादिविधानासम्भवाच्च। 'य एतस्मिन्मण्डले पुरुषः' (बृ० ५-५-३) इत्युपक्रान्तस्य 'हन्ति च पाप्मानं जहाति य एवं वेद'

(बृ० ५-५-४) इति परिसमाप्त्यनन्तरं 'योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर' (बृ० ५-५-४) इति पुनरुपक्रमस्य 'हन्ति च पाप्मानं जहाति' (बृ० ५-५-४) इति पुनस्समापनस्य च दर्शनेन वाक्यभेदतन्मूलविधेयभेदयोः स्फुटमवगम्यमानत्वाच्च । य एवं वेदेत्यत्रोक्तप्रकारवाचिना एवंशब्देन पूर्वोक्त-स्थानव्याहृतिशरीरनामरूपप्रकारावगमेन तावत्प्रकारकवेदनस्याप्राप्ततया विशिष्ट-विधितात्पर्यावगतावाख्यातविपरिणामकल्पनेन स्थानाद्युपेतं सत्यं ब्रह्म विद्यादिति प्रतिवाक्यं विशिष्टविधिकल्पनस्यैव न्याय्यत्वाच्च वाक्यवैयर्थ्यपरिहाराय वाक्यभेद-विधिगौरवस्याङ्गीकार्यत्वात् । न ह्यत्र यच्छब्दो विधिविरोधी । विधेयक्रिया-समानाधिकरणयच्छब्दस्य 'देवांश्च याभिर्यजते' इत्यादौ विधिविरोधित्वेऽपि 'य एवं विद्वानग्निं चिनुते' इत्यादाविव कर्तृसमानाधिकरणयच्छब्दस्यातथात्वात् । एवं स्थानादिनिर्देशस्य प्रयोजनवत्तरत्वे सम्भवति पूर्वपक्षोत्प्रेक्षितविद्यैक्यनाम-विकल्पस्थाननिर्देशफलकल्पनादिकमनादेयमिति नाम्नोर्यथायथं व्यवस्थैव । किञ्च 'य एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् तावन्योन्यस्मिन्प्रतिष्ठितौ' (बृ० ५-५-२) इति प्रक्रम एव द्वित्वसंख्यया प्रधानोपास्यभेदप्रतीतौ सत्यां तदनु-रोधेन स्थानस्योपास्यान्तर्भावं कल्पयित्वा विशेषणभेदायत्तविशिष्टोपास्यभेदाव-श्यम्भावेन ततो विद्याभेद एव न्याय्यः ।

किञ्च 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं' (छा० १-७-५) इत्यादिना रूपाद्यतिदेशाद्विद्याभेदस्सिध्यति । विद्यैक्ये धर्माणामुपदेशेनैव प्राप्तिसम्भवेनाति-देशानपेक्षणात् । तस्माद्व्याहृतिविद्याभेदान्नान्योन्यं गुणोपसंहार इति ।

---

## (८) ॥ अथ सम्भृत्यधिकरणम् ॥

### सू०॥ संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

स्थानान्नाम्नो व्यवस्थावत् स्थानादुत्पत्त्यादेर्व्यवस्थोच्यते ।

'संभृतिद्युव्याप्त्यपि' इत्यत्र—'ब्रह्म ज्येष्ठा वीर्या सम्भृतानि । ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्म भूतानां प्रथमो जज्ञे । तेनार्हति ब्रह्मणा स्पर्धितुं कः'

इति तैत्तिरीयके नारायणानां खिलेषु अनारभ्य श्रुतं सम्भृतिद्युव्याप्त्यादिगुणजातं किं सर्वासु विद्यासूपसंहार्यम्? किं वा स्थानविषयव्यतिरिक्तास्विति सन्दिह्य व्यापकस्य ब्रह्मणो द्युपरिच्छिन्नत्वव्यपदेशस्योपासनार्थतया तस्योपासनान्वयावश्यम्भावे सति उपासनविशेषप्रत्यभिज्ञापकधर्माभावेन ब्रह्मसम्बन्धिगुणत्वबलेन ब्रह्मोपासनमात्रोपस्थितौ सर्वत्र विनियोगात्सर्वासूपसंहारः कर्तुं शक्यः। न च अल्पायतनविषयासु दहरादिविद्यासु कथं तर्कविरुद्धद्युपरिच्छिन्नत्वोपसंहारः। गोत्वाश्वत्वयोरेकस्मिन् धर्मिणि एकज्ञानविषयत्वायोगादिति वाच्यम्। एकस्मिन्महाकाशे घटमठरूपाल्पानल्पोपाधिकृताल्पत्वानल्पत्ववत् एकस्मिन् ब्रह्मण्युपाधिद्वयकृताल्पत्वाधिकत्वयोरविरोधेन एकोपासनविषयीभावसम्भवात। अतस्सर्वविद्यासु द्युव्याप्त्यादेरुपसंहार इति प्रापय्य—

यद्येकत्र द्वयमिति रीत्याणीयस्त्वदहरत्वद्युव्याप्त्यादेरुपास्यता स्यात्तदा वक्तुमेवं शक्यम्। नत्वेवमस्ति। किन्तु 'दहरोऽस्मिन्नन्तर आकाशः' (छा० ८-१-१) 'एष म आत्मान्तर्हृदयेऽणीयान्' (छा० ३-१४-३) 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये' (कठ० ६-१७) इति सप्तमीनिर्देशेन तदल्पायतने तदवच्छेदेन दहरत्वादिना ब्रह्मण उपास्यत्वप्रतीत्या तत्रैवायतने तदवच्छेदेन द्युव्याप्त्यादेरुपाधिनिबन्धनस्याप्यसम्भवेन तत्राशक्योपसंहारत्वात। दहरादिवाक्येन प्रथमं स्वोपात्ताल्पस्थानतन्निबन्धनौपाधिकदहरत्वाद्यन्वयोत्तरं विलम्बितप्रतीतिकानारभ्याधीतवाक्योपात्तद्युव्याप्त्यन्वयस्य वाच्यत्वेन दहरपुण्डरीकायतने दहरत्वविशिष्टे द्युव्याप्तिवैशिष्ट्यानन्वयात् विशिष्टे वैशिष्ट्यमिति रीत्यैवान्वयस्य प्राप्तत्वात्। ततश्च विरुद्धोपाधिकृतमौपाधिकमपि धर्मद्वयमुक्तरीत्या नैकस्मिन्नुपसंहर्तुं शक्यमिति द्युव्याप्तेरल्पस्थानविषयव्यतिरिक्तविद्यानिवेशे संयोगशिष्टन्यायेन संभृतेरपि तत्रैव निवेश इति निर्धारितम्।

॥ इति सम्भृत्यधिकरणम् ॥

---

## (९) ॥ अथ पुरुषविद्याधिकरणम् ॥

## सू०॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

द्युव्याप्तिसन्निधिविशिष्टसम्भृत्यादेः ब्रह्मविद्यान्वयवत् ब्रह्मविद्यासन्निधिश्रुतायाः पुरुषविद्यायास्तदङ्गत्वमुच्यते ।

'पुरुषविद्यायामपि' इत्यत्र—तैत्तिरीयके 'तस्यैवं विदुषो यज्ञस्यात्मा' (तै० नारायणोप० अनु ५२) इत्यादिना 'ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत्' (तै० नारायणोप० अनु० ५२) इत्यन्तेन पुरुषविद्या श्रुता । छान्दोग्ये सा श्रूयते—'पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातस्सवनं' (छा० ३-१६-१) [इत्यादि] । षोडशोत्तरवर्षशतमिते पुरुषायुषे आद्यानि चतुर्विंशतिवर्षाणि प्रातस्सवनम् । तत्र हेतुमाह—'चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातस्सवनं' (छा० ३-१६-१) [इति] प्रातस्सवनस्य गायत्रछन्दस्कत्वात् गायत्रच्छन्दसश्चतुर्विंशत्यक्षरात्मकत्वात् चतुर्विंशतिवर्षे प्रातस्सवनत्वाध्यासो युक्त इति भावः । 'तदस्य वसवोऽन्वायत्ताः' (छा० ३-१६-१) अस्योपासकस्य तत्प्रातस्सवनं वसवस्स्वामित्वेनानुगताः । प्रसिद्धयज्ञे प्रातस्सवनस्य वसुस्वामिकत्वादिति भावः । प्रसिद्धान्वसून्व्यावर्तयति—'प्राणा वाव वसवः' (छा० ३-१६-१) [इति] वावशब्दोऽवधारणे । प्राणानां वसुत्वे हेतुमाह—'एते हीदं वासयन्ति' (छा० ३-१६-१) [इति] शरीराणामशैथिल्यलक्षणवासस्य प्राणाधीनत्वादिति भावः । 'तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत्' (छा० ३-१६-२) तं पुरुषविद्यानिष्ठमेतस्मिन्वयसि चतुर्विंशतिवर्षात्मके वयसि किञ्चिद्रोगादिकं बाधेतेत्यर्थः । 'स ब्रूयात्प्राणा वाव वसव इदं मे प्रातस्सवनं माध्यन्दिनं सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेति' (छा० ३-१६-२) तत इमं मन्त्रं ब्रूयात् । हे प्राणा वसव यज्ञरूपमधुना प्रातस्सवनं प्रवर्तते । इदं प्रातस्सवनं प्रवर्तमानं माध्यन्दिनसवनेनाविच्छिन्नं कुरुत । प्रातस्सवनेशानां वसूनां मध्येऽहं यज्ञरूपोऽहं मा विलोप्सीय लुप्तो मा भूवं छान्दसो माङ्लुङ्भावः, माशब्दो वा । 'उद्धैव तत एत्यगदो भवति' (छा० ३-१६-२) ततः उपतापात् उदेति

उद्गच्छति। अगदो भवति अरोगो भवति। एवमुत्तरत्रापि। 'अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदं सर्वं रोदयन्ति' (छा० ३-१६-३) 'तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिनं सवनं तृतीयसवनमनुसन्तनुतेति माहं प्राणानां रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो भवति' (छा० ३-१६-४) 'अथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वा आदित्या एते हीदं सर्वमाददते। तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत् स ब्रूयात्प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति' (छा० ३-१६-५) तृतीयसवनात्मकमायुरासमाप्त्यविच्छिन्नं कुरुतेत्यर्थः। 'माहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो भवति' (छा० ३-१६-६) स्पष्टोऽर्थः। 'स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा'। अशनायादीनां दुःखात्मकत्वाद्दीक्षात्वम्। 'अथ यदश्नाति यत्पिबति यद्रमते तदुपसदमेति' (छा० ३-१७-१) अशनपानादीनां पयोव्रतादियुक्तोपसद्रूपत्वात् उपसद्रूपत्वादुपसद्दृष्टिस्तासु कर्तव्येत्यर्थः। 'अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति' (छा० ३-१७-३) हासादीनां शब्दवत्वसाम्यात् स्तुतशस्त्रैस्साम्यमेतीत्यर्थः। 'अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः' (छा० ३-१७-४) धर्मत्वतुष्टिकरत्वसाम्यादिति भावः। 'तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य' (छा० ३-१७-५) यतो हेतोः पुरुषस्यैव यज्ञरूपत्वं अत एव यथा यज्ञं करिष्यमाणे पुरुषे यज्ञदत्तस्सोमं सोष्यतीति प्रयुञ्जते तथा पुरुषस्योत्पादनं प्रतीक्ष्य यदा माता तं पुरुषं जनयिष्यति तदा पुरुषं सोष्यतीति प्रयुञ्जते लोकाः। तदुत्पादनानन्तरमसोष्ट सोमं यज्ञदत्त इतिवत् असोष्ट मे माता पुरुषमित्युत्पत्तेः पश्चात्प्रयुञ्जते। ततश्च पुरुषस्योत्पादनमेव सोष्यत्यसोष्टेति शब्दसम्बन्धित्वसामान्यात् यज्ञानुष्ठानलक्षणमुत्पादनमित्यर्थः। 'तन्मरणमेवावभृथः' (छा० ३-१७-५) समाप्तित्वसामान्यादिति भावः। 'घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच' (छा० ३-१७-६) घोरनामा अङ्गिरोगोत्रस्तदेतत्पुरुषयज्ञदर्शनं देवकीपुत्राय कृष्णाय। इतिशब्दोऽध्याहर्तव्यः। तच्छेषभूतं तत्प्रीत्यर्थमित्युक्त्वा अनुसन्धाय उवाच अनुष्ठि-

तवानित्यर्थः । वचेर्लक्षणयानुष्ठानार्थत्वम् । 'अपिपास एव बभूव' (छा० ३-१७-६) स घोरनामा भगवच्छेषत्वानुसन्धानपूर्वकपुरुषयज्ञोपासनानुष्ठानेन विद्यां प्राप्यापिपासो मुक्तो बभूवेत्यर्थः । ततश्च षोडशाधिकशतवर्षजीवनफलकस्यापि पुरुषयज्ञदर्शनस्य भगवच्छेषत्वानुसन्धानपूर्वकमनुष्ठितस्य ब्रह्मविद्योपयोगित्वमप्यस्तीति भावः ।

तत्रोभयत्र विद्यैक्यमुत नेति सन्दिह्य पुरुषविद्येति संज्ञैक्यात् 'ब्रह्मणो महिमानमाप्नोति' इति तैत्तिरीयकश्रुतब्रह्मप्राप्तिरूपफलस्य केवलपुरुषविद्यायामयोग्यत्वेनान्वयासम्भवात् योग्ये क्वचिदुत्कर्षावश्यम्भावेनाफलतया छान्दोग्यश्रुतायुःप्राप्तिरूपफलान्वयेन संयोगैक्यात्, पुरुषसम्बन्धिधर्मेषु यज्ञावयवत्वकल्पनेन रूपैक्याच्च विद्यैक्यम् । न च 'प्रणव एव विस्वर' इति न्यायेन तैत्तिरीये यज्ञत्वकल्पनमेव न दृश्यत इति कथमेतद्विचार इति वाच्यम् । विदुषो यज्ञस्येत्यत्र सम्बन्धसामान्यषष्ठ्या तावत् अभेदस्यापि क्रोडीकारेण विदुषि पुरुषे यज्ञत्वकल्पनसिद्धेः । छान्दोग्यतैत्तिरीयकयोर्यज्ञावयवकल्पने धर्मिभेदे सत्यपि यज्ञकल्पनौपयिकयज्ञावयवकल्पनस्याविशेषेण रूपैक्यस्य दुर्वारत्वात् । संयोगरूपचोदनाख्यानामविशेषे सति अन्योन्यस्मिन्कतिपयधर्माम्नानस्य उपसंहारायत्ततया रूपैक्यस्यानिवार्यत्वाच्च । अतो विद्यैक्यमिति प्राप्ते—

संज्ञैक्यस्य 'संज्ञातश्चेत्तदुक्तं' (ब्र० सू० ३-३ ८) इति न्यायेनाग्निहोत्रादौ कर्मभेदेऽपि दर्शनेन तस्याभेदासाधकत्वात् । तैत्तिरीयके पूर्वानुवाके 'ओमित्यात्मानं युञ्जीत' इति ब्रह्मप्राप्तिफलकब्रह्मविद्यामभिधाय 'तस्यैवं विदुष' इत्यादिना ब्रह्मविदुषो यज्ञत्वपरिकल्पनावगमेन तैत्तिरीयोक्तपुरुषविद्याया ब्रह्मविद्याङ्गत्वप्रतीत्या तस्याः फलवद्ब्रह्मविद्यासन्निधावाम्नातायाः पूर्वपक्षोक्तरीत्या निष्फलत्वेन 'फलवत्सन्निधावफलं तदङ्ग' मिति न्यायेन ब्रह्मविद्याङ्गत्वेन च, ब्रह्मप्राप्तिफलकतया छान्दोग्योक्तपुरुषविद्यायाश्च तादृशसन्निधानाद्यभावेन आयुःप्राप्तिफलकतया संयोगभेदाच्च छान्दोग्योक्तस्य त्रेधा विभक्तायुषस्सवनत्वस्याशिशिषादिदीक्षात्वकल्पनस्यान्यस्य च तैत्तिरीयकोक्तस्य यावद्धारणदीक्षात्वकल्पनस्य सायंप्रातरादिसवनत्वकल्पनस्य चान्यथा दर्शनेन युगपदनुपसंहार्यतया रूपभेदाच्च विद्याभेद इति सिद्धान्तः ।

॥ **इति पुरुषविद्याधिकरणम्** ॥

## (१०) ॥ अथ वेधाद्यधिकरणम् ॥

## सू०॥ वेधाद्यर्थभेदात् ॥ २५ ॥

विद्यासन्निधिसमाम्नानात् ब्रह्मविद्याङ्गं पुरुषविद्येत्युक्तम्। एवं ब्रह्मविद्यासन्निधिसमाम्नानात् केषाञ्चिन्मन्त्राणां प्रवर्ग्यादिकर्मणाञ्च ब्रह्मविद्याङ्गत्वं स्यादिति शङ्कयोत्थानात्सङ्गतिः ।

'वेधाद्यर्थभेदा'दित्यत्र—उपनिषदारम्भे रहस्यब्राह्मणारम्भे च आथर्वणिकसामगाभ्यामधीताः 'शुक्रं प्रविध्य हृदयं प्रविध्य' इत्याद्याः, 'देवसवितः प्रसुव यज्ञं प्रसुव' इत्याद्याः, कठतैत्तिरीयाभ्यामधीताः 'शन्नो मित्र' इत्याद्याः, शाट्यायनिभिरधीताः 'श्वेताश्वो हरिभ्योऽसि' इत्याद्या मन्त्राः, तैत्तिरीयककौषीतकिभ्यामाम्नाताः 'इन्द्रो वृत्रं हत्वा महानभवत्' इत्याद्याः 'प्रजापतिर्वै संवत्सरस्तस्यैष आत्मा' इत्यादयश्च महाव्रतब्राह्मणाः, वाजसनेयिभिराम्नाताः 'देवा ह वै सत्रं निषेदुः' इत्यादिप्रवर्ग्यब्राह्मणाः । हे देवता इति शेषः । शुक्रं तेजिष्ठं मम शत्रोरङ्गं प्रविध्य, लोण्मध्यमपुरुषैकवचनम् । विदारय । हृदयं विदारयेत्यर्थः ।

तत्र किमेते मन्त्राः महाव्रतादिकर्माणि च विद्याङ्गमुत नेति सन्दिह्य 'शुक्रं प्रविध्य' इत्यादिमन्त्राणां प्रवर्ग्यादिकर्मणाञ्च श्रुतिलिङ्गवाक्यैर्बलवत्प्रमाणैरन्यत्र विनियुक्तत्वेऽपि विद्यासन्निध्याम्नानवैयर्थ्यपरिहाराय 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलं' इति न्यायेन 'अथातोऽग्निष्टोमेनानुयजन्ति' इति वाक्यविनियुक्तस्याग्नेः प्राकरणिकोत्तरवेद्या सह विकल्पवदिहापि लिङ्गादिबाधेन स्वस्वप्रकरणाम्नातबलवत्प्रमाणविनियुक्ताङ्गैर्निराकांक्षाणामपि विद्यानामाकांक्षामुत्थाप्य तथा मन्त्राणामेकवाक्यतां परिकल्प्य तन्निर्वाहाय ब्रह्मविद्याप्रकाशनसामर्थ्यं गौणं परिकल्प्य विनियोजकश्रुतिकल्पनापूर्वकं मन्त्राणां विनियोगः स्वीकर्तव्यः। न चारण्येऽनुवाक्यत्वाय विद्यासन्निधावाम्नानमर्थवदिति नानर्थक्यमिति वाच्यम् । अरण्येऽनुवाकस्य रहस्यताप्रयुक्ततया तस्याश्च ब्रह्मविद्याङ्गत्वप्रयुक्तत्वात् । तस्मान्निरवकाशात्सन्निधिसमाम्नानरूपस्थानप्रमाणात् एतेषां ब्रह्मविद्याङ्गत्वमिति प्राप्य—

सन्निधेररण्येऽनुवाक्यत्वमूलकतयान्यथासिद्धत्वेन तेन लिङ्गादिबाधायोगात्। न ह्यत्रानर्थक्यप्रतिहतन्यायोऽवतरति। अरण्येऽनुवाक्यतयार्थवत्वात्। न चारण्येऽनुवाक्यत्वमपि रहस्यत्वकृतं तदपि ब्रह्मविद्यासम्बन्धायत्तमिति वाच्यम्। अनुपनीतस्त्र्याद्यश्रवणार्थमदृष्टार्थं वा अरण्येऽनुवाक्यत्वसिद्ध्या रहस्यत्वादिकृतत्वाभावात्। एतदारण्यकं सर्वं नाविति श्रोतुमर्हतीति श्रवणात्। न ह्यङ्गत्वेन प्रयोजनातिशयाय सन्निधिना लिङ्गादिबाधेन ब्रह्मविद्यासम्बन्धो युक्तः। न हि प्रयोजनाधीना प्रमाणप्रवृत्तिः। अपि तु प्रमाणानुसारेण प्रयोजनकल्पनम्। अन्यथा लोष्टादिविषये चक्षुराद्यप्रवृत्त्यापत्तेः। सन्निधेः प्रकरणादिपूर्वपूर्वप्रमाणकल्पनेन विनियोजकतया लिङ्गादेरुपजीव्यजातीयत्वेन तद्बाधासम्भवेन यत्किञ्चित्प्रयोजनपर्यवसानेनैव सन्निधेर्लब्धस्वरूपत्वौचित्यात्। तस्मान्न विद्याङ्गत्वमेतेषां किन्तु यथायथमभिचाराद्यङ्गत्वमेवेति सिद्धान्तितम्।

॥ इति वेधाद्यधिकरणम् ॥

---

## (११) ॥ अथ हान्यधिकरणम् ॥

### सू०॥ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

विद्यासन्निधिसमाम्नातमन्त्रादिचिन्ताप्रसङ्गात् विद्यासन्निधिसमाम्नातहानादिविषयचिन्ता प्रवर्तते। छान्दोग्ये—

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य।
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि'॥ (छा० ८-१३-१)

इति विदुषि फलजनकत्वशक्तिप्रहाणरूपं केवलं पुण्यपापहानं श्रुतम्। आथर्वणे—'तथा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु० ३-१-३) इति केवलं हानं श्रुतम्। शाट्यायनीनां शाखायान्तु 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्यां' इति विद्वत्सम्बन्धिप्रियाप्रियविषयफलजन-

कत्वशक्तिसङ्क्रमणरूपमुपायनं केवलं श्रुतम्। कौषीतकिनान्तु 'तत्सुकृत-दुष्कृते धूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतं' (कौषी० १-४) इति हानमुपायनञ्च द्वयं श्रुतम् । विद्यासन्निधौ हानोपायनाम्नानं हृदयादिस्थानमनोमयत्वादिगुणाम्नानवत् चिन्तनार्थमित्येवोचितम्। न तु विद्या-माहात्म्यप्रतिपादनार्थम्। 'यावान्वा अयमाकाशस्तावानेष' (छा० ८-१-३) इत्युक्तमहत्त्वस्य चिन्तनीयत्व इवात्र विरोधाभावात्। 'एतमितः प्रेत्याभि-सम्भवितास्मीति यस्य स्यादद्धा' (छा० ३-१४-४) इतीतिकरणश्रवणेन एत-मभिसम्भवितेत्युक्तब्रह्मप्राप्तिरूपफलानुसन्धानस्य विधीयमानस्य तत्क्रतुन्यायेन सर्व-विद्यार्थतया, 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' (छा० ८-१३-१) इति ब्रह्मप्राप्त्या सह चिन्तनीयतया विधीयमानस्य पापप्रहाणस्य सर्व-विद्यार्थतया प्रहाणार्थस्याप्युपायनस्य चिन्तनीयत्वं सर्वविद्यापेक्षितत्वञ्च सिद्धम् । अतः केवलहानचिन्तनं केवलोपायनचिन्तनमुभयचिन्तनञ्च सर्वविद्यापेक्षित-मास्थेयम् ।

किमिमानि चिन्तनानि परस्परनैरपेक्ष्येण स्वकार्यसमर्थानि किं वान्यो-न्यसापेक्षाणि समुच्चितानीनि संशये त्रयाणां तच्चिन्तनानाञ्च पृथगाम्नानसामर्थ्ये-नान्योन्यनिरपेक्षाणामेव स्वकार्यसामर्थ्यप्रतीत्या तेषां विकल्प एव। ननु सर्व-पापप्रहाणमन्तरेण मुक्त्यसम्भवात् उपासकात्प्रहीणस्य निष्क्रान्तस्य पापबृन्दस्य क्वचिदाश्रयेऽनुप्रवेशाभावे निराश्रयावस्थानासम्भवेन प्रहाणासिद्धेरुपायनस्य तदर्थ-तया तद्द्वारा उपायनस्यापि सर्वविद्यापेक्षितत्वं चिन्तनीयत्वमपि सिद्धमिति हानोपायनचिन्तनस्य सहभावनैयत्येन कथं पृथगाम्नानेन विकल्पपूर्वपक्षोत्थिति-रिति चेन्न । पुण्यपापप्रहाणं नाम न निष्क्रमणम् । येन तयोर्निष्क्रान्तयोर्निरा-श्रयावस्थानानुपपत्त्या उपायनस्य हानार्थता स्यात् । भगवन्निग्रहानुग्रहरूपतया पुण्यपापयोर्विदुषस्सकाशान्निष्क्रमणस्य विद्वत्सम्बन्धिप्रियाप्रियानुप्रवेशस्य चास-म्भवात्। किन्तु विदुषि पुण्यपापफलासङ्क्रमणं फलानुत्पादरूपं प्रहाणम् । तत्सङ्क्रमणं फलोत्पादनरूपमुपायनम् । तयोश्च तत्र तत्र सामग्रीसमवधानासम-वधानमात्रनिबन्धनत्वात्तयोस्तच्चिन्तनयोश्चान्योन्यनिरपेक्षत्वलक्षणं स्वातन्त्र्यमेव । हानोपायनस्वरूपपर्यालोचनाप्राप्तनैरपेक्ष्यबलेन पृथगाम्नानबलेन च तत्क्रतुन्याय-भङ्गेन तेषां विकल्प इति पूर्वपक्षे प्राप्ते—

राद्धान्त उच्यते । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा० ५-२४-३) 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मु० २-२-८) इत्यादिश्रुत्यक्षरपर्यालोचनया हानश्रुतेः पुण्यपापरूप-कर्मनाशपरता प्रतीयते । तच्च नाशरूपं प्रहाणं कर्मस्वरूपनाशात्मकमिति न शक्यते वक्तुम् । 'तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतं' (कौषी० १-४) इत्यन्यत्रोपायनवचनात् । किन्तु भगवन्निग्रहानुग्रहगतविद्वद्विषयफलानु-कूलशक्तिनाशात्मकम् । अन्यत्रोपायनञ्च प्रियाप्रियविषयफलजननशक्त्युत्पादन-रूपम् । अत एव 'तदधिगम उत्तरपूर्वाघयोः' (ब्र० सू० ४-१-१३) इति सूत्रभाष्ये 'उत्पन्नायाः प्राकृतानां पाप्मनां फलजननशक्तिनाशसामर्थ्यं प्रति-पादयती' त्यनुगृहीतम् । तयोश्च शक्तिनाशतदुत्पादनरूपयोर्हानोपायनयोः परस्परनैरपेक्ष्येऽपि 'अश्व इव रोमाणि विधूय पापं' (छा० ८-१३-१) 'पुण्यपापे विधूय' (मु० ३-१-३) 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधु-कृत्यां' 'तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति' (कौषी० १-४) इत्यादिश्रुतौ धूननोपायनशब्दस्वारस्येन त्यागापरपर्यायहानसङ्क्रमणयोः प्रतीत्या भगवन्निग्रहानु-ग्रहरूपयोः स्वविषयकतया विद्वद्विषयीकारत्याग एव हानम् । विद्वत्सम्बन्धिप्रि-याप्रियविषयीकार एवोपायनम् । पुण्यपापरूपं कर्म प्रियाप्रियावुपयातीत्युक्ते कं हित्वेति हानापेक्षास्ति तत्कर्म विद्वांसं जहातीत्युक्ते कुत्रोपयातुमित्युपायनापे-क्षास्ति । तथा च तयोः परस्परसाकांक्षत्वात् परस्परान्वये परस्परविशेषणविशे-ष्यभावरूपतया शेषशेषिभावोऽस्तीति तद्वाचकशब्दयोरपि तद्द्वारा तथात्वम-स्तीति । तदिदमुक्तम्—'हानौ तूपायनशब्दशेषत्वात्' इति । **भाषितश्च** 'हानाविति प्रदर्शनार्थं' इति । **व्याख्यातश्च** 'उपायनस्यापि प्रदर्शनार्थ-मित्यर्थः' इति **व्यासार्यैः** ।

हानोपायनयोरिह परस्पराविनाभूतयोर्विदुषोऽपेक्षितत्वाविशेषेऽपि मुक्ति-विरोधिनोः पुण्यपापयोर्हानं प्राधान्येन विदुषापेक्षितम् । उक्तरीत्या हानस्योपाय-नमन्तरेणासम्भवात् तदर्थतयोपायनमपेक्षितमिति हानेः प्राधान्येन शेषित्वं, उपायनस्य च तदर्थतया शेषत्वमिति सूत्रकृदभिप्रेतम् । गुणप्रधानन्यायेन गुणवाक्यं प्राधानवाक्येन सदेशं भवतीति तत्राप्युभयाम्नानमेव पर्यवसन्नमिति न केवलहानश्रवणं केवलोपायनश्रवणं वास्तीति न विकल्पावकाशः ।

न चैवं शाखाद्वयाम्नानवैयर्थ्यं शङ्क्यम्। तत्तच्छाखाध्येतृपुरुषप्रतिपत्त्यर्थत्वेनावैयर्थ्यात्। न चैवं 'सर्वे पाप्मानः प्रदूयन्ते' (छा० ५-२४-३) 'क्षीयन्ते चास्य कर्माणि' (मु० २-२-८) इत्यादिश्रुतेः का गतिरिति वाच्यम्। उपायनश्रुत्यनुसारेण तस्या हानपरतया व्याख्येयत्वात्। भिन्नशाखागतयोरपि हानोपायनवाक्ययोरेकवाक्यत्वस्य सम्भवात्। 'कुशा वानस्पत्यः' 'औदुम्बर्यः कुशाः' 'देवासुराणां छन्दोभिरेव छन्दांसि' 'पूर्वं हिरण्येन षोडशिनस्तोत्रमुपाकरोति समयाध्युषिते सूर्ये षोडशिनस्तोत्रमुपाकरोति' 'ऋत्विज उपगायन्ति नाध्वर्युः' इत्यादौ दर्शनात्। तदुक्तं पूर्वकाण्डे— 'अपि तु वाक्यशेषःस्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकशेषः स्यात्' (मी० सू० १०-७-४) इति। तदेवं हानोपायनचिन्तनं समुचितं सर्वविद्यापेक्षितं मुक्त्यर्थमिति।

॥ इति हान्यधिकरणम् ॥

## (१२) ॥ अथ साम्परायाधिकरणम् ॥

**सू०॥ साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥**

**सू०॥ छन्दत उभयाविरोधात् ॥ २८ ॥**

**सू०॥ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥**

**सू०॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥**

**सू०॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥**

हानिचिन्ताप्रसङ्गेन हानिकालश्चिन्त्यते। किं विदुषः पुण्यपापप्रहाणं चरमदेहवियोगकाले अर्चिरादिगमनकाले च, किं वा चरमदेहवियोगकाल एवेति संशये,

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य।
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि ॥' (छा० ८-१३-१)

इति शरीरवियोगकाले,

'स एतं देवयानं पन्थानमापद्याग्निलोकं गच्छति' (कौषो० १-३) इत्युपक्रम्य 'स आगत्य विरजानदीं तां मनसात्येति तत्सुकृतदुष्कृते धूनुते'

(कौषी० १-४) इत्यध्वनि च सुकृतदुष्कृतयोर्हानस्य श्रुतत्वात्, देहवियोगकाल एव निश्शेषकर्मनाशे तत्कार्यभूतस्य सूक्ष्मशरीरस्यापि तदैव नाशापत्त्या अर्चिरादिना गच्छतो विदुषो गतिश्रुतेः, आतिवाहिकपुरुषैस्सह संवादादिश्रुतेश्चानर्थक्यापातात्, वसिष्ठावान्तरतपःप्रभृतीनां साक्षात्कृतपरतत्त्वानामपि देहपातानन्तरं देहप्राप्तिपुत्रशोकादिकर्मफलानुभवाच्च देहवियोगकाल एव न निश्शेषकर्मनाशः। किन्तु केषाञ्चिद्देहवियोगकाले केषाञ्चिदध्वनि च हानं युक्तमिति प्राप्य्य—

चरमशरीरपातावधि विदुषां प्रारब्धस्य भोगेनैव क्षपितत्वेन सापराधे चरमदेहवियोगकाले भोक्तव्यसुखादेरभावेन 'अथ सम्पत्स्ये' (छा० ६-१४-२) इति प्रारब्धनाशानन्तरभाविनोऽर्चिरादिगतेरातिवाहिकसंवादादेश्च विद्याफलान्तर्गततया विद्यामाहात्म्येनैव गमनौपयिकसूक्ष्मशरीरावस्थानोपपत्तेरध्वनि प्रारब्धावस्थानायोगात्, विद्योत्तरयोः पुण्यपापयोर्विद्याधिगमसमय एवाश्लेषविनाशाङ्गीकारेण तदा तदवस्थानायोगात् विद्यानुकूलयज्ञादिसाधुकृत्यायास्तन्निष्पत्त्यैव पर्यवसिततयाध्वनि तदवस्थित्यसम्भवात् विद्यायोनिशरीरधारणार्थसुकृतस्य 'पाते तु' (ब्र० सू० ४-१-१४) इति न्यायेन तच्छरीरपातकाल एव नष्टत्वेन स्थित्यसम्भवात् साक्षात्कृततत्त्वानामपि वसिष्ठाद्याधिकारिकाणां यावदधिकारं प्रारब्धावस्थानावश्यम्भावेनाधिकारसमाप्तावेव तेषां निश्शेषप्रारब्धनाशात् अर्चिरादिप्राप्तिरित्यध्वनि कर्मानवस्थाने निश्चिते सति अर्थस्वाभाव्यात्प्राप्तेनार्थक्रमेण पाठक्रमं बाधित्वा 'तत्सुकृतदुष्कृते धूनुते' (कौषी० १-४) इत्यध्वनि हानप्रतिपादकपदजातस्य 'एतं देवयानं पन्थानमापद्य' (कौषी० १-३) इति वाक्यात्पूर्वं पाठस्य कल्प्यत्वेनाध्वनि हानिप्रापकप्रमाणाभावाच्चरमदेहवियोगकाले निश्शेषकर्मनिवृत्तिरिति सिद्धान्तितम्।

॥ इति साम्परायाधिकरणम् ॥

---

## (१३) ॥ अथ अनियमाधिकरणम् ॥

### सू०॥ अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥ ३२ ॥

गतेरर्थवत्त्वमिति पूर्वाधिकरणगुणसूत्रप्रस्तुतार्चिरादिगतिविषयचिन्ता प्रवर्तते।

'अनियमस्सर्वेषा'मित्यत्र—किमर्चिरादिका गतिः स्वसन्निहितोपकोसलविद्यानिष्ठानामेव किं वा सर्वविद्यानिष्ठानामिति विशये गतेस्सर्वविद्यानिष्ठविषयत्वग्राहकश्रुत्यादिबलवत्प्रमाणाभावेनानपोदितसन्निधिनार्चिरादिगतेस्सन्निहितोपकोसलविद्यानिष्ठविषयत्वमेव। न च 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' (छा० ५-१०-१) इति वाक्यात् गतेस्सर्वविद्यानिष्ठविषयत्वमिति वाच्यम्। तर्हि विद्याविशेषसन्निधौ गतेराम्नानवैयर्थ्यापातेनानर्थक्यप्रतिहतन्यायेन सन्निधिप्राप्तविद्याविशेषसम्बन्धिगत्यनुवादेन पञ्चाग्निविद्यासम्बन्ध एव तद्वाक्यतात्पर्यस्य कल्पनीयत्वादिति सन्निधिना गतेर्विद्याविशेषविषयतया नियम इति प्राप्य,—

बलवता वाक्येन गतेस्सर्वविद्याविषयत्वावगतौ उपकोसलविद्यादिस्तुत्यर्थतया वाक्यप्राप्तगत्यनुवाद इति सन्निधेः स्तुत्यर्थतया आनर्थक्याभावात्। तस्माद्वाक्येन गतेस्सर्वविद्याविषयत्वेन सर्वेषामपि ब्रह्मविद्यानिष्ठानामर्चिरादिगत्या ब्रह्मप्राप्तिरिति विद्याविशेषनिष्ठानामेवेति न नियमः। किन्तु सर्वेषामेवेत्यनियम इति निर्धारितम्।

॥ इत्यनियमाधिकरणम् ॥

---

## (१४) ॥ अथ अक्षरध्यधिकरणम् ॥

### सू०॥ अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

### सू०॥ इयदामननात् ॥ ३४ ॥

अर्चिरादिगतेस्सर्वविद्यार्थत्वचिन्तया प्रसक्तमस्थूलत्वादिधर्माणां सर्वविद्यार्थत्वमुच्यते।

'अक्षरधियां त्ववरोधः' इत्यत्र—गार्गिब्राह्मणे 'एतद्वै तदक्षरं ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन। एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ

तिष्ठतः' (बृ० ३ ८-८,९) इत्यक्षरसम्बन्धितया श्रुतान्यस्थूलत्वादीनि, तथा मुण्डके 'अथ परा यया तदक्षरमधिगम्यते। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं' (मु० १-१-५) इत्यक्षरसम्बन्धितया श्रुतान्यदृश्यत्वादीनि च निषेधरूपाणि किं सन्निहितविद्यामात्रशेषाणि तत्रैवोपसंहार्याणि किं वा सर्वविद्याशेषाणि सर्वासूपसंहार्याणीति संशयः।

तत्र पूर्वः पक्षः। सन्निधिसमाम्नानात् सन्निहितविद्यामात्रशेषाणि न सर्वशेषाणि। सर्वशेषत्वे हेत्वभावात्। न ह्यानन्दत्वादिवत्स्वरूपनिरूपकतया सर्वविद्यानुयायिब्रह्मस्वरूपानुबन्धित्वमेषां सम्भवति। आनन्दत्वादिभिरेव व्यावृत्तब्रह्मस्वरूपप्रतीतिसिद्धेरेषां तन्निरूपकत्वानवकाशात्। न च विनिगमनाविरहः। तेषां निषेधरूपत्वेन लब्धस्वरूपे क्वचित् 'सद्व्यामधिकरणप्रतियोगिभ्या' मिति न्यायेन आनन्दत्वादिनिरूपितब्रह्मस्वरूपप्रतीत्यनधीनप्रतीतिकतया आनन्दत्वादेः प्रथमप्रतीत्यवश्यम्भावात्। न चानन्दत्वादेश्चेतनसाधारणतया तद्व्यावृत्तये ह्यस्थूलत्वाद्यपेक्षेति वाच्यम्। 'सम्पद्याविर्भावः स्वेनशब्दात्' (ब्र० सू० ४-४-१) इत्युक्तन्यायेनापहतपाप्मत्वादिगुणकस्य सत्यज्ञानानन्दरूपस्य प्रकृतिवियुक्तप्रत्यगात्मनः प्राप्यतया तत्क्रतुन्यायेन यथावस्थितस्वरूपेण ब्रह्मशरीरतयोपास्यत्वेन 'व्यतिरेकस्तद्भावभावित्वात्' (ब्र० सू० ३-३-५२) इत्यत्र व्युत्पादिततया तद्व्यावृत्तेरनपेक्षणात् अस्थूलत्वादेर्निष्कृष्टस्वरूपसाधारणतया तद्व्यावृत्त्यसिद्धेश्च विशिष्टचेतनव्यावृत्तेस्सत्यत्वादिनैव सिद्धेश्च तत्तच्चेतनाचेतनव्यक्तिव्यावर्तकधर्माणामानन्त्येन दुर्ज्ञेयतया ब्रह्मण्युपसंहारासम्भवाच्च तावच्चेतनाचेतनव्यावृत्तानुगतधर्मेण व्यावृत्तिस्वीकारे च श्रुतिसूत्रयोरानन्दत्वाद्यस्थूलत्वाद्युक्तिवैयर्थ्यात् एकेनानन्तत्वेनैव सकलचेतनाचेतनवैलक्षण्यरूपव्यावृत्तिसिद्धेः। तस्मादस्थूलत्वादीनां स्वरूपनिरूपकत्वाभावात्, आनन्दत्वादिवत्सर्वविद्यानुयायित्वे हेत्वभावात् सन्निहितविद्यामात्रशेषत्वात्तत्रैवोपसंहार इति।

सिद्धान्तस्तु—सर्वविद्यानुयायिकारणत्वशङ्कितदोषव्यावृत्तोपास्यब्रह्मस्वरूपप्रतीत्यनुबन्धित्वेन आनन्दत्वादिवदुपास्यस्वरूपनिरूपकतया तथाविधवस्तुसामर्थ्यरूपहेतुबलादस्थूलत्वादीनां सर्वविद्याशेषतया सर्वत्रोपसंहार एव युक्तः। कारणत्वशङ्कितदोषव्यावृत्तिविशिष्टब्रह्मस्वरूपाविषयकप्रतीत्यविषयत्वं तत्प्रतीत्यनुबन्धित्वं तच्चोपपादयिष्यते। न चानन्दत्वादिभिरेव इतरव्यावृत्तब्रह्मस्वरूपप्रती-

तिसिद्धेरेषामनपेक्षेति वाच्यम्। व्यावृत्तिरत्र न चेतनाचेतनवैलक्षण्यस्वरूपा तादृशव्यावृत्तेरसङ्कुचितवात्सल्यादिसाधारणत्वात्। किन्तु कारणत्वशङ्कितदोषाभावरूपा। तस्या एव 'कारणन्तु ध्येय' इति तुशब्दसूचितविलक्षणविषयध्येयतानिर्वाहकत्वात्। तत्क्रतुन्यायेनात्रोपास्यस्य प्राप्यत्वमविनाभूतम्। प्राप्यत्वञ्च नित्यनिर्दोषापरिच्छिन्नानन्दरूपस्य तस्यैवोपासनं सुखं कर्तुमव्ययमित्युक्तनित्यसुखरूपं भवति। कारणत्वञ्चाभिन्ननिमित्तोपादानत्वम्। तच्चोपादानत्वे सति कर्तृत्वम्। उपादानत्वशङ्किताश्च दोषाः परिणामित्वरूपानृतत्वपरप्रकाशत्वात्मकजडत्वदेशकालविशेषसम्बन्धित्वरूपपरिच्छिन्नत्वमूलमध्याग्रभेदभिन्नपरिणामरूपस्थूलत्वस्वेतरवस्तुगतधर्मसंश्लेषविशेषरूपस्नेहादयः।

तत्र परिणामित्वरूपानृतत्वव्यावृत्तिस्सत्यत्वम्। सततैकत्वलक्षणसत्यत्वे ज्ञाते परिणामित्वज्ञानानुदयेन सत्यत्वस्य तदभावात्मकत्वात्। एवमग्रेऽपि यथायोग्यं द्रष्टव्यम्। स्थूलत्वव्यावृत्तिरस्थूलत्वं सूक्ष्मत्वम्। सूक्ष्मत्वज्ञाने स्थूलत्वज्ञानानुदयात्। सूक्ष्मत्वञ्च सर्ववस्त्वनुप्रवेशार्हपरिणामवत्वम्। अस्नेहत्वं स्नेहाभावः। स्वेतरसमस्तवस्तुगतदोषसंस्पर्शानर्हत्वम्। सत्यत्वाद्यस्नेहत्वपर्यन्ता उपादानत्वशङ्कितदोषव्यावृत्तिरूपाः। कर्तृत्वभागशङ्किताश्च दोषाः सापेक्षत्वरूपापरिपूर्णत्वशरीरित्वचक्षुरादिकरणायत्तज्ञानवत्त्वप्राणायत्तचेष्टितत्वादयः। सापेक्षत्वरूपापरिपूर्णत्वव्यावृत्तिरपरिच्छिन्नानन्दत्वम्। प्रकाशाव्यभिचरितापरिच्छिन्नानन्दरूपत्वज्ञाने सापेक्षत्वज्ञानानुदयात्। शरीरित्वव्यावृत्तिः कर्ममूलशरीरानर्हतारूपधर्मात्मिका। एवमुत्तरत्रापि यथार्हमनुसन्धेयम्।

सिद्धान्ते निरवयवस्य प्रधानस्योपादानत्वाङ्गीकारात् वैशेषिकादिमते निरवयवानां परमाणूनामुपादानत्वाङ्गीकाराच्च उपादानत्वेन सावयवत्वदोषस्य मानसिकसृष्ट्यादौ कायिकव्यापारानपेक्षणेन कर्तृत्वेन व्यापारवत्वदोषस्य च शङ्कितुमशक्यतया 'निष्कलं निष्क्रियं' इत्यादिशाखान्तराम्नातनिषेधरूपधर्माणामस्थूलत्वादिवदुपास्यस्वरूपनिरूपकत्वाभावान्न सर्वविद्यानुयायित्वम्। कारणत्वशङ्कितदोषव्यावृत्त्यात्मकधर्मविशिष्टं कारणीभूतब्रह्मस्वरूपमुपास्यस्वरूपम्। तन्निरूपकत्वञ्च तादृशयत्किञ्चिद्धर्मविशिष्टब्रह्मस्वरूपाविषयकब्रह्मस्वरूपविषयकप्रतीत्यविषयत्वम्। तादृशञ्चोपास्यस्वरूपनिरूपकत्वं सूत्रद्वयोक्तानामानन्दत्वादीनामस्थूलत्वा-

दीनाञ्चोभयेषामेव। तथाविधधर्मविशिष्टस्वरूपाविषयकप्रतीतिरपहतपाप्मत्ववात्स-ल्यादिविशिष्टब्रह्मस्वरूपविषयिणी। तादृशदोषरूपत्वाभावादपहतपाप्मत्वादीनाम् तत्प्रतीत्यविषयत्वञ्च आनन्दत्वादीनामेव तत्प्रतीतिविषयत्वात्? अपहतपाप्मत्वादी-नामनिरूपकत्वमेव। 'कारणन्तु ध्येय' इति तुशब्दयुक्तश्रुतिरेवात्र कल्पने नियामिका। गार्गिब्राह्मणमुण्डकोपनिषदुक्तधर्मान्तःपातिनामपि अतथाभूत-धर्माणां तद्विद्यामात्रानुबन्धित्वं वा सम्भृतिद्युव्याप्तिवत् संयोगशिष्टन्यायेन सर्व-विद्यानुयायित्वं वा बोध्यम्। निषेधरूपाणामुक्तनिरूपकाणामेव सर्वविद्यान्वयि-त्वेनातथाभूतनिषेधरूपाणामानन्त्येऽपि नानुपसंहारदोषः। तदेवं सूत्रद्वयेन कारणत्वशङ्कितदोषव्यावृत्तिरूपाणां धर्माणां सर्वविद्यानुयायित्वमिति सिद्धम्॥

॥ इति अक्षरध्यधिकरणम्॥

---

## (१५) ॥ अथ अन्तरत्वाधिकरणम्॥

### सू०॥ अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५ ॥

### सू०॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥

### सू०॥ सैव हि सत्यादयः ॥ ३७ ॥

हेयप्रत्यनीकास्थूलत्वादिकं ब्रह्मणोऽसाधारणञ्चेत् अशनायाद्यतीत्वविशिष्टं ब्रह्मास्तु प्राणितृत्वादिविशिष्टस्तु जीवः स्यादिति शङ्कयोत्थानात्सङ्गतिः।

बृहदारण्यके उषस्त्यप्रश्नप्रतिवचनसन्दर्भवाक्ये एवमाम्नायते—'यत्सा-क्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व। एष त आत्मा सर्वान्तरो यः प्राणेन प्राणिति योऽपानेनापानिति यो व्यानेन व्यानिति य उदानेनोदानिति स त आत्मा सर्वान्तरः' (बृ० ३-४-१) इत्युक्तेनोषस्तेन प्राणितृत्वादेर्जीवधर्म-तया तस्य सर्वान्तरत्वासम्भवं मन्वानेन पुनः पृष्टो याज्ञवल्क्य आह 'न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथा न श्रुतेः श्रोतारं शृणुया न विज्ञातेर्विज्ञातारं विजानीया अतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम' (बृ० ३-४-२)

'अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्वेति योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति एतमेवैकमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणाया वित्तैषणायाश्च व्युत्थायाथ भिक्षांचर्यं चरन्तीत्याद्यतोऽन्यदार्तं' (बृ० ३-५-१) इत्यन्तम् । **अपरोक्षात्** अपरोक्षम् । सुपां सुलुक् । आदादेशश्च । अपरोक्षत्वं सर्वदेशकालसन्निहितत्वम् । **अतोऽन्यदार्तं**= अतस्सर्वमन्यदार्तं दुःखीत्यर्थः । साक्षान्मुख्यम् । तत्र प्रतिवचनद्वयप्रतिपाद्या विद्या भिद्यते नेति संशयः ।

पूर्वपक्षस्तु—'यत्साक्षादपरोक्षाद्ब्रह्म' (बृ० ३-४-१) इति प्रश्नस्यैकरूपत्वेऽपि प्रतिवचनयोः प्राणितृत्वाशनायाद्यतीतत्वादिधर्मविशिष्टसर्वान्तरात्मविषयत्वेन प्रतिवचनानुगुण्येन प्रश्नार्थस्य ज्ञातव्यतया प्राणितृत्वादेर्जीवधर्मत्वेन प्रथमप्रश्नप्रतिवचनयोर्जीवविषयत्वमेव युक्तमाश्रयितुम् । अशनायाद्यतीतत्वस्य परमात्मैकान्ततया द्वितीयप्रश्नप्रतिवचनयोस्तद्विषयत्वं स्पष्टम् । ततश्च प्रतिवचनद्वयप्रतिपाद्ययोर्जीवपरयोरुपास्ययोर्भेदेन रूपभेदाद्विद्या भिद्यते । प्रथमप्रश्नप्रतिपादितानां साक्षाद्ब्रह्मत्वसर्वान्तरत्वप्राणितृत्वादीनामसङ्कुचितनिरुपाधिकानां ब्रह्मैकान्ततया तत्तत्पदस्वारस्याय तेषां परिग्रहेऽन्यतरप्रतिवचनवैयर्थ्यापत्त्या अवयव्यनुरोधेनावयवभूतपदास्वारस्यस्यैव न्याय्यतया प्रथमस्य जीवविषयतावश्यम्भावात् । किञ्च प्रष्टृभेदस्य प्रष्टव्यभेदमूलकत्वं प्रायिकमिति प्रष्टव्यविद्याभेदेऽवधृते तस्य च वेद्यभेदायत्ततया प्रश्नप्रतिवचनयोर्जीवविषयत्वमेव युक्तम् । वेदस्य सर्वपुरुषसाधारण्येन प्रवृत्ततया उषस्तविषयप्रतिवचनस्य कहोलसाधारणत्वेन तस्मिन्नेवार्थे प्रश्नप्रतिवचनयोरनवकाशात् । किञ्च द्वयोरपि ब्रह्मविषयत्वेऽपि एकत्र प्राणितृत्वादिगुणकस्य ब्रह्मणोऽपरत्राशनायाद्यतीतत्वादिगुणकस्य तस्योपास्यतया गुणरूपोपास्यभेदात् विद्या भिद्यते । तदेवं विद्याभेदे निश्चिते तिष्ठासेदिति विधिरावर्तनीयः । अतोऽन्यदार्तमिति वाक्यं जीवविषये निष्कृष्टप्रत्यगात्मस्वरूपादन्यद्बद्धस्वरूपं दुःखीति नेतव्यम् । सर्वान्तर इत्यत्र सर्वपदञ्च स्वात्मसम्बन्धिभूतग्रामवद्देहविषयं बोध्यमिति ।

सिद्धान्तस्तु—न रूपभेदाद्विद्याभेदः । द्वयोरपि प्रश्नप्रतिवचनयोः परमात्मविषयत्वस्य स्फुटतरं प्रतीत्या प्रथमस्यापि जीवविषयत्वासम्भवात् । तथा

हि ‘ यत्साक्षाद्ब्रह्म ’ (बृ० ३-४-१) इति मुख्यत्वरूपसाक्षात्त्वविशेषणेन स्फुटतरं जीवव्यावृत्तिः प्रतीयते । ‘ यस्सर्वान्तर ’ इति प्रसिद्धमसङ्कुचितसर्वान्तरत्वं प्रतीयते । तच्चान्तर्यामिब्राह्मणादिषु ब्रह्मण एव प्रसिद्धम् । सार्वकालिकासङ्कुचितसर्वप्राणिप्राणितृत्वं परस्यैव ‘ को ह्येवान्यात ’ (तै० २-७) इति श्रुतिप्रसिद्धं जीवस्य न सम्भवति । निद्रादशायां तस्य प्राणहेतुत्वाभावात् । तथा च ‘ न दृष्टेर्द्रष्टारं पश्येः ’ (बृ० ३-४-२) इत्यादिना दर्शनादिकर्तारं जीवात्मानं न पश्येर्न मन्वीथा इतीन्द्रियाधीनदर्शनाद्याश्रयस्य जीवात्मनो द्रष्टव्यत्वादि निषिध्यते । स च निषेधो जीवात्मन्यत्र द्रष्टव्ये सति नोपपद्यते । न ह्यत्र परमात्मनि तन्निषेध इति युक्तम् । कहोलप्रश्नप्रतिवचने तस्य द्रष्टव्यत्वाद्युक्त्या तद्विरोधात् । न च दृष्टेर्दर्शनाद्व्यतिरिक्तं जीवं न पश्येः दर्शनरूपं पश्येरिति जीवस्य जडरूपता प्रतिषिध्यत इति वाच्यम् । प्राणितृत्वादेर्जीवासाधारण्यं मन्वानस्योषस्तस्य पुनः प्रश्नप्रतिवचने प्राणितारं जीवात्मानं न पश्येरित्युक्त्यासङ्कुचितप्राणितृत्वादिज्ञापनमुखेन साधारण्यप्रतीतिनिवर्तनस्यैवोचितत्वेन जडरूपताप्रतिषेधासम्भवात् । ततः प्रथमप्रश्नप्रतिवचनयोर्ब्रह्मविषयत्वं सिद्धम् । द्वितीययोस्तु तद्विषयत्वमुभयसिद्धम् । अतो रूपैक्याद्विद्यैक्यम् ।

किञ्चोभयत्र प्रतिवचने ‘ अतोऽन्यदार्तं ’ (बृ० ३-४-२) इत्युपसंहार एकरूपो दृश्यते । स च द्वयोः परमात्मविषयत्वे युज्यते । अन्यथा प्रथमस्य जीवविषयत्वे ततोऽन्यस्य परस्यार्तमिति दुःखित्वोक्त्यनुपपत्तेः । बद्धविषयत्वे चान्यशब्दस्य सङ्कोच एव दोषः । किञ्च सर्वान्ते ‘ बाल्येन तिष्ठासेत् ’ (बृ० ३-५-१) इति विधेरेकत्वेन विधेयत्वात् परमात्मैक एवोभयत्र प्रतिवचनेऽपि प्रतिपाद्य इति सिद्धम् । अन्यथा विधेरावृत्तिकल्पना दोषः स्यात् ।

न च प्रतिवचनभेदानुपपत्तिः । प्राणितृत्वादिना जीवव्यावृत्तेरस्फुटत्वेन स्फुटतरजीवव्यावर्तकजिज्ञासया प्रश्नस्य तत्प्रतिपादकतया प्रतिवचनस्य च भेदोपपत्तेः । यथा सद्विद्यायां ‘ उत तमादेशमप्राक्ष्यः’ (छा० ६-१-२) इत्युपक्रान्ते सदुपदेशे ‘ भगवांस्त्वेव मे ब्रवीत्विति ’ (छा० ६-१-७) ‘ भूय एव मा भगवान्विज्ञापयतु ’ (छा० ६-५-४) इति प्रश्नस्य ‘ एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं ’ (छा० ६-९-४) इति प्रतिवचनस्य च भूयोभूय आवृत्ति-

स्सतो ब्रह्मणस्तत्तन्माहात्म्यप्रदर्शनाय दृश्यते तद्वद्ब्रह्मण एव सर्वान्तरत्वादिगुणकस्योपास्यस्य माहात्म्यप्रतिपादनाय प्रतिवचनभेद उपपद्यते । अत एवोभयत्र परमात्मन एव सर्वप्राणिप्राणितृत्वाशनायाद्यतीतत्वाद्युपास्यगुणभेदायत्तरूपभेदाद्विद्याभेद इति निरस्तम् । व्याचक्ष्वेत्यत्र उपसर्गे व्यावर्तकस्यापि पृष्टत्वेन प्राणितृत्वादिप्रतिपादनस्य तदर्थतयोपास्यबहिर्भूतत्वात् ।

किञ्च 'यश्शुक्लवासास्स देवदत्तपदवाच्यः' इत्यादौ शुक्लवासस्त्वादेर्देवदत्तपदवाच्यत्वबहिर्भाववत् 'यः प्राणिति योऽशनायातीतस्तं सर्वान्तरमुपासीत' इत्यत्रापि प्राणितृत्वादेरुपास्यबहिर्भावसिद्धेर्न ततो विद्या भिद्यते । प्रष्टृभेदस्य प्रष्टव्यभेदायत्तत्वेऽपि प्राणितृत्वाद्यशनायाद्यतीतत्वादिव्यावर्तकभेदेन तदुपपत्तिसम्भवात् उपास्यभेदपर्यन्तत्वस्याकल्प्यतया जीवपरविषयत्वासिद्धेः । वैश्वानरविद्यैक्येऽपि औपमन्यवादिप्रष्टृभेददर्शनाच्च । भिन्नभिन्नव्यावर्तकधर्मोपदेशश्चोषस्तकहोलयोरन्योन्यव्यावृत्तिबुद्धिव्यतिहारार्थः । प्राणितृत्वादिना या व्यावृत्तिबुद्धिरुषस्तस्य, सा कहोलेनापि कार्या; या चाशनायाद्यतीतत्वेन कहोलस्य व्यावृत्तिबुद्धिरुषस्तेनापि सा कार्या इति व्यतिहारः, तदर्थमिति यावत् । व्यतिहारे सति भूयो व्यावर्तकानुसन्धानायत्तं व्यावृत्तिबुद्धेरप्रामाण्यशङ्कानर्हत्वरूपदार्ढ्यं सिद्ध्यति । तदर्थमेवैकस्मिन्सत्युपास्य एव प्रश्नप्रतिवचनपरम्परया भूयो व्यावर्तकधर्मकीर्तनं दृश्यते ।

तत्रापि 'ऐतदात्म्यमिदं सर्वं' (छा० ६-९-४) इति प्रतिवचनमुपसंहारैकरूप्येण सर्वत्र सच्छब्दवाच्यब्रह्मण एवोपास्यत्वं ज्ञायते । तद्वदत्रापि प्रतिवचनद्वयेऽपि 'अतोऽन्यदार्तं' (बृ० ३-४-१) इत्युपसंहारैक्यात् सर्वान्तरं ब्रह्मैवोपास्यमुच्यत इति निश्चीयते । तस्माद्विद्यैक्यं सिद्धमिति ।

॥ इत्यन्तरत्वाधिकरणम् ॥

---

## (१६) ॥ अथ कामाद्यधिकरणम् ॥

### सू०॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥

### सू०॥ आदरादलोपः ॥ ३९ ॥

### सू०॥ उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

यथोषस्तकहोलप्रश्नप्रतिवचनयोरुपास्यरूपैक्याद्विद्यैक्यं तथा छान्दोग्य-वाजसनेयकश्रुतदहरविद्ययोरपि रूपाद्यविशेषादैक्यमुच्यते ।

कामादीतरत्रेत्यधिकरणे—'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं' (छा० ८-१-१) 'एष आत्मा अपहतपाप्मा सत्यकामस्सत्यसङ्कल्पः'. (छा० ८-१-५) 'य इहात्मा-नमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' (छा० ८-१-६) इति सत्यकामत्वादिविशिष्टदहराकाशोपासनं ब्रह्मप्राप्तिफलकं छान्दोग्ये श्रुतम् । 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशानोऽभयं वै ब्रह्म भवति' (बृ० ४-४-२२) इति वशित्वमहत्त्वादिविशिष्टाकाशशयानोपासन-मभयं ब्रह्मप्राप्तिफलकं वाजसनेयके श्रुतम् ।

तत्रोभयत्र विद्या भिद्यते न वेति संशयः । भिद्यत इति पूर्वः पक्षः । छान्दोग्ये तावदाकाशस्य धर्मिणोऽपहतपाप्मत्वादिधर्माणां, वाजसनेयके चाकाशे शयानस्य धर्मिणो वशित्वादिधर्माणाञ्चोपास्यत्वप्रतीत्या धर्मधर्मिलक्षणरूप-भेदात् । न चायतनादिभिः प्रत्यभिज्ञापकैर्विद्यैक्यं शङ्क्यम् । छान्दोग्योक्तदहर-त्वस्य वाजसनेयकोक्तमहत्वस्य च विरुद्धतया प्रत्यभिज्ञाविरोधादिति ।

सिद्धान्तस्तु—रूपभेदाभावान्न विद्याभेदः । आयतनादिभ्यः । हृदया-यतनत्वसेतुत्वविधरणत्वादिभिर्विद्यैक्यप्रत्यभिज्ञानेनोभयत्र सत्यकामत्ववशित्वादिवि-शिष्टस्यैवोपास्यतया प्रतीतेः । छान्दोग्ये दहराकाशस्यापहतपाप्मत्वादिगुणश्रवणा-त्प्रसिद्धिप्राचुर्यमपोद्य परमात्मत्वमङ्गीकर्तव्यमित्युक्तम् । वाजसनेयके चाकाशे शयानस्यैव वशित्वादिब्रह्मगुणश्रवणात् आकाशशब्दप्रसिद्धिप्राचुर्यापवादकाभावेन

तस्य हृदयपुण्डरीकवर्तिसूक्ष्मसुषिररूपावकाशवाचित्वमाश्रित्य तत्र शयानस्य परमात्मत्वं स्वीकार्यम् । ततश्च ब्रह्मण एव धर्मिण उभयत्रोपास्यत्वम् । न हि वशित्वसत्यकामत्वादिधर्मभेदश्शंक्यः । वशित्वादेस्सत्यसङ्कल्पत्वकार्यविशेषतया स्वकारणसत्यसङ्कल्पत्वतत्सहचरितसत्यकामत्वाद्यवगमकतया सत्यसङ्कल्पत्वस्य स्वकार्यवशित्वाद्यवगमकतया चोभयत्र सत्यकामत्वादिविशिष्टपरमात्मन एवोपास्यतया धर्मधर्मिणोः परमात्मप्राप्तिरूपफलसंयोगस्य चाविशेषादुभयत्र विद्यैक्यमेव । न च दहरत्वमहत्त्वयोर्विरोधादनुपसंहारश्शंक्यः । महत्वमिह न व्यापकत्वं किन्तूत्कृष्टत्वम् । 'स न साधुना कर्मणा भूयान् । नो एवासाधुना कनीयानि' (बृ. ४-४-२२) त्यादिना कर्मातीतत्वादिमाहात्म्यस्यैवोत्तरत्रोपपादनात् । तस्मात्संयोगरूपचोदनैक्याद्विद्यैक्यमिति ।

नन्वेतावता तृतीयपादेन गुणोपसंहारानुपसंहारफलकब्रह्मविद्याभेदाभेदचिन्ता प्रवर्तिता । तदेतदनुपपन्नम् । तत्त्वज्ञानस्यैव मुक्त्युपायतया सत्यकामत्ववशित्वादीनां गुणानां काल्पनिकतया शुक्तिरूप्यवदतात्विकतया मुक्त्युपायभूततत्त्वज्ञानानुपसंहार्यत्वात् । गुणानामपारमार्थिकत्वञ्च 'अद्वितीय' (छा० ६-२-१) इत्यनेन स्वगतभेदनिषेधकेन, 'निर्गुणं' (आत्मोपनिषत्) इत्यनेन च गुणानां निषेधावगमात् ।

'मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन ।
मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥
(बृ० ४-४-१९)

'एकधैवानुद्रष्टव्यं एतदप्रमेयं ध्रुवं' (बृ० ४-४-२०) इति प्रकृतवाक्येन 'स एष नेति नेत्यात्मा' (बृ० ४-४-२२) इत्युत्तरवाक्येन चोपास्यस्य ब्रह्मणो निर्विशेषत्वस्य प्रतीत्या गुणानामभावावगमाच्च । 'य इहात्मानमनुविद्य विजानात्येतांश्च सत्यान्कामान्' (छा० ८-१-६) इति सगुणोपासनं विधाय तत्फलतया 'जक्षत्क्रीडन्' (छा० ८-१२-३) इत्यादिना सांसारिकफलोक्त्या गुणानां मुक्त्युपायोपासनोपसंहारो न युज्यते । न चैषां मुक्तभोग्यत्वं सम्भवति । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' (छा० ८-१२-१) इति मुक्तस्याशरीरत्वप्रियाप्रियराहित्योक्तेः । 'स्वेन रूपेणाभिनिष्पद्यत' (छा०

८-१२-२) इति स्वरूपाविर्भावफलश्रवणेन तत्क्रतुन्यायेन निर्विशेषस्वरूपस्यैव मुमुक्षूपास्यत्वमिति चेत्, न। कारणप्रस्तावादुपादानव्यतिरिक्तनिमित्तसद्भावायत्तसर्वविज्ञानानुपपत्तिपरिहाराय तस्यैव निमित्तत्वसिद्धये निमित्तान्तरनिषेधस्यैवाद्वितीयपदाभिप्रेतत्वौचित्येन गुणनिषेधकत्वाभावात्। 'सदेव सोम्य' (छा० ६-२-१) इत्युक्तकारणत्वौपयिकज्ञानशक्त्यादिगुणानां निषेधासङ्गतेश्च। तदैक्षत बहु स्यां' छा० ६-२-३) इत्यादिनोत्तरत्रेक्षणादिगुणोक्तिविरोधाच्च। निर्गुणमित्यस्य वशित्वादिगुणविशेषप्रापकवाक्यान्तरानुसारेण विहितेतरगुणनिषेधविषयत्वस्यैव न्याय्यत्वाच्च। प्रमाणान्तराप्राप्तानां श्रुत्येकसमधिगतानां श्रुत्यैव निषेधे श्रुतेरुन्मत्तप्रलपितत्वापाताच्च। ब्रह्मकार्याणां 'सन्मूलास्सोम्येमास्सदायतनास्सत्प्रतिष्ठाः' (छा० ६-८-४) इत्यादिना प्रमाणान्तराप्राप्तं ब्रह्मात्मकत्वब्रह्मकार्यत्वादिकं प्रतिपाद्य तस्यैव निषेध इत्यसम्भवेनाब्रह्मात्मकनिषेधो 'नेह नानास्ति (कठ० ४-११) इत्यादिनेत्यवश्यवाच्यतया ततोऽपि गुणनिषेधासिद्धेः। 'स एष नेति नेति' (बृ० ४-४-२२) इत्यत्रापीतिशब्देन प्रपञ्चप्रकारं परामृश्य स एष आत्मा प्रपञ्चप्रकारो न, प्रपञ्चगतस्वभावो नेति ब्रह्मणि प्रपञ्चवैलक्षण्यप्रतिपादकतया ततो निर्विशेषवस्त्वसिद्धेः। 'अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्जते अव्यथितो न व्यथते' (बृ० (४-४-२२) इत्युत्तरत्र प्रपञ्चवैलक्षण्यस्यैव प्रतिपादनाच्च। 'एकधैवानुद्रष्टव्यं' (बृ० ४-४-२०) इत्यत्र प्रकारवाचिधाप्रत्ययेन 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र० सू० ४-१-३) इति सूत्रोक्तन्यायेन स्वात्मान्तर्यामित्वरूपात्मत्वैकत्वप्रकारेण ब्रह्म मनसा निर्मलीकृतेन अनुद्रष्टव्यमनुसन्धेयमिति तदर्थतया ततोऽपि निर्विशेषोपासनासिद्धेः। किञ्चेत्यपि न युक्तम्। 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा' (छा० ८-१२-२,३) इत्यादिना सर्वकर्मविनिर्मुक्तस्य परं ज्योतिरुपसम्पन्नस्य परं ज्योतिरुपसत्तिकार्यतया कीर्त्यमानानां जक्षणादीनां कर्ममूलत्वसांसारिकफलत्वोक्त्यसम्भवात्। कर्ममूलानां प्राकृतानामेव जक्षणादीनां हेयत्वात् 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छा० ८-१-६) इत्यादिश्रुत्या कर्मकृतानामेव हेयत्वप्रतिपादनात्। अन्यथा आनन्दानुभवत्वाविशेषाद्वैषयिकानन्दानुभववत् स्वप्रकाशरूपानन्दानुभवस्यापि हेयत्वापातात्।

तस्मादकर्मकृतानां परमात्मसम्पत्तिकृतानां जक्षणादीनां न सांसारिकफलत्वमिति कामादिगुणादीनां मुक्त्युपायोपासनोपास्यतया गुणोपसंहारानुपसंहारफलकविद्याभेदाभेदचिन्तोपपन्नेति स्थितम् ।

॥ इति कामाद्यधिकरणम् ॥

---

## (१७) ॥ अथ तन्निर्धारणानियमाधिकरणम् ॥

## सू० ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥

वशित्वादिविद्यासन्निध्याम्नातगुणानां विद्यायामुपसंहारनियमवत् क्रत्वङ्गाश्रयोद्गीथाद्युपासनानामपि विद्याङ्गेषु क्रतुषु नियमेनोपादानं स्यादिति प्रसङ्गात्सङ्गतिः ।

'तन्निर्धारणानियमस्तद्दृष्टे'रित्यत्र—किं क्रत्वङ्गाश्रयोद्गीथाद्युपासनानि क्रतुषु प्रोक्षणादिवत् नियमेनोपादेयानि ? किं वा गोदोहनादिवदनियमेनेति संशये नियमेनेति पूर्वः पक्षः । जुह्वा जुहोतीति क्रतुप्रकरणाधीतवाक्यावगतहोमसाधनतया क्रत्वङ्गभूतजुहूद्वारा 'यस्य पर्णमयी जुहूर्भवति' इत्यनारभ्याधीतवाक्यविहितपर्णतायाः क्रत्वङ्गत्वेन क्रतुषु नियमेनोपादानवत् क्रत्वङ्गभूतोद्गीथद्वारानारभ्याधीतस्याप्युद्गीथोपासनस्य क्रत्वङ्गत्वात् क्रतुषु नियतोपादानावश्यम्भावित्वात् । एवमुद्गीथोपासनस्य क्रतुषु नियमेनानुष्ठानेऽवधृते 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छा० १-१-१०) इत्युद्गीथमनुपासितुरुपासितुश्चानुष्ठानवचनं न क्रतुविषयम् । अपि तु ब्रह्मविद्याविषयम् । ऊर्ध्वरेतःप्रभृतिष्वपि विद्याया वक्ष्यमाणत्वेन तत्र च विद्यायाः क्रत्वनपेक्षणात् क्रत्वङ्गोद्गीथाद्यनुष्ठानस्याप्यभावे विद्याया गृहस्थाद्यधिकारिभेदेनोद्गीथोपासनानियमस्य न्यायप्राप्तस्यानुवादरूपत्वात्तद्वाक्यस्य । न च 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' (छा० १-१-१०) इति तदुपासनस्य वीर्यवत्तरत्वलक्षणफलार्थत्वावगमाद्गोदोहनादिवदनियम एव युक्त इति वाच्यम् । पर्णतायाः क्रत्वव्यभिचरितजुहूद्वारा क्रत्वङ्गत्वेन क्रतुफलेनैव नैराकांक्ष्येणापापश्लोकश्रवणवाक्यस्यार्थवादत्ववदत्रापि

तथात्वस्यैवोचितत्वात् । रात्रिसत्रे च फलाकांक्षाबलादार्थवादिकं फलमाश्रितम् तस्मादुद्गीथाद्युपासनानां नियमेनोपादानमिति ।

राद्धान्तस्तु— तन्निर्धारणस्योद्गीथाद्युपासनस्यानियमः क्रतुष्वनुष्ठानानियमः । तद्दृष्टेः अनुष्ठानानियमस्य 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छा० १-१-१०) इति विद्वदविदुषोरुभयोरपि क्रत्वनुष्ठानवचनात्। न चोक्तोऽयमनियमो विद्याविषय इति युक्तम्। अत्र विद्याया अनुपस्थितत्वात्, क्रतोस्तूद्गीथद्वारोपस्थितत्वेन तत्परित्यागायोगाच्च । ततोऽनियमवचनादुद्गीथाद्युपासनस्य क्रत्वनङ्गत्वे निश्चिते विहितस्योद्गीथाद्युपासनस्य फलाकांक्षायां रात्रिसत्रन्यायेन वीर्यवत्तरत्वं प्रबलकर्मान्तराप्रतिबद्धफलकत्वरूपं फलं कल्प्यत इति गोदोहनादिवत्स्वर्गादिरूपफलव्यतिरिक्ततदनुगुणफलानां क्रमाङ्गोद्गीथाद्युपासनानां क्रतुष्वनियमेनोपसंहारः इति ।

॥ इति तन्निर्धारणानियमाधिकरणम् ॥

---

## (१८) ॥ अथ प्रदानाधिकरणम् ॥

## सू० ॥ प्रदानवदेव तदुक्तम् ॥ ४२ ॥

प्रासङ्गिकमधिकरणं परिसमाप्य कामादीतरत्रेत्यत्र चिन्तितदहरविद्याविषयिणी चिन्ता प्रवर्तत इति पूर्वाधिकरणेनास्य सङ्गतिः ।

'प्रदानवदेव तदुक्तं' इत्यत्र—दहरविद्यावाक्ये 'तद्य इहात्मानमनुविद्य व्रजन्ति '(छा०८-१-६) इति दहराकाशात्मस्वरूपस्य स्वरूपनिरूपकानन्दादियुक्तस्योपासनमुक्त्वा 'एतांश्च सत्यान्कामान्' (छा० ८-१-६) इति पृथग्गुणोपासनञ्चोक्तम्। तत्रापहतपाप्मत्वादिगुणचिन्तनेऽपि आनन्दत्वादियुक्तदहराकाशात्मनोऽपि तत्तद्गुणप्रतिसम्बन्धितया चिन्तनमावर्तनीयं न वा ? किं दहरमात्रचिन्तने गुणवद्दहरचिन्तनं कृतं न वा ? केवलाद्विशिष्टं भिद्यते न वेति । न भिद्यते चेत् दहरमात्रचिन्तने गुणवद्दहरचिन्तनं कृतमिति गुणचिन्तने दहरचिन्तनं नावर्तनीयम्। भिद्यते चेद्दहरमात्रचिन्तने गुणवद्दहरचिन्तनस्याकृतत्वाद्गुणचिन्तनार्थमावर्तनीयम् । गुणप्रतिसम्बन्धिदहरस्य चिन्तनमिति तत्र विशिष्टस्यानतिरिक्तत्वात् दहरमात्रचिन्तने

गुणप्रतिसम्बन्धिनो दहरस्य चिन्तितत्वाद्गुणमात्रचिन्तने दहरचिन्तनं नावर्तनीयम्। दहरोऽस्मिन्नन्तर आकाशस्स च तस्मिन्यदन्तस्तच्च गुणजातमुभयमन्वेष्टव्यमात्मानमेतांश्च सत्यान्कामान् इति दहरात्मनोऽपहतपाप्मत्वादिगुणानाञ्चान्योन्यनैरपेक्ष्येणोपास्यत्वावगमादिति प्राप्य—

गुणविशिष्टस्वरूपस्य गुणतत्सम्बन्धविशेष्यदहरात्मसमुदायरूपतया तस्य केवलदहरस्वरूपत्वाभावेन दहरमात्रचिन्तने विशिष्टस्वरूपचिन्तनासिद्ध्या गुणचिन्तने तत्प्रतिसम्बन्धिदहरचिन्तनमावर्तनीयम्। न हि इमेऽपहतपाप्मत्वादयो ब्रह्मगुणा इति गुणचिन्तनमिहाभिप्रेतम्; येन दहरचिन्तनमिहानपेक्षितं स्यात्। किन्तु 'अस्मिन्कामास्समाहिताः' इति गुणाधानोक्तौ के ते गुणा इत्यपेक्षायां निष्कृष्यापहतपाप्मत्वं विजरत्वमित्याद्युक्त्वा अपहतपाप्मेत्यादिधर्मिपर्यन्ताभिधायिशब्देन गुणानभिधाय धर्मिविशेषाकांक्षायां 'एष आत्मा' इति प्रस्तुतदहरात्मेत्यभिधानेनापहतपाप्मत्वादिप्रत्येकगुणप्रकारकदहरात्मत्वावच्छिन्नविशेष्यकचिन्तनं गुणचिन्तनमिति श्रुत्यभिप्रायोन्नयनेन तादृशचिन्तने अपहतपाप्मत्वादिनिष्ठप्रकारतानिरूपितदहरत्वावच्छिन्नविशेष्यतासिद्धये दहरत्वावच्छिन्नचिन्तनमपहतपाप्मत्वादिप्रत्येकगुणविशिष्टविषयकगुणचिन्तनेऽवश्यमावर्तनीयम्। गुणविशिष्टचिन्तने वैशिष्ट्यस्यापि विषयतया तस्य च विशेषणविशेष्योभयनिरूपिततया निरूपकभानं विना निरूप्यवैशिष्ट्यभानायोगाद्विशेष्यदहरचिन्तनं तत्तद्गुणविशिष्टविषयकगुणचिन्तनेऽवश्यमावर्तनीयम्। केवलदहराद्गुणविशिष्टरूपस्यातिरिक्तत्वात्। 'इन्द्राय राज्ञे पुरोडाशं निर्वपेत' (काठ० २-३-६) इत्यत्रेन्द्रस्यैवाधिराजत्वादिविशिष्टत्वेऽपि विशिष्टस्य सम्बन्ध्याकारस्य भिन्नत्वात्प्रदानावृत्तिवदिति सिद्धान्तितम्।

॥ इति प्रदानाधिकरणम् ॥

---

## (१९) ॥ अथ लिङ्गभूयस्त्वाधिकरणम् ॥

### सू०॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

पूर्वप्रकृतदहरविद्यैकवाक्यत्वेन नारायणानुवाकस्य तदर्थचिन्तेति सङ्गतिः।

'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' इत्यत्र—'दह्रं विपाप्मं परवेश्मभूतं' (तै० ना०) इत्यादिदहरविद्यावाक्यानन्तरं।

'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्।
विश्वं नारायणं देवं'

इत्यारभ्य, 'सोऽक्षरः परमः स्वराट्' इत्यन्ते तैत्तिरीये श्रुतम्। तत्र संशयः किं पूर्वप्रस्तुतदहरविद्योपास्यविशेषनिर्धारणमनेन क्रियते? किं वा सर्ववेदान्तोदितपरविद्योपास्यविशेषनिर्धारणमिति। तत्र पूर्वानुवाके दहरविद्यायास्सन्निहितत्वात्। 'पद्मकोशप्रतीकाशं हृदयञ्चाप्यधोमुखं' इति पूर्वानुवाके दहरवाक्योक्तहृत्पुण्डरीकस्य प्रत्यभिज्ञानात्। पूर्वत्र 'आत्मा गुहायां निहितोऽस्य जन्तोः' इत्युक्तात्मनोऽत्र 'आत्मा नारायणः परः' इति प्रत्यभिज्ञानाच्च प्रकृतदहरविद्योपास्यानुवादेन विश्वोपजीव्यत्वपरब्रह्मत्वनारायणत्वपरमात्मत्वब्रह्मत्वशिवत्वादिकं विधीयते। 'नारायणपरं ब्रह्म' इत्यादीनां 'स ब्रह्मा स शिवः' इत्यादिवाक्यानुरूप्यात्। न तु 'नारयणपरं ब्रह्म' इत्यादिवाक्यनिर्दिष्टानां मध्येऽन्यतरानुवादेनान्यतरस्य विधानम्। प्रमाणाभावात्। न च दहरविद्योपास्यानुरोधेन विश्वोपजीव्यत्वादिनानाधर्मविधाने वाक्यभेद इति वाच्यम्। नानाविद्योपास्यानुरोधेन नारायणत्वविधानेऽपि तद्दोषस्य तुल्यत्वात् सन्निहितानुवादौचित्येन दहरविद्यामात्रशेषत्वमेवास्यानुवाकस्य युक्तमिति प्राप्तस्य—

वेदान्तोदिततत्तद्विद्यावेद्यविशेषनिर्धारणमुखेन सर्वपरविद्याशेषत्वेऽस्मिन्ननुवाके तत्तद्विद्योपास्यवाचिपदनारायणपदसमभिव्याहारात्मकानि 'नारायणपरं ब्रह्म' इत्यादीनि बहूनि लिङ्गानि चिह्नानि दृश्यन्त इति भूयोलिङ्गादस्यानुवाकस्य परविद्यावेद्यविशेषस्य निर्धारणमुखेन परविद्याशेषत्वं न तु सन्निहितदहरविद्यावेद्यविशेषनिर्धारणमुखेन दहरविद्यावाक्यमात्रशेषत्वम्। सन्निधेरपि वाक्यस्य बलीयस्त्वात्। अस्यानुवाकस्य तत्तद्विद्याशेषत्वे तत्तद्विद्यावेद्यवाचिपदसमभिव्याहाररूपवाक्यस्य प्रत्येकमेकैकस्यैव चिह्नत्वेऽपि परविद्याशेषत्वे दहरविद्येतरविद्याशेषत्वे वा साध्ये तेषां बहूनां साधकतया भूयस्त्वादित्युक्तम्। दहरविद्यामात्रशेषत्वपूर्वपक्षे नारायणपदावृत्तिवैयर्थ्यञ्च भूयस्त्वादित्यनेन सूचितम्। 'तत्त्वमसि'

(छा० ६-८-७) इति वाक्यं सामान्यतः 'सन्मूलाः' (छा० ६-८-४) इत्यादि-प्राप्तसदात्मकत्वं विशेष उपसंहृत्य प्रदर्शयितुमिव भूयोवाक्यरूपचिह्नप्राप्तनानापरविद्याशेषत्वं दहरविद्याविशेष उपसंहृत्य प्रदर्शनोपक्षीणं 'पद्मकोशप्रतीकाशं' इति वाक्यं नास्यानुवाकस्य दहरविद्यामात्रशेषत्वं सन्निधिप्राप्तमुपोद्बलयितुमीष्टे । 'आत्मा वारे द्रष्टव्यः' (बृ० २-४-५) 'तमेवैकं जानथात्मानं' (मु० २-२-५) 'आत्मानमेव लोकमुपासीत' (बृ० १-४-१५) इत्याद्युक्तवेद्यानुवाको न प्रकृतात्ममात्रप्रत्यभिज्ञापनायालम् । 'सहस्रशीर्षं देवं' इत्यादिद्वितीया च 'येनावृतं खञ्च दिवं महीञ्च' इतिवत् प्रथमार्थे ज्ञेया । 'तस्मिन्यदन्तस्तदुपासितव्यं' इत्युपासिगतकृत्प्रत्ययेनोपास्यस्य कर्मत्वाभिधानेन द्वितीयानुपपत्त्या विधिपदाध्याहारापातात् । अस्यानुवाकस्य दहरविद्यामात्रशेषत्वे पूर्वोत्तरवाक्यानामर्थस्वभावविरोधः विधिपदाध्याहारः प्रथमान्तपदास्वारस्यञ्च । सर्वविद्योपास्यविशेषनिर्धारणपरत्वे द्वितीयान्तपदास्वारस्यं न विधेरध्याहारो नार्थस्वभावविरोधश्च । तस्मात्सर्वविद्योपास्यनिर्धारणपरत्वमस्यानुवाकस्य युक्तमिति सिद्धान्तितम् ।

॥ इति लिङ्गभूयस्त्वाधिकरणम् ॥

---

## (२०) ॥ अथ पूर्वविकल्पाधिकरणम् ॥

**सू०॥ पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४४ ॥**

**सू०॥ अतिदेशाच्च ॥ ४५ ॥**

**सू०॥ विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥**

**सू०॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥**

**सू०॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ४८ ॥**

**सू०॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥**

**सू०॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥**

वाक्यात्प्रकरणापरपर्यायसन्निधिबाधेन नारायणानुवाकस्य सर्वपरविद्योपास्यविशेषनिर्धारकत्वेऽपि प्रकृते बाधकाभावेन तादृशप्रकरणेन मनश्चिदादीनां क्रियामयक्रत्वङ्गत्वं स्यादेवेति शङ्कयोत्थानात्सङ्गतिः ।

'पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत्' इत्यस्मिन्नधिकरणे— 'मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इति मनश्चितादयोऽग्नयो वाजसनेयकेऽग्निरहस्ये श्रुताः । साम्पादिकत्वेन, साम्पादिकं सम्पादितं, तदर्हतीति ठक् । सम्पादमर्हतीति साम्पादिकम् । मनोव्यापारादिष्विष्टकचितत्वेनानुसन्धानात्तथात्वेनानुसंहितम् । मनोव्यापारादिकं मनश्चितादिकर्मचितः वागिन्द्रियव्यतिरिक्तकर्मेन्द्रियचितः कायिककर्मचितो वा । अग्निचितो जाठराग्निचितः । चयननिर्वर्तितस्थले चाग्निशब्दप्रयोगोऽग्निस्थानत्वेन लाक्षणिकः ।

तत्र संशयः । किं मनश्चितादयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपाः किं वा विद्यामयक्रत्वनुप्रवेशेन विद्यारूपाः क्रियामयक्रत्वङ्गभूताः विद्यामयक्रत्वङ्गभूताः इति यावत् । तत्र पूर्वपक्षः । चित्याग्नित्वेन सम्पादितानां मनश्चितादीनां फलत्वाय क्रत्वनुप्रवेशमवेक्षमाणानां स्वसन्निहितवाक्ये क्रतुविध्यभावात् पूर्वस्मिन्ब्राह्मणे 'असद्वा इदमग्र आसीत्' इत्यादिना इष्टकचिताग्नेः प्रकृतत्वात्तस्य च क्रियामयक्रत्वव्यभिचरितत्वेन तेन च क्रियामयक्रतोस्सन्निहितत्वेन तत्प्रकरणगृहीतत्वावश्यम्भावेन मनश्चितादीनामिष्टकचिताग्निना सह विकल्प्यमानानां क्रियामयक्रत्वङ्गतया क्रियारूपवदेव विद्यारूपाणामप्येषां क्रियामयक्रत्वङ्गतया क्रियारूपत्वस्य मानसग्रहवदुपपत्तेः । यथा द्वादशाहेऽविवाक्यसंज्ञके दशमेऽहनि मानसग्रहस्य मनोनिष्पाद्यग्रहणासादनस्तोत्रशस्त्रप्रत्याहरणभक्षणैरूपयोगितया विद्यारूपस्यापि क्रियामयद्वादशाहाख्यक्रत्वङ्गत्वेन क्रियारूपत्वं तथात्रापि मनश्चितादीनां विद्यारूपाणामपि क्रियारूपत्वम् ।

नन्विष्टकचिताग्निना विद्यारूपाणां मनश्चितादीनां कथं विकल्पः । तुल्यकार्ये हि व्रीहियवादीनां विकल्पो दृश्यते । न हीष्टकचिताग्निकार्यमग्निधारणरूपं मनश्चिताद्यग्निना कथञ्चिदपि सम्पादयितुं शक्यम् । अत एव 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इति फलातिदेशश्च न युज्यत इति

चेत्; न हीष्टकचिताग्नेरुत्तरवेदिवदाहवनीयधारणार्थत्वेनाङ्गत्वं येनोक्ताशंका स्यात्। किन्तु 'पशुकामश्चिन्वीत' इति श्रवणात् क्रत्वङ्गाग्निनः पुरुषार्थः। 'अभागिप्रतिषेधात्' (मी० सू० १-१-५) इति सूत्रे वार्तिककृता तथोक्तत्वात्। विद्यारूपैरपि मनश्चितादिभिः पशुरूपफलसम्भवात् इष्टकचिताग्निना विकल्पनं तत्फलातिदेशश्च युच्यते। ततश्चेष्टकचिताग्नेः फलार्थतया तेन स्वकार्याग्निधारणमपश्यन्त्या उत्तरवेद्याः प्राप्तिसम्भवेन तथाहवनीयधारणसिद्धिरिति द्रष्टव्यम्।

किञ्च 'तेषामेकैक एव तावानसौ पूर्वः' इतीष्टकचितस्याग्नेर्बुद्धिस्थत्वेनाग्नेः कार्यं मनश्चितादिष्वतिदिश्यते। ततस्तेन तुल्यकार्यत्वाद्विकल्पः। तस्मादिष्टकचिताग्निवत्तत्क्रत्वङ्गतया मनश्चितादयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा एव। ननु 'तेषु ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसा स्तुवन्मनसा शंसन् यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म क्रियते मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयः क्रियते' इति वचनात्स्वदेशे विद्यामयक्रतोः प्रतीयमानतया विद्यारूपमनश्चितादीनां तत्रैव क्रतावङ्गत्वेन निवेशौचित्यात् नेष्टकचिताग्निना विकल्पावकाश इति चेन्न। विधिपदाश्रवणात् फलसम्बन्धाप्रतीतेश्चात्र विद्यारूपक्रतुकल्पनस्य न्यायविदकृत्यत्वात् विकल्प एवागत्याश्रयणीयः।

ननु वाङ्मनश्चक्षुरादिव्यापाराणामिष्टकादिवच्चयनानुपपत्तेर्मनसा सम्पादिताग्नित्वेन विद्यारूपत्वे सिद्धेऽपि 'ते हैवेते विद्याचित एव' इत्यवधारणं विद्यामयक्रत्वनुप्रवेशेन विद्यारूपत्वज्ञापनार्थमिति न मनश्चितादीनां क्रियामयक्रत्वनुप्रवेशसम्भव इति चेन्न। तर्हि विद्याचित इत्यत्र विद्याशब्दस्य लक्षणाप्रसङ्गात्। किन्तु विद्यचिता एव विद्यात्मकाश्चिता एव नाविद्यात्मकाश्चक्षुरादिव्यापाररूपाः चिता इति मुख्यार्थत्वस्यैवोचितत्वेन मनश्चक्षुरादिव्यापाराणां चित्याग्नित्वव्यवच्छेदकतया तेन मनश्चितादीनां विद्यारूपक्रत्वनुप्रवेशासिद्धेः। तस्मादिष्टकचिताग्निना विकल्प एव मनश्चितादीनामिति मनश्चितादयः क्रियारूपा एवेति।

सिद्धान्तस्तु—नैतद्युक्तम्; यन्मनश्चितादीनां क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वमिति। तेषां 'ते हैते विद्याचित एव' इति विद्यारूपक्रत्वङ्गत्वस्य

निर्धार्यमाणत्वात् । ते मनश्चितादयो विद्याचित एव विद्यायै विद्यार्थं विद्यारूपक्रत्वर्थं चित एव चिता न भवन्तीति नेति । विशेषणसङ्गतैवकारेणायोगव्यवच्छेदेन विद्याङ्गत्वं ह्यनेन श्रुतिवाक्येन निर्धार्यते । न च विद्यारूपाश्चित इति कर्मधारय एवोचित इति शक्यं वक्तुम् । 'विद्यया हैत एवंविदश्चिता भवन्ति' इति हेतुतृतीयया तद्वाक्यविवरणेन तदनुरोधादुक्तसमासस्यैव न्याय्यत्वात् । लक्षणायाश्च प्रामाणिकत्वात् । किञ्च मनश्चितादिसन्निधावेव तेषु 'मनसैवाधीयन्त' इत्यारभ्य 'मनोमयः क्रियते' इत्यन्तेन विद्यारूपक्रतोः प्रतीत्या तदतिक्रमे कारणाभावेन तेषां फलवत्त्वाय तत्रैव विद्यारूपक्रतावन्वयौचित्येन विकल्पेन क्रियारूपक्रतावनुप्रवेशस्यायुक्तत्वात् । न च विधिपदाश्रवणात् न तत्प्रतीतिसम्भव इत्यपूर्वार्थप्रतीत्या विधिकल्पनस्य न्याय्यत्वात् श्रुतहानायोगात् ।

किञ्च मनश्चितादीनां श्रुतिलिङ्गवाक्यैर्विद्यारूपक्रतौ विनियोगेन तद्बाधो न युक्तः । श्रुत्यादीनां सन्निधेर्बलीयस्त्वात् । तथा हि 'विद्यया हैत एवंविदश्चिता भवन्ति' इति हेतुतृतीयया विद्यायाश्शेषित्वावगमेन श्रौतोऽयं विनियोगः । लिङ्गञ्च 'तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपते' इति । सर्वकालव्यापित्वेन सर्वभूतकर्तृत्वेन च । तस्मात्सम्पादितस्य चयनस्य परिमितकालकर्तृक्रियामयेष्टकचिताग्निना तुल्यकार्यतया क्रियामयक्रत्वनुप्रवेशासम्भवो विद्यामयक्रत्वनुप्रवेशे लिङ्गम् । विद्यामयस्य क्रतोस्सर्वकालवर्तित्वेन सर्वभूतकर्तृत्वेन तदनुसंहिततया तादृशं चयनं तादृशक्रत्वन्वयीति विद्यामयक्रतौ मनश्चितादीनां लैङ्गिकोऽयं विनियोगः । तान् हैतानेवंविदे चिन्वन्तीति समभिव्याहारात्मकं वाक्यं विद्याविशिष्टपुरुषस्य कृते चिता भवन्तीति चतुर्थ्या पुरुषशेषित्वप्रतीतावपि विद्याशेषित्वं समभिव्याहारात्मकवाक्यावसेयमिति वाक्यप्रमाणकोऽयं विनियोगः । तदेवं श्रुतिलिङ्गवाक्यैर्मनश्चितादीनां विद्यात्मकक्रत्वङ्गत्वसिद्धेर्दुर्बलेन सन्निधिना क्रियात्मकक्रत्वङ्गत्वमयुक्तम् ।

ननु तेषु मनसाधीयतेत्यादिवाक्ये विधिप्रत्ययाश्रवणात्कथं क्रियात्मकक्रतोरन्यो विद्यात्मकः क्रतुः प्रतीयेत ; यत्रैषां श्रुत्यादिभिर्विनियोगः स्यादिति चेन्न । श्रुत्यादिना गृहस्तोत्रशस्त्रादिभिर्मनसा सम्पादितैर्यज्ञानुबन्धैर्यज्ञाङ्गैश्च न्यग्रोधस्तम्भिनीषु यागीयद्रव्यसंस्कारभूताभिषवभक्षणादिश्रवणेन यागकल्पनवद-

त्रापि यागकल्पनेऽवश्यम्भाविनि विधिप्रत्ययस्य कल्प्यत्वात् । पूर्वतन्त्रे 'वचनानि त्वपूर्वत्वात्' (मी० सू० ३-५-२१) इत्यत्र तथा व्युत्पादितत्वात् । न चात्र फलसम्बन्धाप्रतीतिश्शङ्कनीया । 'तेषामेकैक एव तावान्यावानसौ पूर्वः' इतीष्टकचिताग्निवत् भावप्रापकातिदेशेनेष्टकचितस्याग्नेः स्वशेषिभूतक्रियारूपक्रत्वनुप्रवेशेन क्रतुफलवदत्रापि स्वशेषिविद्यारूपक्रतुनिर्वर्तनद्वारा क्रतुफलसम्बन्धस्य प्रतीतेः फलकामनायां स्वर्गः फलं इतरथापवर्ग इति विवेकः । न चेष्टकचिताग्निवद्भावाय मनश्चितादीनां क्रियामयक्रत्वनुप्रवेशेनापि भवितव्यम् । यावत्साधर्म्यस्य लोकवेदयोः क्वाप्यभावात् विवक्षितधर्ममुखेनैव साधर्म्यस्य वाच्यत्वात्, अधिकस्य प्रकृतानुपयोगाच्च । 'स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः' इत्यत्र मृत्युलोकवासित्वादिधर्माभावेऽपि संहर्तृत्वादिविवक्षितधर्ममादायैव साधर्म्याङ्गीकारात् । तस्माच्छ्रुत्यादिभिः प्रकरणात्प्रबलैर्मनश्चितादीनां विद्यामयक्रत्वङ्गत्वं सिद्धम् ।

किञ्च परेण ब्राह्मणेनास्यापि मनश्चितादेस्ताद्विध्यं तद्विधत्वं विद्यामयप्रतिपादित्वमवगम्यते । 'अयं वाव लोक एषोऽग्निचितः तस्याप एव परिश्रिताः' इत्यादिना 'स यो ह वैतदेवं वेद लोकंपृणानामेनं भूतमेतत्सम्पद्यत' इति पृथक्फला विद्यैव विहिता । 'अयं वाव लोको भूर्लोक एषोऽग्निचितः, तत्राग्निचितत्वदृष्टिः कार्या । 'तस्याप एव परिश्रितास्समुद्रा एव परिस्तरणानि स यो हैतदेवं वेद' इति लिङ्गव्यत्ययश्छान्दसः । एतमग्निं वेदेत्यर्थः । लोकंपृणानां, 'पॄ पालनपूरणयोः' लोकं पूरयन्तीं भुवमित्यर्थः । ततश्चाग्निरहस्यस्य क्रियैकविषयत्वाभावात् परस्य ब्राह्मणस्येवास्यापि ब्राह्मणस्य स्वरसतः प्रतीयमानविद्याविषयत्वमेव युक्तम् । विद्यामयानां मनश्चितादीनां विद्याविषये बृहदारण्यकेऽनुबन्धस्य प्राप्तत्वेऽपि मनश्चितादिषु सम्पादनीयानामग्न्यङ्गानामग्निरहस्ये तावदिष्टकचिताग्नावुक्तत्वात् तत्सन्निधावेतेषामनुबन्धस्यौचित्यप्राप्तत्वादिति मनश्चितादीनां विद्यारूपक्रत्वङ्गत्वेन विद्यारूपत्वमिति ॥

॥ इति पूर्वविकल्पाधिकरणम् ॥

---

## (२१) ॥ अथ शरीरेभावाधिकरणम् ॥

### सू०॥ एक आत्मनश्शरीरे भावात् ॥ ५१ ॥

### सू०॥ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

सर्वविद्योपास्यविशेष्यभूतपरमात्माकारचिन्ता उक्ता । अथ तद्विशेषणीभूतप्रत्यगात्माकारचिन्ता प्रवर्तते । 'आत्मेति तूपगच्छन्तीति' (ब्र० सू० ४-१-३) सूत्रोक्तन्यायेन प्रकृतिवियुक्तप्रत्यगात्मशरीरकपरमात्मनस्सर्वविद्योपास्यत्वात् ।

तत्र 'एक आत्मनश्शरीरे भावात्' इत्यस्मिन्नधिकरणे—किं परमात्मविशेषणीभूतः प्रत्यगात्मा ज्ञातृत्वकर्तृत्वभोक्तृत्वनित्यत्वमात्राकारोऽनुसन्धेयः किं वा अपहतपाप्मत्वाद्याकारः इति संशय्य प्रत्यगात्मनः कर्मसु कर्तृत्वेन शरीरे वर्तमानस्यैव प्रत्यगात्मनस्तथात्वेन ज्ञातृत्वाद्यनुसन्धानेन विना कर्मानुष्ठानासिद्धेः, तावदनुसन्धानेनैव कर्मानुष्ठानतत्फलभोक्तृत्वोपपत्तेरपहतपाप्मत्वाद्यनुसन्धाने नियामकाभावादप्रयोजकत्वाच्च उपासनेऽप्यनुष्ठानाय तदावश्यकतया तेनैवाकारेण प्रत्यगात्मनोऽनुसन्धानं युक्तम् । न च 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छा० ३-१४-१) इति यथोपासनं फलवचनेन 'स्वेन रूपेणाभिनिष्पद्यते' (छा० ८-१२-२) इति अपहतपाप्मत्वादिप्राप्तेः फलत्ववचनेन तदाकारः प्रत्यगात्मानुसन्धातव्य इति वाच्यम् । 'तं यथायथोपासते' (मुद्गलोप० ख० ३) इति श्रुत्या तस्योपास्यपरमात्मविषयत्वादित्येवं प्राप्य—

प्रत्यगात्मनोऽप्युपास्यपरमात्मशरीरतयोपास्यकोटिप्रविष्टत्वेन 'तं यथा यथोपासते तथैव भवति' इति यथोपासनं फलश्रुत्या तं यथा यथेत्यत्र तच्छब्दस्य प्रत्यगात्मशरीरकपरमात्मपरतया विशेषणीभूतप्रत्यगात्मन्यपि यथायथेत्युक्तप्रकारान्वयेन प्रत्यगात्मनोऽपहतपाप्मत्वादेः स्वाभाविकप्रकारत्वेन 'स्वेन रूपेणाभिनिष्पद्यते' (छा० ८-१२-३) इति अपहतपाप्मत्वादेः प्राप्यत्ववचनेन 'एवं क्रतुर्हमुं लोकं प्रेत्याभिसम्भवितास्मि' इति प्राप्यस्यानुसन्धेयत्ववचनात् ब्रह्मविद्याङ्गकर्मसु कर्तृत्वभोक्तृत्वबुद्धित्यागावश्यम्भावेन चिरानुवृत्तकर्तृ-

त्वादिवुद्धिनिवृत्तेः तद्विरुद्धापहतपाप्मत्वाद्यनुसन्धानमन्तरेणासम्भवाच्चापहतपाप्म-त्वादिगुणकप्रत्यगात्मशरीरकः परमात्मा सर्वविद्योपास्य इति विशेषणीभूतः प्रत्यगात्मापहतपाप्मत्वादिधर्मा सर्वत्र चिन्तनीय इति सिद्धान्तितम् ।

॥ इति शरीरेभावाधिकरणम् ॥

---

## (२२) ॥ अथाङ्गावबद्धाधिकरणम् ॥

### सू०॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

### सू०॥ मन्त्रादिवद्वाविरोधः ॥ ५४ ॥

परमात्मोपासने सर्वत्र प्रत्यगात्मानुप्रवेशेऽपि नानाशाखाधीतोद्गीथादिषु उपासनानुप्रवेशो न सम्भवतीति शङ्कयोत्थानात्सङ्गतिः ।

'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेद'मित्यस्मिन्नधिकरणे— 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा० १-१-१) 'लोकेषु पञ्चविधं सामोपासीत' (छा० २-२-१) 'उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवो-क्थमियमेव पृथिवी' उक्थे कर्माङ्गभूतशस्त्रे पृथिवीत्वदृष्टिः कर्तव्या । 'अयं वाव लोक एषोऽग्निश्चित.' भूलोके अग्निचितत्वदृष्टिः कार्या । एवमाद्याः कर्माङ्गोद्गी-थाद्याश्रया उपासना विहिताः । ताः किं यत्र शाखायां विधीयन्ते क्रत्वङ्गो-द्गीथादिषु तच्छाखाधीतेष्वेव उद्गीथादिषु कर्तव्याः किं वा नानाशाखा-धीतेष्वपि कर्तव्या इति संशयः । तत्र पूर्वपक्षः । सामवेद एव ताण्डिशाखाप्रभृतिषु बह्वीषु शाखासु श्रूयमाणेषु स्वरवर्णविशेषादिभि-र्भिन्नेषु सामभागेषूद्गीथेषु क्रतुमध्ये प्रयोगाय तत्तत्काले प्रसक्तेष्वपि आप्त्यादिगुणविशिष्टतया हिरण्मयप्राणाकाशादिदृष्टियुक्ततया ताण्डिशाखादिवि-हितमुद्गीथादिविषयोपासनं ताण्डिशाखाधीतोद्गीथ एव कर्तव्यं न तु शाखान्तरा-धीतेऽपि क्रतुमध्यगते ताण्डिशाखागतोद्गीथोपासनविधिवाक्यस्थोद्गीथशब्दस्य व्यक्तिवचनन्यायेन स्वरवर्णादिभिन्नताण्डिशाखाधीतोद्गीथपरत्वेन तस्यैव तत्रत्योपा-सनान्वयौचित्यात् शाखान्तराधीतोद्गीथस्यासन्निहितत्वात् । लोके गामानयेत्यादौ सन्निहितव्यक्तिबोधस्यैव सर्वानुभवसिद्धत्वात् । गोपदस्य सामान्यशक्त्या सर्वगो-

व्यक्त्युपस्थापनसंभवेऽपि उत्सर्गन्यायावधृतसन्निहितव्यक्तितात्पर्यबलेन सन्निहित-व्यक्तेरेवोपस्थित्यवश्यम्भावात् योग्यतायास्सर्वशब्दसाधारणत्वेन व्यक्तिवचने विशेषव्यक्तिकल्पनवैयर्थ्यापातात्। उद्गीथश्रुतेस्सर्वव्यक्तिषु शक्तिरूपसम्बन्धतौल्येऽपि उपासनविधिवाक्यस्थोद्गीथशब्दतदर्थोद्गीथयोरेकशाखासमाम्नानरूपासाधारणसम्बन्धसहकारेण सामान्यसम्बन्धमूलकोपस्थितेर्विशेषनियन्त्रितत्वेन तस्यैवोपासनान्वयितया तद्विधेर्विशेषविषयत्वसिद्धेश्च। तस्माद्विहितोद्गीथाद्युपासनं तत्तच्छाखाधीतोद्गीथादिष्वेव कर्तव्यमिति।

नैतद्युक्तम्। तत्तच्छाखाधीतोद्गीथादिष्वेव तत्तच्छाखाविहितोद्गीथाद्युपासनमिति तत्तद्विधिवाक्यगतोद्गीथादिश्रुतेरविशेषेण प्रवृत्ततया सर्वव्यक्तीनामप्युपस्थितेः, तथा व्यक्तिविशेषेषूपासनव्यवस्थापनासम्भवात्, व्यक्तिवचनानां सन्निहितव्यक्त्यनुभवतात्पर्यस्य पदजन्यपदार्थोपस्थितिव्यवस्थापकत्वायोगात् सन्निधेश्चोक्तप्रकारेण विशेषे तात्पर्यस्य सर्वव्यक्त्यविशिष्टतया अनुभवव्यवस्थापकत्वासिद्धेश्च। गामानयेत्यादावखिलव्यक्तीनामानयनान्वयबोधे सत्यपि योग्यतावशात् सन्निहितव्यक्तावानयनादिरूपकार्यस्यैव पर्यवसानमित्यभ्युपगमात्। सर्वशाखाधीतेष्वप्युद्गीथादिषु यत्र क्वचित्क्रत्वन्विते तदुपासनस्य कर्तुं शक्यतया तद्वत्तद्व्यवस्थासिद्ध्ययोगात्। एकशाखासमाम्नानरूपासाधारणसम्बन्धमूलकव्यक्तिविशेषोपस्थितेश्च समवायसम्बन्धमूलकघटादिपदजन्याकाशोपस्थितितुल्यतया शाब्दबोधानङ्गत्वेनोपासनविधिवाक्यार्थव्यवस्थापकत्वासम्भवात्। वस्तुतस्तु व्यक्तिवचनन्यायस्य प्रायिकत्वेन प्रकृते तदनवतारस्यादोषत्वाच्च न किञ्चिदेतत्। समानशाखाम्नानस्य पाठसादेश्यरूपस्थानप्रमाणतया तेनाविशेषप्रवृत्तोद्गीथादिश्रुतेस्सङ्कोचरूपबाधासम्भवाच्चेति उद्गीथादिश्रुत्या सर्वसाधारणोपासनसिद्धिः।

किञ्चाङ्गाङ्गिभावसम्बन्धरूपार्थस्वभावात्सर्वेषामेवोद्गीथादीनामविशेषेण क्रतुना सम्बन्धिनोपस्थापितत्वात् उपस्थितानां मध्ये केषाञ्चित्परिग्रहे केषाञ्चित्परित्यागे च विनिगमकाभावात् सर्व एवोद्गीथादयोऽपरपदार्थोपासनेन सम्बन्ध्यन्त इति सर्वेष्वप्युद्गीथादिषूपासनसिद्धिः। घटमानयेत्यादौ पटादीनां परित्यागेऽनुपस्थितिरेव नियामिका। विप्रकृष्टघटव्यक्तीनां परित्यागे त्वयोग्यतैव। सन्निहितानां परिग्रहे योग्यता नियामिका। प्रकृते च सन्निधियोग्यतादीनामविशेषेण सर्वपरिग्रह एव न्याय्यः। न हि नानाशाखागतक्रतोर्भेदेन तत्तत्क्रतुना

तत्तदङ्गभूतोद्गीथादीनामेवोपस्थितिरिति शक्यं वक्तुम्। सर्ववेदान्तप्रत्ययन्यायेन क्रतोरेकत्वेनाविशेषेण सर्वेषामुपस्थितेर्न्यायप्राप्तत्वादिति सर्वोद्गीथादिष्वप्युपासन-सिद्धिरनिवार्या।

किञ्च उद्गीथादिषूपासनान्वयितावच्छेदकं[नोद्गीथत्वं]क्रतुबहिर्भूताध्ययना-वस्थोद्गीथसाधारणत्वेन तेष्वप्युपासनप्रसक्त्या 'अङ्गावबद्धास्तु न शाखासु' (ब्र० सू० ३-३-५३) 'अङ्गेषु यथाश्रयभावः' (ब्र० सू० ३-३-५९) इति सूत्रानु-पपत्तेः। किन्तु क्रत्वङ्गोद्गीथत्वमिति क्रत्वङ्गत्वाविशेषात् सर्वेष्वप्युद्गीथादिषु उपासनसिद्धिरङ्गीकार्या। न च शाखान्तराम्नातानां शाखान्तरविनियोगे विरोध-श्शङ्क्यः। मन्त्रादिवत्तदविरोधोपपत्तेः। बह्वृचपठितस्य 'यो जात एव प्रथमो मनस्वान्' इति सूक्तस्य 'अध्वर्यवे सजनीयं शस्यं' इति शाखान्तरे विनियोग-दर्शनात्। तथा 'पशुना यजेत' इत्यत्र पशुत्वजातेरेकत्वसंख्यायाः, 'अरुणयै-कहायन्या' इत्यरुणिमगुणस्यैकहायनीद्रव्यस्य, 'श्येनचितं चिन्वीत' इति साहश्यस्य, 'वेदं कृत्वा वेदिं कुर्यात्' इति क्रमस्य प्रयाजादिकर्मणाञ्च शाखाभेदेनोत्पत्तिविनियोगयोर्दर्शनात्। तस्मादविशेषप्रवृत्तोद्गीथादिश्रुत्या नाना-शाखाधीतेष्वप्युद्गीथादिषूपासनमनुप्रविशत्येवेति सिद्धान्तः।

॥ इति अङ्गावबद्धाधिकरणम् ॥

---

## (२३) ॥ अथ भूमज्यायस्त्वाधिकरणम् ॥

## सू०॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५५ ॥

पूर्वाधिकरणप्रस्तुतोद्गीथादौ 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा० १-१-१) इति व्यस्तस्योपासनं 'पृथिवी हिङ्कार' इत्यादिना समस्तस्योपासनञ्च श्रुतिसिद्धमित्युभयानुष्ठानवत् वैश्वानरविद्यायामपि व्यस्तस्यावयवस्य समस्तस्य द्युलोकादिमूर्धादिपादान्तावयवसमुदायस्य चोपासनं श्रुतिसिद्धमित्युभयानुष्ठानं स्यादिति शङ्कया सङ्गतिः।

'भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति' इत्यत्र—'प्राचीनशाल औपमन्यवः' (छा० ५-११-१) इत्यारभ्य वैश्वानरविद्या आम्नाता। तत्र

वैश्वानरस्त्रैलोक्यशरीरः परमात्मा श्रुतः स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः । तत्र द्यौर्मूर्धा आदित्यश्चक्षुः वायुः प्राण आकाशस्सन्देहो मध्यकाय इत्यर्थः । आपो वस्तिर्मूत्रस्थानं पृथिवी पादावित्यवयवविशेषाः । तत्र संशयः । किं त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्तव्यम् उत व्यस्तस्य समस्तस्य च अथ समस्तस्यैवेति । तत्रोपक्रमे व्यस्तोपासनोपदेशात् तदुपासनं कर्तव्यम् । तथा ह्युपदिश्यते । औपमन्यवादयः किलोद्दालकषष्ठाः केकयमश्वपतिमुपसङ्गम्य 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' (छा० ५-११-६) इति पप्रच्छुः । स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीनुक्तवद्भ्यो मूर्धादिषु व्यस्तोपासनञ्चोक्तवान् । 'अत्यन्नं पश्यति प्रियं भवति अस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति । एष वै सुतेजा आत्मा वैश्वानरः' (छा० ५-१२-२) इत्यादिना तत्तदुपासनेषु उपास्यस्य वैश्वानरत्वञ्चाह । अत्त्यन्नमन्नमत्ति । पश्यति प्रियं प्रियं पश्यति । भवत्यस्य ब्रह्मवर्चसं कुले, अस्य कुले ब्रह्मवर्चसं भवतीति सम्बन्धः । अत्र फलवचनेन व्यस्तोपासनविधिकल्पनया व्यस्तोपासनं कर्तव्यम् । परत्र 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छा० ५-१८-१) इति द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहारः प्रादेशत्वेनानुगतधर्मेणोपसंहारः । 'मूर्धा ते व्यपतिष्यत् यन्मां मा गमिष्यः' (छा० ५-१२-२) 'अन्धोऽभविष्यत् यन्मां नागमिष्य' (छा० ५-१३-२) इत्यनर्थवचनञ्च मत्समीपागमनमन्नफलगुणनामादिज्ञानं च विना व्यस्तोपासनेऽनर्थापत्तिपरं न व्यस्तोपासनमात्रे । सर्वलोकसर्वभूतसर्वात्मान्नादनरूपफलवचनञ्च पूर्वोक्तव्यस्तोपासनमेवानुवदतीति प्रथमः पक्षः ।

द्वितीयस्तु—व्यस्तोपासनवत्समस्तोपासनमपि कर्तव्यम् । तत्रापि 'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' (छा० ५-१८-१) इति ब्रह्मानुभवरूपपृथक्फलवचनेन विधिकल्पनावश्यम्भावात् । न हीद पूर्वोक्तफलानुवादरूपम् । सर्वेष्वित्यादिना विशेष्यमाणतया अन्नशब्दाभिधेयब्रह्मानुभवस्यैव प्रतीयमानत्वात् । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत' (छा० ५-२४-३) इत्यादिना सर्वपापविनिर्मोकरूपफलश्रवणाच्च । न चैतावता विधेयभेदेन महावाक्यभेदश्शङ्क्यः । नामाद्युपासनतत्फलरूपानेकार्थप्रतिपादनेऽपि भूमविद्यावाक्यवदत्राप्येकवाक्यत्वो-

पपत्तेः । तत्र नामाद्युपासनानां प्रासङ्गिकतया तद्भेदेऽपि प्रधानप्रतिपाद्यभूमैक्यवत् अत्रापि व्यस्तोपासनानां प्रासङ्गिकत्वेन समस्तोपासनस्य प्रधानप्रतिपाद्यस्यैक्येन महावाक्यभेदाप्रसङ्गात् । 'तरति शोकमात्मवित्' (छा० ७-१-३) इत्युपक्रम्य 'आत्मैवेदं सर्वं' (छा० ७-२५-२) इत्युपसंहारेण भूम्नः प्राधान्यवत् 'अश्वपतिर्वै भगवन्तोऽयं केकयस्संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम' (छा० ५-११-४) इत्युपक्रम्य 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छा० ५-१८-१) इत्युपसंहारात् समस्तोपासनं प्रधानप्रतिपाद्यम् । वैश्वानरात्मोपदिदिक्षया ज्ञाताज्ञातांशजिज्ञासुं केकयं प्रति औपमन्यवादिभिरुपक्षिप्ततया व्यस्तोपासनं प्रासङ्गिकमिति न वाक्यभेद इति ।

सिद्धान्तस्तु—भूम्नो भूयसः समस्तस्यैवोपासनं ज्यायः प्रामाणिकम् । एकवाक्यत्वावगतेः । तथा हि 'प्राचीनशाल औपमन्यवः' (छा० ५-११-१) इत्युपक्रम्य 'उद्दालको ह वै भगवन्तोऽयमारुणिस्संप्रतीममात्मानमध्येति तं हन्ताभ्यागच्छाम' (छा० ५-११-२) इति वैश्वानरात्मबुभुत्सया औपमन्यवादय उद्दालकमुपेत्य तत्र वैश्वानरात्मवेदनमलभमानास्तेन च सहाश्वपतिं वैश्वानरात्मवेदिनमुपसङ्गम्य 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' (छा० ५-११-६) इति पृष्ट्वा तत्सकाशात्परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तमुपास्यमवगम्य तत्फलञ्च सर्वलोकसर्वभूतसर्वात्मान्नब्रह्मानुभवरूपञ्चावगतवन्त इत्युपसंहारतो वाक्यस्यैकवाक्यत्वमवगम्य निश्चिते चैकवाक्यत्वे सति स्वर्लोकादिषूपासनवचनं फलवचनञ्च समस्तोपासने व्यस्तोपासनं तत्फले ब्रह्मानुभवे च व्यस्तोपासनफलभूतान्नादनप्रियपुत्रादिसमस्तभोग्यजातञ्चावगतमिति दर्शयितुमनुवादरूपं समस्तोपासनस्तुतय इति मन्तव्यम् । यथा वैश्वानरे (अष्टौ द्वादश) [अष्टादश]कपालस्तुतये तदेकदेशसदृशाष्टाकपालादेस्तत्फलस्य ब्रह्मवर्चसादेश्चानुवादस्तद्वत् । अन्यथा हि महावाक्यभेदप्रसङ्गः । प्रतिपाद्यभेदात् । प्रथमपूर्वपक्षे सर्वपापविनिर्मोकादिफलवचनानर्थक्यञ्च ।

न च भूमविद्यायां प्रासङ्गिकनामाद्युपासनरूपार्थभेदेऽपि प्रधानप्रतिपाद्यभेदाभावादेकवाक्यत्ववत् अत्राप्येकवाक्यत्वं शक्यं वक्तुम् । उपक्रमाद्यवगतप्रधानप्रतिपाद्यार्थोपयोगित्वेन प्रसक्तत्वं हि प्रासङ्गिकत्वम् । 'एष तु वा अति-

वदति यस्सत्येनातिवदति ' (छा० ७-१६-१) इत्यतिक्रान्तस्वोपास्यवस्तुवादित्वरूपातिवादित्वकथनमुखेन भूमविद्यास्तुत्यर्थमाधिक्यप्रतियोगित्वेन नामाद्युपासनादीनां भूमविद्योपयोगित्वमस्ति । ' तरति शोकमात्मवित् ' (छा० ७-१-३) इत्युपक्रम्य ' आत्मैवेदं सर्वं ' (छा० ७-२५-२) इत्युपसंहाराद्भूम्नः प्राधान्यञ्चेति तद्भेदादेकवाक्यत्वम् । प्रकृते च द्युलोकादिमूर्धाद्युपासनानामन्योन्यनिरपेक्षत्वेन सम्बन्धाभावाद्वाक्यभेदो दुर्वारः । न ह्यतिवदतीतिवत् द्युलोकादिशब्दा मूर्धादिशब्दास्सम्बन्धिवचनाः । येन भूमविद्यासाम्यं भवेत् । किञ्च ' मूर्धा ते व्यपतिष्यत् ' (छा० ५-१२-२) इत्यादिव्यस्तोपासनेनार्थश्रवणमपि भूमविद्यावैषम्यमस्ति । न चात्र नहिनिन्दान्यायावतारसम्भवः । समस्तोपासनामविज्ञाय व्यस्तोपासनां कृतवत औपमन्यवादीन्प्रत्यनर्थवचनेन समस्तोपासनस्तुत्यसिद्धेः ।

न च व्यस्तोपासननिषेधोन्नयनेऽपि ' न चतुस्त्रिंशदिति ब्रूयात् ' इत्यत्र निषेधेन विध्युन्नयनमवर्जनीयम् । निषेधस्य रागप्राप्तविषयत्वासम्भवादिति व्यस्तोपासनान्यपि सन्त्येवेति वाच्यम् । अग्निहोत्रं प्रकृत्य श्रुतेन ' जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा न ग्राम्यान्पशून् हिनस्ति नारण्यान् ' इति वाक्येन जर्तिलगवीधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोर्विकल्पेनाग्निहोत्राहुतौ लिङ्विभक्तिबलेन द्रव्यत्वेन विधाने ग्रामारण्यपशुहिंसारहिततया तयोः स्तववचने च प्रतीयमानेऽपि ' अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाग्निहोत्रं जुहुयात् ' इति तदनन्तरं जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात्तदेकवाक्यतया ' जर्तिलयवाग्वा वा जुहुयात् ' इत्यादेर्ग्रामारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हा अपि जर्तिला गवीधुकाश्च यदपेक्षया दुष्टास्तत्पयोऽत्यन्तं प्रशस्तमिति पयःस्तुत्यर्थत्वमेकवाक्यत्वानुरोधादिति 'न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादनर्थत्वात्परसामर्थ्याच्च' (मी.सू. १०-८-७) इति पूर्वतन्त्राधिकरणे किञ्चिद्विधिपूर्वकतन्निन्दायास्सहविधिना विध्यन्तरश्रवणे सति तदर्थवादत्वादेकवाक्यतानुरोधात्समर्थितम् । एवमिह वैश्वानरविद्यावाक्येऽपि स्वीकर्तव्यत्वाद्व्यस्तोपासनमविवक्षितम् । भूमविद्यायां प्रासङ्गिकनामाद्युपासनानां प्रस्तुतेन भूम्ना सहातिशयप्रतियोगित्वसम्बन्धवत् अवयवोपासनानां प्रस्तुतसमस्तोपासनविषयवैश्वानरात्मना सहावयवसम्बन्धसत्त्वेन कथञ्चिदेकवाक्यत्वसम्भ-

वेन जर्तिलयवागुवाक्यवैषम्येऽपि व्यस्तोपासननिन्दनेन 'मूर्धा त्वेष आत्मन इति होवाच' (छा० ५-१२-२) इत्यादिवाक्येषु तुशब्दसूचितेन द्युलोकादीनां स्वतन्त्रोपास्यत्वव्यवच्छेदेन 'तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ' (छा० ५-१८-१) इति व्यस्तोपासनस्य भ्रममूलत्वोद्घाटनेन च भूमविद्यावैषम्यस्यानेकस्य सत्वेन जर्तिलयवागून्यायस्यैव प्रवृत्त्यौचित्येन समस्तोपासनमेव प्रामाणिकमिति स्थितम् ।

॥ इति भूमज्यायस्त्वाधिकरणम् ॥

---

## (२८) ॥ अथ शब्दादिभेदाधिकरणम् ॥

## सू० ॥ नाना शब्दादिभेदात् ॥ ५६ ॥

पूर्वं विद्याविशेषविषयभेदाभेदचिन्ता प्रवृत्ता। अथ तदपेक्षितविद्यासामान्यविषयभेदाभेदचिन्ता प्रवर्तते ।

'नाना शब्दादिभेदा'दित्यत्र—ब्रह्मविद्यानां ब्रह्मप्राप्तिरूपमोक्षफलकानां दहराक्षरवैश्वानरविद्यादीनां किमैक्यं किं वा भेदः इति संशय्य, 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति न्यायेन ज्ञानस्य ज्ञेयभेदायत्तभेदत्वेन ब्रह्मविद्यायां सर्वत्र ब्रह्मण एव वेद्यस्वरूपतया रूपैक्याद्विद्यैक्यमिति प्राप्य—

यजति ददाति जुहोतीत्यत्रापि (यथा)[अपर्यायधातु]निष्पन्नाऽऽख्यातरूपशब्दान्तरेण धात्वर्थापरपर्यायानुबन्धभेदमुखेन प्रधानविधेयानुष्ठानात्मकभावनाभेदेन तत्तद्धात्वर्थानुरक्तयागादिभावनाभेदवदत्रापि ध्यायीत उपासीत विद्यादिति ध्यायत्यादीनां तत्तत्प्रकरणोदितजगत्कारणत्वापहतपाप्मत्वादिगुणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यभिधायित्वेनावधृतानां तत्तद्धात्वर्थानुरक्तविभिन्नभावानाबोधकतया तत्तत्प्रकरणोदिता विद्या भिद्यते। यागादिषु त्यागाविशेषेऽपि देवतोद्देशपरस्वत्वापादनदेशविशेषप्रक्षेपरूपतत्तद्विशेषणविशिष्टत्यागवाचितया यजत्यादीनां भिन्नार्थावगमकत्ववत् ध्यायत्यादीनां प्रत्ययावृत्त्यभिधायित्वाविशेषेऽपि प्रकरणेन तत्तद्गुणविशिष्टब्रह्मविषयकविलक्षणप्रत्ययावृत्तिबोधत्वावधारणेन व्युत्पत्ति-

स्थानीयतदवधारणसहकारेण विद्याभेदबुभुत्सायां तत्तद्धात्वर्थानुरक्तभावनाभेद-सिद्धेस्तत्तद्गुणविशिष्टब्रह्मविषयिणी विद्या भिद्यत एव । यज्ञादिवल्लोकव्युत्पत्ति-सिद्धार्थभेदाभावात् । तत्स्थानीयतत्तत्प्रकरणगृहीतार्थभेदज्ञानमूलकतया ध्याय-त्यादीनामौपचारिकं शब्दान्तरत्वम् । अन्ये तु न्यासोपासनशब्दाभ्यां भक्तिप्र-पत्तिरूपविद्ययोर्भेदे द्रष्टव्यमिति सिद्धान्तः ।

॥ **इति शब्दादिभेदाधिकरणम्** ॥

---

## (२५) ॥ अथ विकल्पाधिकरणम् ॥

## सू०॥ विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

## सू०॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥

विद्यानां विकल्पसमुच्चयसिद्धेस्तद्भेदाधीनत्वादुपजीव्योपजीवकभाव-सङ्गतिः ।

'विकल्पोऽविशिष्टफलत्वा' दित्यत्र—आसां विद्यानां किमेकस्मिन्पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽस्ति किं वा प्रयोजनाभावेऽपि विकल्प एवेति संशय्य एकफलानां भिन्नशास्त्रचोदितानामग्निहोत्रदर्शपूर्णमासादीनां स्वर्गादिफलभूयस्त्वा-पेक्षया एकस्मिन् पुरुषे समुच्चयवत् इहापि ब्रह्मानुभवभूयस्त्वापेक्षया विद्यानां समुच्चयोऽपि सम्भवतीति प्रापय्य—

'ब्रह्मविदाप्नोति परं' (तै० २-१) 'स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य' (तै० २-८) 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु० ३-१-३) इत्यादिना निवृत्तनिश्शेषकर्मतिरोधानपूर्व-कानवधिकातिशयानन्दब्रह्मानुभवस्यैकरूपस्याविशिष्टस्यैव फलत्वेन स्वर्गादिवद्देश-कालस्वरूपायत्ततारतम्याभावेन तदपेक्षाधीनसाधनसमुच्चयासम्भवात् येन केनचि-द्विद्याविशेषेणैव मोक्षरूपफलसिद्धेर्विकल्पः । एवं स्वर्गादेस्तु तारतम्यं बहुतर-प्रमाणसिद्धम् । अतो विकल्पस्समुच्चयो वा कर्मणां सम्भवति । फलान्तर-

साधनानां ब्रह्मविद्यानान्तु फलतारतम्याद्यथाकामं विकल्पस्समुच्चयो वेति सिद्धान्तितम् ।

॥ इति विकल्पाधिकरणम् ॥

---

## (२६) ॥ अथ यथाश्रयभावाधिकरणम् ॥

### सू०॥ अङ्गेषु यथाश्रयभावः ॥ ५९ ॥
### सू०॥ शिष्टेश्च ॥ ६० ॥
### सू०॥ समाहारात् ॥ ६१ ॥
### सू०॥ गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥
### सू०॥ न वा तत्सहभावाश्रुतेः ॥ ६३ ॥
### सू०॥ दर्शनाच्च ॥ ६४ ॥

काम्यानां ब्रह्मविद्यानां यथाकाममनुष्ठानेऽप्युद्गीथाद्युपासनानां क्रत्वङ्गत्वेन क्रतुषु नियमेनानुष्ठानं स्यादिति शङ्कया सङ्गतिः ।

'अङ्गेषु यथाश्रयभाव' इत्यत्र—किमुद्गीथाद्युपासनानि क्रतुषु पर्णतादिवन्नियमेनोपादेयानि किं वा गोदोहनादिवत् पुरुषार्थतया यथाकाममिति सन्दिह्य 'गोदोहनेन पशुकामस्य प्रणयेत्' इति स्ववाक्येऽङ्गत्वविरोधिफलश्रवणवत् 'उद्गीथमुपासीत' (छा० १-१-१) इत्यत्र फलश्रवणाभावात् 'व्रीहीन्प्रोक्षति' इतिवदुद्गीथमुपासीतेति द्वितीयया उद्गीथोद्देशेनोपासनस्य विधिनाङ्गत्वावगमात् 'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' (छा० १-५-५) इति दुरुद्गीथस्य वेदनहीनस्य वेदनहानिप्रयुक्तदोषे सति होतृकृतात्सम्यक्छासनात्तत्समाधानोक्त्या तदुपासनस्य नियमावगमादुपासननिर्वर्तकतयोपासनगुणस्य तदालम्बनस्य प्रणवस्य सोपासनस्य 'तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' (छा० १-१-९) इति तेनेति प्रकृतवाचितच्छब्देन सोपासनस्यैव प्रणवस्य सर्वत्र आश्रवणादौ सम्बन्धावगमेन उपासनस्य प्रणवसहभावनियमदर्शनाच्च उद्गीथोपासनानामुद्गीथादिवत्क्रतुषु

नियमेनोपादानं युक्तम्। वीर्यवत्तरं भवतीति च वर्तमानव्यपदेशरूपत्वादपापश्लोकश्रवणवाक्यवदर्थवादात्मकमिति प्राप्य—

न चैतदस्ति, यदुद्गीथाद्युपासनानां क्रतुषूद्गीथादिवदुपादाननियम इति। कुतः। तत्सहभावाश्रुतेः। तस्योपासनस्य सहभावनियमाश्रुतेः। अङ्गत्वाश्रुतेरिति यावत्। 'उद्गीथमुपासीत' (छा० १-१-१) इत्यत्र उद्गीथेषूपासनेन उत्पत्तिप्राप्तिविकृतिरूपफलासम्भवेन संस्काररूपफलासम्भवेन संस्काररूपादृष्टार्थतापत्त्या नोद्गीथोद्देशेनोपासनविधिः। किन्तूपासनस्य आलम्बनरूपाश्रयापेक्षयामुद्गीथ आश्रयतया सम्बध्नाति। तथा सत्युपासननिर्वर्तनं दृष्टप्रयोजनमुद्गीथस्य सिध्यति। ततश्चोद्गीथविषयकोपासनं कर्तव्यमित्यवगतस्योपासनस्य फलाकांक्षायां वाक्यशेषस्य विपरिणामेन फलसमर्पकत्वं युक्तम्। न तु क्रत्वनुप्रवेशादिकल्पनाक्लेशो युक्त इति केचित्।

अन्ये तु 'यदेव विद्यया करोति तदेव वीर्यवत्तरं' (छा० १-१-१०) इति तृतीयया वीर्यवत्तरत्वलक्षणफलसाधनतयावगतविद्याया आश्रयापेक्षायां सन्निहित उद्गीथ आश्रयमात्रं सम्बध्नाति। फलसाधनतयावगतस्योपासनस्य क्रत्वङ्गभूतोद्गीथाद्यङ्गतया विनियोगानुपपत्तेः। तस्मादुद्गीथाद्युपासनस्य पृथक्फलसाधनतया क्रतुषु नोपादाननियमः। किञ्च 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' (छा० ४-१४-१०) इति ब्रह्माख्यर्त्विग्वेदनेन उद्गातृप्रभृतिवेदनफलस्य क्रतुफलाप्रतिबन्धादिरूपस्य सिद्धौ सत्यामुद्गातृप्रभृतिवेदनानियमसिद्धिः। ऋत्विग्यजमानयज्ञरक्षायाः क्रतुफलाप्रतिबन्धरूपतया तस्याश्चोद्गीथोपासनमन्तरेण सिद्धेर्दर्शितत्वादुपासनस्यानियतत्वं सिद्धम्। आदावेव क्रतुफलाप्रतिबन्धाय उद्गीथोपासनं सङ्कल्पितञ्चेत् वेदनविरहितोद्गीथे समाधानं कर्तव्यमिति समाहारलिङ्गस्य प्रायिकत्वं सोपासनप्रणवसहभावनियमदर्शनमपि तथा सङ्कल्पितक्रतावेवेति प्रायिकत्वम्। प्रकारान्तरेणोपासनस्य पर्णतावैषम्यं गोदोहनसाम्यञ्च **टीकायां** द्रष्टव्यम्॥

**इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**तृतीयस्याध्यायस्य**
**तृतीयः पादः॥**
**अधिकरणानि २६.          सूत्राणि ६४**

## ॥ चतुर्थः पादः ॥

### (१) ॥ पुरुषार्थाधिकरणम् ॥

सू०॥ पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ १ ॥

सू०॥ शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

सू०॥ आचारदर्शनात्॥ ३ ॥

सू०॥ तच्छ्रुतेः ॥ ४ ॥

सू०॥ समन्वारम्भणात्॥ ५ ॥

सू०॥ तद्वतो विधानात्॥ ६ ॥

सू०॥ नियमात् ॥ ७ ॥

सू०॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

सू०॥ तुल्यन्तु दर्शनम् ॥ ९ ॥

सू०॥ असार्वत्रिकी ॥ १० ॥

सू०॥ विभागश्शतवत् ॥ ११ ॥

सू०॥ अध्ययनमात्रवतः ॥ १२ ॥

सू०॥ नाविशेषात् ॥ १३ ॥

सू०॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥

सू०॥ कामकारेण चैके ॥ १५ ॥

सू०॥ उपमर्दं च ॥ १६ ॥

सू०॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

सू०॥ परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ १८ ॥

सू०॥ अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॥ १९ ॥

सू०॥ विधिर्वा धारणवत् ॥ २० ॥

अङ्गिभूतविद्याविचारानन्तरमस्मिंश्चतुर्थपादेऽङ्गचिन्ता प्रवर्तते । प्रथमं विद्यायाः फलसाधनत्वरूपमङ्गित्वं निर्धार्यते ।

तत्र पूर्वपक्षी मन्यते । कर्मणः पुरुषार्थः । कर्मसु कर्तृभूतप्रत्यगात्म-याथात्म्यप्रतिपादकवेदान्तवाक्यजन्यज्ञानस्य कर्तृसंस्कारकत्वेन विद्यास्वरूपपर्या-लोचनायामर्थसामर्थ्येन विद्यायाः कर्मशेषत्वस्य प्राप्तत्वात्, विद्यायाः कर्माङ्गत्वस्य 'यदेव विद्यया करोति' (छा० १-१-१०) इति तृतीयाश्रुत्या प्रतीयमा-नत्वाच्च । न च प्रकरणाद्विद्याश्रुतिरुद्गीथविषयेति वाच्यम् । श्रुतेर्बलीयस्त्वात् । 'तत्त्वमसि' (छा० ६-८-७) 'अयमात्मा ब्रह्म' इति सामानाधिकरण्येन कर्माङ्गभूतकर्तृयाथात्म्यानुसन्धानद्वारेण विद्यायाः कर्माङ्गत्वम् । अतः कर्तृ-संस्कारकतया ब्रह्मविद्यायाः कर्मण एव पुरुषार्थ इति विद्यायाः 'ब्रह्मविदाप्नोति परं' (तै० २-१) इत्यादिफलश्रुतिः 'अङ्गेषु फलश्रुतिरर्थवादः' इति न्याया-दर्थवादमात्रमिति ।

सिद्धान्तस्तु—कर्मसु कर्तुः प्रत्यगात्मनोऽर्थान्तरस्य स्वसङ्कल्पमात्रा-वक्लृप्तसमस्तजगदुदयविभवलयलीलस्य निखिलहेयप्रत्यनीककल्याणैकतानस्य अनन्तज्ञानानन्दैकस्वरूपस्य सर्वेश्वरस्य सत्यसङ्कल्पस्य करणाधिपप्रत्यगात्माधिपस्य वेद्यस्य वेदनरूपाया विद्याया ब्रह्मप्राप्तिरूपफलोपदेशात्तथाविधविद्यायाः कर्मानङ्ग-तया विद्यात एव फलं न कर्मणः । 'नान्यः पन्थाः' (पुरुषसू० ) इति विद्यातिरिक्तोपायनिषेधात् । यदेव विद्ययेति श्रुतिः प्रसिद्धवन्निर्देशात् उद्गीथमुपासीतेति प्रसिद्धप्रकृतोद्गीथोपासनविशेषनिष्ठेति न ततः कर्माङ्गत्वं विद्यायाः ।

ननु तर्हि कथं तत्त्वमसीति सामानाधिकरण्यमिति चेत्; 'यस्यात्मा शरीरं' (बृ० ३-७-२२) इत्यादिश्रुत्यवगतशरीरात्मभावनिबन्धनमिति न तयोः स्वरूपैक्यम् । येन विद्या कर्माङ्गं स्यात् । किञ्च ऊर्ध्वरेतस्स्वपि विद्यादर्शनेन तत्र चाश्रमेष्वग्निहोत्रादिकर्माभावाद्विद्याया निष्फलत्वापत्त्या कर्माङ्गत्वासम्भ-वाद्विद्यात एव फलम् ।

न चोर्ध्वरेतस आश्रमा न सन्तीति वक्तुं युक्तम् । 'त्रयो धर्मस्कन्धाः' (छा० २-२३-१) इत्यादिगार्हस्थ्यवदेव श्रूयमाणतया तदपलापासम्भवात् सर्वथा

गार्हस्थ्यतौल्यस्योर्ध्वरेतस्स्वनिवार्यत्वात् । किञ्च सर्वेषामाश्रमाणां विधिरेवायं 'त्रयो धर्मस्कन्धाः' (छा० २-२३-१) इत्यादिः । अपूर्वत्वात् । 'उपरि हि देवेभ्यो धारयति' इत्यत्रानुवादसरूपेऽप्यर्थाप्राप्तिवशाद्धारणविधिवदत्राप्या-श्रमाणां विधिरेव युक्त इत्यूर्ध्वरेतस्स्वपि विद्यादर्शनाद्विद्यातः पुरुषार्थ इति ।

॥ इति पुरुषार्थाधिकरणम् ॥

---

## (२) ॥ अथ स्तुतिमात्राधिकरणम् ॥

## सू०॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

## सू०॥ भावशब्दाच्च ॥ २२ ॥

अपूर्वत्वाद्विधित्वं पूर्ववदुच्यत इति प्रासङ्गिकी सङ्गतिः ।

'स्तुतिमात्रमुपादाना'दित्यत्र—'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा० १-१-१) 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' (छा० १-१-३) इत्येवंजातीयके किं कर्माङ्गाश्रयाणां दृष्टिविशेषाणां विधिः किं वा उद्गीथादिश्रुतिमात्रमिति संशय्य, 'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इत्यादेः जुह्वादीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्य तत्स्तुतिपरत्ववत् क्रत्व-ङ्गभूतोद्गीथादीन्युपादाय तेषां रसतमत्वादिप्रतिपादकमपि वचनं स्तुतिपरमिति प्रापय्य—

रसतमादित्वेनोद्गीथादीनां प्रमाणान्तराप्रतिपन्नतया तत्प्राशस्त्यबुद्ध्यु-त्पादनाय रसतमादित्वेनानुवादासम्भवात्, उद्गीथविधेरसन्निहितत्वेन जुहूविधि-(सन्निहितेयमेव जुहूरित्याद्य)[सन्निहितस्य 'इयमेव जुहूः' इत्यादिवाक्यस्येव उ]द्गीथादिविध्येकवाक्यतया तदर्थवादत्वासम्भवात, उद्गीथमुपासीतेति विधि-प्रत्ययाच्च रसतमत्वादिदृष्टिविधिरेवेति । एतदधिकरणार्थं सिद्धवत्कृत्य पूर्वं पुरुषार्थतयोपादानानियम [उक्त] इति निर्धारितम् ॥

॥ इति स्तुतिमात्राधिकरणम् ॥

---

## (३) ॥ अथ पारिप्लवाधिकरणम् ॥

### सू०॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

### सू०॥ तथा चैकवाक्योपबन्धात् ॥ २४ ॥

प्रसङ्गात्पूर्ववत्स्तुतिविधित्वचिन्ता प्रवर्तते ।

'पारिप्लवार्था इति चेन्न विशेषितत्वात्' इत्यत्र—'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च' (कौषी० ३-१) 'श्वेतकेतुर्हारुणेय आस' (छा० ६-१-१) इत्यादयो वेदान्तेषु श्रूयमाणा आख्यानविशेषाः किं पारिप्लवप्रयोगार्थाः किं वा विद्याविशेषस्तावकतया विद्याविधानार्था इति संशय्य 'आख्यानानि शंसन्ति' इति पारिप्लवे आख्यानशंसने सामान्येनाख्यानानां विनियोगात् तदर्था एव । मन्वा(ना)?द्याख्यानविशेषाम्नानन्तूपलक्षणार्थमिति प्रापय्य—

सर्वाख्यानप्रयोगस्याशक्यतया 'आख्यानानि शंसन्ति' इति विनियोगश्रुतिसङ्कोचावश्यम्भावेन विशेषाकांक्षायां मन्वाद्याख्यानविशेषपर्यवसायितया वेदान्तस्थाख्यानानां तत्र विनियोगासिद्धेः विद्यासन्निध्याम्नानावगतविध्येकवाक्यत्वावगमाच्च विद्यास्तावकतया विद्यार्था एवेति सिद्धान्तितम् ॥

॥ इति पारिप्लवाधिकरणम् ॥

---

## (४) ॥ अथाग्नीन्धनाद्यधिकरणम् ॥

### सू०॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

सोऽरोदीदित्यादेः कर्मविधिशेषत्वादिति प्रासङ्गिकं परिसमाप्य प्रस्तुतविद्याविषयचिन्ता क्रियते ।

'अत एव चाग्नीन्धनाद्यनपेक्षा' इत्यत्र—ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्यास्ति नेति संशय्य 'यज्ञेन दानेन' (बृ० ४-४-२२) इत्यादिश्रुत्या यज्ञादिकर्माङ्गकत्वाद्विद्यायास्तेषु च यज्ञाद्यभावाद्विद्या न सम्भवतीति प्राप्ते—

'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' (छा० २-१५) 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ० ४-४-२२) इत्यादिश्रुत्या तेषामपि विद्यावत्त्वश्रुतेस्तेष्वग्निहोत्राद्यनपेक्षा विद्येति निश्चीयते । 'तपसानाशकेन' (बृ० ४-४-२२) इत्युक्ताश्रमकर्माङ्गतया तेष्वपि विद्या सम्भवत्येव । तेष्वपि विद्यावत्त्वश्रुतेरेवाग्नीन्धनाद्यनपेक्षा तेषु विद्या । अग्नीन्धनमाधानमिति सिद्धान्तितम् ॥

॥ इति अग्नीन्धनाधिकरणम् ॥

---

## (५) ॥ अथ सर्वापेक्षाधिकरणम् ॥

## सू०॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्॥ २६ ॥

तर्हि गृहस्थेष्वपि विद्या यज्ञाद्यनपेक्षा स्यादिति शङ्कया संगतिः ।

'सर्वापेक्षा च यज्ञादिश्रुतेरश्वव' दित्यत्र—कर्मवत्स्वपि गृहस्थेषु किं विद्या यज्ञाद्यनपेक्षा किं वा तदपेक्षेति संशय्य यज्ञाद्यनपेक्षाया एव विद्याया ऊर्ध्वरेतस्सु अमृतत्वप्राप्तिसाधनत्ववत् गृहस्थेष्वपि तन्निरपेक्षाया एव विद्यायास्तत्साधनत्वं युक्तमाश्रयितुम् । न हि ज्योतिष्टोमाग्निहोत्रादिकं स्वर्गादिसाधनं पुरुषभेदेन नानाविधाङ्गकं दृष्टम् । विविदिषन्ति इति च वेदनेच्छायामेव कर्मणां यज्ञादीनां विनियोगो दृश्यते न विद्यायामिति प्राप्य—

'अश्वेन जिगमिषति असिना जिघांसति' इत्यादौ इच्छाया इष्यमाणप्रधानत्वेनेष्यमाणगमनादावश्वादेस्साधनत्वान्वयवत् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' (बृ० ४-४-२२) इत्यादावपि यज्ञादेर्वेदने साधनत्वेनान्वयात्कर्मवत्सु गृहस्थेषु यज्ञाद्यपेक्षैव विद्या । यथा गमनसाधनभूतो ह्यश्वः परिकरसापेक्षो गमनायालं तद्वत् । विषयपरस्तन्त्रेच्छायां यज्ञादिसाधनत्वानुपपत्तिस्तु टीकादौ द्रष्टव्या । तस्माद्विद्या तत्तद्वर्णाश्रमधर्माङ्गिकैवामृतत्वं साधयतीति सिद्धान्तितम् ।

॥ इति सर्वापेक्षाधिकरणम् ॥

---

## (६) ॥ अथ शमदमाद्यधिकरणम् ॥

### सू०॥ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

गृहस्थानां विद्याया यज्ञाङ्गकत्वे शमाद्युपादानं न स्यादिति शङ्कया सङ्गतिः। शमदमाद्यधिकरणे—किं विद्यानिर्वृत्तये गृहस्थैश्शमादय उपादेया न वेति संशये गृहस्थेषु विद्यायाः करणव्यापाररूपयज्ञादिकर्माङ्गकतया करणव्यापारोपरतिरूपशमाद्युपादानस्य विरोधेनानुष्ठातुमशक्यतया कर्मविरहितेषूर्ध्वरेतस्सु 'शान्तो दान्तः' (बृ० ४-४-२३) इत्यादिना शमादिविनियोगोपपत्तेः गृहस्थेषु विनियुक्तयज्ञादीनामूर्ध्वरेतस्स्वननुष्ठानवत् कर्मवत्सु गृहस्थेषु शमादीनामनुपादानमेवेति प्राप्ते—

'तस्मादेवंविच्छान्तो दान्तः' (बृ० ४-४-२३) इत्यादिना सामान्येन विद्याङ्गतया शमादीनां विनियोगात् गृहस्थैरपि शमादय उपादेया एव। न च करणव्यापारकर्मवतां तेषां तदुपरतिरूपशमाद्यनुष्ठानं विरोधादशक्यमिति शङ्कनीयम्। शमादेर्भिन्नविषयत्वात्। विहितेषु यज्ञादिषु करणव्यापारस्य, अविहितेषु निष्प्रयोजनेषु निषिद्धेषु च करणव्यापारोपरतिरूपशमादेर्विरोधाभावेनोपादातुं शक्यत्वात्। सूत्रार्थस्तु—तथापि गृहस्थो यज्ञादियुक्तोऽपि तु शमदमाद्युपेतः स्यात्। तदङ्गतया विद्याङ्गतया तद्विधेश्शमादिविधानात्। तेषामपि गृहस्थानामपि विद्यानिष्पत्तयेऽवश्यानुष्ठेयत्वादिति विद्या सर्वत्र शमाद्यङ्गोपेतैवेति सिद्धान्तितम्॥

॥ इति शमदमाद्यधिकरणम् ॥

---

## (७) ॥ अथ सर्वान्नानुमत्यधिकरणम् ॥

### सू०। सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्॥ २८॥

### सू०॥ अबाधाच्च ॥ २९ ॥

### सू०॥ अपि स्मर्यते ॥ ३० ॥

## सू०॥ शब्दश्चातोऽकामकारे ॥ ३१ ॥

शमादेरनुष्ठानं विदुषामुक्तम् । तत्र भोजननियमरूपशमानुष्ठानं नास्तीति शङ्कया सङ्गतिः ।

'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' इत्यत्र—वाजिनां छन्दोगानाञ्च प्राणविद्यायां 'न ह वा अस्यानन्नं जग्धं भवति' (बृ० ६-१-१४) इति 'न ह वा एवंविदि किञ्चनानन्नं भवति' (छा०५-२-१) इति च सर्वान्नानुमतिस्सङ्कीर्त्यते । सा किं प्राणविदस्सर्वदा किं वा प्राणात्ययापत्ताविति संशये विशेषाभावात्सर्वदेति प्राप्ते—

ब्रह्मविदोऽपि सर्वातिशयितशक्तेरिभ्योच्छिष्टपरिग्रहभक्षणयोः प्राणात्ययापत्तावेव दर्शनादल्पशक्तेः प्राणविदस्सर्वान्नानुमतिः प्राणात्ययापत्ताविति किंपुनर्न्यायसिद्धेति सा प्राणविदः प्राणात्यय एव । तथा—'आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः' (छा० ७-२६-२) इत्याहारशुद्धिविधेरबाधात्,

'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥'

इति स्मरणात्, 'तस्माद्ब्राह्मणस्सुरां न पिबेत्' इत्यादिना कामकारप्रतिषेधाच्च प्राणविदो न सर्वदा सर्वान्नानुमतिरिति सिद्धान्तितम् ।

॥ इति सर्वान्नानुमत्यधिकरणम् ॥

---

### (८) ॥ अथ विहितत्वाधिकरणम् ॥

## सू०॥ विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

## सू०॥ सहकारित्वेन च ॥ ३३ ॥

## सू०॥ सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥

## सू०॥ अनभिभवं च दर्शयति ॥ ३५ ॥

यज्ञादीनां विद्याङ्गत्वे केवलाश्रमकर्मत्वं न स्यादिति शङ्कया सङ्गतिः ।

'विहितत्वाच्चाश्रमकर्मापि' इत्यत्र—यज्ञादीनां केवलाश्रमं प्रत्यप्यङ्गत्वे नित्यानित्यसंयोगविरोधापत्तेर्न केवलाश्रमाङ्गं यज्ञादिकर्मेति प्राप्य—

एकेनैव विनियोगेनोभयाङ्गत्व एव नित्यानित्यसंयोगविरोधात्, अत्र च 'यज्ञेन दानेन' (बृ० ४-४-२२) 'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादि-विनियोगपृथक्त्वेन तदप्रसक्तेरग्निहोत्रादेः 'यावज्जीवमग्निहोत्रं जुहुयात्' 'अग्नि-होत्रं जुहुयात्स्वर्गकामः' इति विनियोगपृथक्त्वेन जीवनाधिकारकामनाधि-कारयोरिवोभयाङ्गत्वसद्भावात् केवलाश्रमाङ्गकर्मापि यज्ञादिकमिति सिद्धान्तितम् ।

॥ इति विहितत्वाधिकरणम् ॥

---

## (९) ॥ अथ विधुराधिकरणम् ॥

**सू०॥ अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥**

**सू०॥ अपि स्मर्यते ॥ ३७ ॥**

**सू०॥ विशेषानुग्रहश्च ॥ ३८ ॥**

**सू०॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥**

विद्याया आश्रमा[कर्मा]ङ्गत्वादनाश्रमिणां विधुरादीनां ब्रह्मविद्याधिकारो न स्यादिति शङ्कया सङ्गतिः ।

'अन्तरा चापि तु तद्दृष्टे' रित्यत्र—विधुरादीनां ब्रह्मविद्यायामधि-कारोऽस्ति न वेति संशय्य अनाश्रमिणां विधुरादीनां विद्याङ्गभूतेष्वाश्रमधर्मेष्व-नधिकारेण साधारणजपादिधर्माणां विद्याङ्गत्वे प्रमाणाभावेन साङ्गब्रह्मविद्योप-संहारासामर्थ्याद्विधुरादीनां नास्त्यधिकार इति प्राप्ते—

रैक्कादिष्वनाश्रमिष्वपि विद्यानिष्ठत्वस्य श्रुतिषु दृश्यमानत्वात् 'तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्य' (प्रश्न० १-१०) इति आश्रमानिय-

ततप:प्रभृतिधर्मविशेषैर्विद्यानुग्रहदर्शनात् 'जप्येनापि च संसिध्येत्' (मनु० २-४७) इत्यादिना जपादिभिर्विद्यानुग्रहस्मरणाच्च अनाश्रमिणामपि विद्याङ्गभूत-साधारणजपाद्यनुष्ठानाधिकारेण तथाविधब्रह्मविद्योपसंहारसामर्थ्यादस्ति तेषामपि ब्रह्मविद्यायामधिकार इति सिद्धान्तितम् ॥

॥ इति विधुराधिकरणम् ॥

---

## (१०) ॥ अथ तद्भूताधिकरणम् ॥

**सू०॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥**

**सू०॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥**

**सू०॥ उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥**

**सू०॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥**

विधुरादिवदनाश्रमित्वाविशेषादाश्रमभ्रष्टानामपि ब्रह्मविद्याधिकारः स्यादिति शङ्कया सङ्गतिः ।

'तद्भूतस्य तु नातद्भाव' इत्यत्र—नैष्ठिकाद्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारोऽस्ति नेति संशय्य तेषामपि प्रायश्चित्तेन शुद्धिसम्भवाद्विधुरादिवज्जपादिना विद्यानुग्रहसम्भवाच्च अस्त्यधिकार इति प्राप्ते—

'ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मनमाचार्यकुलेऽवसादयन्' (छा० २-२३-१) इति नैष्ठिकस्य, 'अरण्यमियात्ततो न पुनरेया' दिति वैखानसस्य, 'सन्यस्याग्निं न पुनरावर्तयेत्' इति परिव्राजकस्य च तत्तद्धर्मेषु नियमितत्वेन तेषामनाश्रमित्वेनावस्थानाभावात्,

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा ॥'

(आग्नेय० १६-५-२३)

इति प्रायश्चित्ताभाववचनेन पतनस्मरणात् अधिकारलक्षणे षष्ठाध्याये प्रतिपादितावकीर्णिप्रायश्चित्तस्योपकुर्वाणब्रह्मचारिविषयतया नैष्ठिकविषयत्वासम्भवात् शिष्टबहिष्कृतत्वाच्च तेषामनधिकारः इति सिद्धान्तितम् ।

सूत्रार्थस्तु **तद्भूतस्य तु नातद्भावः** नैष्ठिकादिभूतस्यातथाभावो न भवति । **तद्रूपाभावेभ्यो नियमात्** तद्रूपाभावा नैष्ठिकधर्माभावास्तेभ्यो नियच्छन्ति शास्त्राणि 'ब्रह्मचार्याचार्यकुलवासी' (छा० २-२३-१) इत्यादीनि इति ॥

॥ **इति तद्भूताधिकरणम्** ॥

---

## (११) ॥ अथ स्वाम्यधिकरणम् ॥

### सू०॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

### सू०॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

ब्रह्मविद्यानुष्ठातृचिन्ताप्रसङ्गादुद्गीथाद्युपासनानुष्ठातृचिन्ता क्रियत इति प्रासङ्गिकी सङ्गतिः ।

'स्वामिनः फलश्रुते' रित्यत्र—किमुद्गीथाद्युपासनं यजमानेनानुष्ठेयं किं वा ऋत्विजेति संशय्य 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' (छा० १-१-१०) इत्युक्तोद्गीथोपासनफलस्य क्रतुफलाप्रतिबन्धरूपवीर्यवत्तरत्वस्य यजमानगामित्वाद्दहराद्युपासनवद्यजमानेनानुष्ठेयमिति प्राप्ते—

साङ्गस्य कर्मणः स्वर्गादिफलस्य यजमानगामित्वेऽपि साङ्गकर्मानुष्ठानाय परिक्रीततया ऋत्विग्भिः कर्मानुष्ठानवत् क्रत्वङ्गाश्रयत्वेन क्रत्वधिकृतस्यैवास्मिन्नुपासनेऽधिकारात् क्रतोश्चार्त्विज्येन एतदप्युपासनमार्त्विज्यमेवेत्यौडुलोमेराचार्यस्य मतमेव स्वमतमिति सिद्धान्तितम् । दहरोपासनादिषु ऋत्विक्कर्तृकत्वे प्रमाणाभावात्तेषां यजमानकर्तृकत्वं न फलस्वाम्यप्रयुक्तमिति वैषम्यं द्रष्टव्यम् ॥

॥ **इति स्वाम्यधिकरणम्** ॥

---

## (१२) ॥ अथ सहकार्यन्तरविध्यधिकरणम् ॥

### सू०॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

### सू०॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

### सू०॥ मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

यज्ञादेश्शमादेश्च विद्यासहकारिणो निरूपणानन्तरं सहकार्यन्तरं निरूप्यते । मध्ये सङ्गतिविशेषेण तदुभयानुबन्धिनिरूपणं प्राप्तमिति नास्यावकाशः ।

'सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्' इत्यत्र— 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः' (बृ० ३-५-१) इत्यत्र किं मुनिशब्दवाच्यं मौनं विद्याङ्गतया प्रमाणान्तराप्राप्तं विधीयते किं वा तत्प्राप्तमनूद्यत इति संशय्य मौनस्य मननरूपत्वात् श्रोतव्यो मन्तव्य इति प्राप्तत्वेनानूद्यत इत्याशङ्क्य—

मुनिशब्दस्य प्रकृष्टमननशीले व्यासादौ प्रसिद्धेः प्रकृष्टमननमुपास्यतद्विषयाभ्यासरूपमालम्बनसंशीलनात्मकं विद्यानिष्पत्तये विध्यादिवत् विहितयज्ञदानप्रभृत्याश्रमधर्मवत् श्रवणमननवच्च पाण्डित्यबाल्ययोस्तृतीयं सहकार्यन्तरं मौनमपूर्वं विधीयते । अनुवादत्वे वैयर्थ्येन प्रसिद्धार्थान्तरस्य विध्यर्हस्य सम्भवेन त्यागायोगादिति परिहृतम् ।

॥ इति सहकार्यन्तरविध्यधिकरणम् ॥

---

### सू०॥ अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

## (१३) ॥ अथ ऐहिकाधिकरणम् ॥

### सू०॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

विद्याङ्गचिन्तानन्तरमङ्गिभूतविद्योत्पत्तिसमयश्चिन्त्यते ।

'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शना'दित्यत्र— मुक्तिव्यतिरिक्तफलसाधनीभूता विद्या स्वसाधनीभूतपुण्यकर्मभिरनन्तरमेवोत्पद्यते किं वा अनन्तरं कालान्तरे

वेत्यनियम इति सन्दिह्य, 'चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन' (गीता० ७-१६) इत्यादिना विद्यायाः पुण्यहेतुकत्वावगमेन स्वसाधनभूतपुण्येषु सम्पन्नेषु विलम्बहेत्वभावादनन्तरमेव विद्योत्पत्तिरित्याशङ्क्य—

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं' (छा० १-१-१०) इति क्रत्वङ्गाश्रयोद्गीथोपासनेन क्रतुफलाप्रतिबन्धरूपफलोक्त्या तदुपासनराहित्यस्थले क्वचित्क्रतुफलप्रतिबन्धसम्भवावगमेन क्वचित्तदुपासनरहितविद्यासाधनीभूतपुण्येषु सत्स्वपि विद्योत्पत्तिरूपपुण्यफलस्य प्रबलकर्मान्तररूपप्रतिबन्धके सति पुण्यैर्विद्योत्पत्त्यसम्भवेन तत्र प्रतिबन्धकनिवृत्त्यनन्तरमेव विद्योत्पत्तेर्वक्तव्यतया प्रतिबन्धकाभावे सत्यनन्तरमेव विद्योत्पत्तिः, सति च प्रतिबन्धके तन्निवृत्त्यनन्तरं विद्योत्पत्तिरित्यनियम इति निर्णीतम् ॥

॥ इत्यैहिकाधिकरणम् ॥

---

## (१४) ॥ अथ मुक्तिफलाधिकरणम् ॥

### सू० ॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥५१॥

आतिदेशिक्या सङ्गत्या मुक्तिफलविद्योत्पत्तिसमयश्चिन्त्यते ।

'एवं मुक्तिफलानियम' इत्यत्र—मुक्तिफलसाधनविद्योत्पत्तौ किं नियमः किमनियम इति संशये, सर्वेभ्यः कर्मभ्यो मुक्तिफलसाधनीभूतपुण्यानां प्रबलतया विद्योत्पत्तिरूपफले जननीये प्रबलकर्मान्तरेण प्रतिबन्धासम्भवात् स्वसाधनीभूतपुण्योत्तरमेव तथाविधविद्योत्पत्तिरिति पूर्वस्मादधिकमाशङ्क्य—

ब्रह्मविदपचाराणां ततोऽपि प्रबलानां विद्योत्पत्तिप्रतिबन्धकानां सम्भवेन तत्रापि प्रतिबन्धकनिवृत्तेरपेक्षितत्वात् प्रतिबन्धकसद्भावासद्भावनिबन्धनानियमस्तत्रापि तुल्यः । पदाभ्यासोऽध्यायसमाप्तिं द्योतयतीति निर्धारितम् ।

**इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**तृतीयस्याध्यायस्य**
**चतुर्थः पादः ॥**

**अधिकरणानि १४.　　सूत्राणि ५१.**

॥ तृतीयोऽध्यायस्समाप्तः ॥

॥ श्रीरस्तु ॥

# ॥ अथ चतुर्थोऽध्यायः ॥

## ॥ प्रथमः पादः ॥

### (१) ॥ आवृत्त्यधिकरणम् ॥

### सू०॥ आवृत्तिरसकृदुपदेशात् ॥ १ ॥
### सू०॥ लिङ्गाच्च ॥ २ ॥

तृतीयेऽध्याये सप्रपञ्चं विद्यास्वरूपं चिन्तितम् । अथ चतुर्थे कतिपयविद्यास्वरूपविशोधनपूर्वकं विद्याफलं चिन्त्यते ।

'आवृत्तिरसकृदुपदेशात्' इत्यत्र—'ब्रह्मविदाप्नोति परं' (तै० २-१) 'तमेव विदित्वातिमृत्युमेति' (श्वे० ३-८) 'ब्रह्म वेद ब्रह्मैव भवति' (मु० ३-२-९) इत्यादौ मुक्तिसाधनतया विहितं वेदनं किं सकृदनुष्ठेयं उतासकृदिति सन्दिह्य ब्रह्म वेदेति वेदनमात्रस्य विधानेन असकृदावृत्तौ प्रमाणाभावेन सकृदेवानुष्ठेयम् । न चावघातस्य यावद्वैतुष्यकार्यमावृत्तिवत् ब्रह्मापरोक्ष्यरूपकार्यावधि तदावृत्तिरिति वक्तुं युक्तम् । वेदनस्य दृष्टोपायत्वाभावात् ज्योतिष्टोमादिकर्मणामुपासनस्य च भगवदाराधनरूपतया तैराराधितात्परमपुरुषाद्धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयावाप्तिरिति 'फलमत उपपत्तेः' (ब्र० सू० ३-२-३७) इत्यत्राभिहितत्वादिति ज्योतिष्टोमादिवत् सकृत्कृत एव शास्त्रार्थ इति प्राप्य्य—

ध्यानोपासनशब्दसमानविषयतया वेदनशब्दस्य, ध्यानशब्दस्य च एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनेन स्मृतिसन्ततिरूपचिन्तनवाचित्वेन उपास्तेरपि तदैकार्थ्येनासकृदावृत्तस्मृतिसन्ततिरूपमेवेह वेदनं मोक्षसाधनमिति निश्चीयते । ध्यानवेदनयोरेकविषयत्वञ्च 'मनो ब्रह्मेत्युपासीत' (छा० ३-१८-१) इत्युपासिनोपक्रान्तस्य 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद'

(छा० ३-१८-३) इति विदिनोपसंहारात्, तथा 'यस्तद्वेद यत्स वेद स मयैतदुक्तः' (छा० ४-१-४) इति विदिनोपक्रान्तस्य वेदनस्य 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' (छा० ४-२-२) इत्युपासिनोपसंहाराच्चोपक्रमोपसंहारयोरेकविषयत्वनियमादवसीयते। तस्माद्वेदनस्य ध्यायतिनासकृदावृत्तस्य मोक्षसाधनतयोपदेशात्,

'तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा।
तद्ध्यानं प्रथमैष्षड्भिरङ्गैर्निष्पाद्यते तथा' ॥ (वि० पु० ६-७-९१)

इति स्मृतेश्च वेदनमसकृदावृत्तमेव शास्त्रार्थ इति सिद्धान्तितम्।

॥ **इति आवृत्त्यधिकरणम्** ॥

---

## (२) ॥ अथ आत्मत्वोपासनाधिकरणम् ॥

## सू०॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

उपास्यपरमात्माकारचिन्तामुखेनोपासनप्रकारविशेषश्चिन्त्यते।

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यत्र—किं परमात्मा स्वात्मनोऽन्यत्वेन 'मम स्वामी मम नाथो मम रक्षक' इति वैयधिकरण्येनोपास्यः किं वा देवोऽहमिति शरीरात्मभावनिबन्धनसामानाधिकरण्येनेव 'अहं ब्रह्मास्मि' (बृ० १-४-१०) इति सामानाधिकरण्येन स्वात्मतयोपास्यः इति सन्दिह्य 'अधिकन्तु भेदनिर्देशात्' (ब्र० सू० २-१-२२)' 'अधिकोपदेशात्' (ब्र० सू० ३-४-८) 'नेतरोऽनुपपत्तेः' (ब्र० सू० १-१-१७) इत्यादिषु जीवपरयोर्भेदस्य व्यवस्थापितत्वात् यथावस्थिततत्त्वस्वरूपस्यैवोपास्यत्वेन तत्क्रतुन्यायसिद्धत्वाच्च भेदेन मम स्वामीत्यादिवैयधिकरण्येनैवोपास्यः परमात्मेति प्रापय्य—

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं' (बृ० ३-७-२२) 'सन्मूलास्सोम्येमास्सदायतनास्सत्प्रतिष्ठाः' (छा० ६-८-४)

'ऐतदात्म्यमिदं सर्वं' (छा० ६-८-७) 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छा० ३-१४-१) इति सर्वस्य चिदचिद्वस्तुनः परमात्मनियाम्यत्वादिना तच्छरीरत्वात्तस्यायं परमात्मा त्वात्मेति प्रत्यगात्मनः स्वशरीरं प्रत्यात्मत्वाद्देवोऽहमित्यनुसन्धानवत् परमात्मनः प्रत्यगात्मानं प्रत्यात्मत्वात् 'अहं ब्रह्म' (बृ० १-४-१०) इत्येवानुसन्धानं युक्तम्। अत एव 'अहमन्नमहमन्नं' (तै० ३-१०-६) इति मुक्तानां फलानुसन्धानमुपपद्यते। अत एव पूर्वेषामुपासितॄणां 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति सम्बोधनसूचितभेदानुविद्धमेव स्वात्मत्वेनाहमित्यनुसन्धानं युज्यते। अत एव 'योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद अकृत्स्नो ह्येष आत्मेत्येवोपासीत' (बृ० १-४-१०) इत्यात्मत्वानुसन्धानरहितस्याकृत्स्नत्वमपूर्णत्वं कृत्स्नशास्त्रार्थावेदित्वमुच्यमानमुपपद्यते। अपृथक्सिद्धप्रकारप्रकारिभावशरीरात्मभावनिबन्धनसामानाधिकरण्यव्यपदेशार्हचिदचिद्वस्तुविशिष्टपरमात्मन एव शास्त्रार्थतया 'अन्योऽसावन्योऽहं' (बृ० १-४-१०) इति भेदमात्रवेदिनस्सम्बन्धज्ञानाभावेन कृत्स्नवेदनाभावात् प्रत्यगात्मनः स्वस्यात्मत्वेनानुसन्धाने 'जुष्टं यदा पश्यत्यन्यमीशं' (श्वे० ४-७) 'पृथगात्मानं प्रेरितारञ्च मत्वा' (श्वे० १-६) इत्युक्तभेदावलम्बनपुरस्सरमेव 'अहं ब्रह्म' इति व्यपदेशार्हवैशिष्ट्यविशेषस्याप्यवगाहनात्कृत्स्नवेदित्वम्। 'सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद' (बृ० ४-५-७) इति चिदचिद्वस्तुजातं सर्वं, आत्मनः परमात्मनः, अन्यत्र अन्यनिष्ठं यो वेद, सर्वं तमन्यनिष्ठत्ववेदिनं पराभवतीति योऽन्यत्रेत्यन्यशब्दार्थान्तर्गतस्वनिष्ठत्वनिषेधोऽप्युपपद्यते। शरीरात्मभावे शरीरस्य शरीरिनिष्ठत्वेन सर्वस्यापि शरीरिपरमात्मनिष्ठत्वावश्यम्भावात्। तस्मात्परमात्मा स्वात्मत्वेनैवोपास्यः। अहं ब्रह्मास्मीति सामानाधिकरण्येनैवोपास्य इति सिद्धान्तितम्।

**॥ इत्यात्मत्वोपासनाधिकरणम् ॥**

(३) ॥ अथ प्रतीकाधिकरणम् ॥

सू०॥ न प्रतीके न हि सः ॥ ४ ॥

सू०॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

प्रसङ्गात्प्रतीकोपासनप्रकारश्चिन्त्यते ।

'न प्रतीके न हि स' इत्यत्र—'मनो ब्रह्मेत्युपासीत' (छा० ३-१८-१) 'नाम ब्रह्मेत्युपास्ते' (छा० ७-१-५) इत्यादिप्रतीकोपासने किमात्मत्वानुसन्धानं कार्यं उत नेति सन्देहे गुणपूर्णस्य ब्रह्मण उपास्यत्वसम्भवे मनआदीनामचेतनानामल्पशक्तीनामुपास्यत्वाश्रयणस्यान्याय्यत्वात् मनआदिदृष्ट्या ब्रह्मैव तत्राप्युपास्यमिति ब्रह्मणश्चोपासितुरात्मत्वात्तत्रात्मत्वानुसन्धानं कार्यमिति प्राप्य्य—

लोके भृत्यादौ निकृष्ट एवोत्कृष्टराजादिदृष्टेरभ्युदयहेतुत्वदर्शनात् प्रत्युत राजादिविषये निकृष्टभृत्यादिदृष्टेरनर्थावहत्वदर्शनाच्च मनःप्रभृतिषु ब्रह्मदृष्टेरेव अभ्युदयार्थतया कर्तव्यत्वेन तत्र ब्रह्मणो दृष्टिविशेषणत्वेन मनःप्रभृतिप्रतीकस्यैवोपास्यत्वेन तस्योपासितुरात्मत्वाभावेन न तत्रात्मत्वानुसन्धानं कर्तव्यम् । मनो ब्रह्मेत्यादौ मनआदिशब्दानामभिमानिदेवतापरतया स्वाभीष्टफलदानौपयिकशक्तिमत्त्वस्यैवोपास्यताप्रयोजकतया च नोपास्यतानुपपत्तिरिति सिद्धान्तितम् ।

॥ इति प्रतीकाधिकरणम् ॥

---

(४) ॥ अथ आदित्यादिमत्यधिकरणम् ॥

सू०॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

देवताया उत्कर्षाद्दृष्टिविशेषणत्वमुक्तम् । तदुत्कर्षाक्षेपेण कर्मण एवोत्कर्षश्शङ्क्यत इत्याक्षेपिकी सङ्गतिः ।

'आदित्यादिमतयश्चाङ्ग उपपत्तेः' इत्यत्र—'य एवासौ तपति तमुद्गीथमुपासीत' (छा० १-३-१) इत्यादिकर्माङ्गाश्रयोपासनेषु किमुद्गीथादावादित्यादि-

दृष्टिः कार्या किं वा आदित्यादिषूद्गीथदृष्टिः कार्येति सन्दिह्य निकृष्टेषूत्कृष्टदृष्टेर्लोकन्यायसिद्धत्वात् साङ्गस्य कर्मणः फलसाधनत्वेनोत्कृष्टत्वादादित्यादेर्देवतात्वेन तद्गुणत्वात् 'य एवासौ तपति' (छा० १-३-१) इति यत्त्वतत्त्वयोगेन देवताया उद्देश्यत्वावगमात् 'तमुद्गीथमुपासीत' (छा० १-३-१) इति चरमनिर्देशाच्चोद्गीथस्य दृष्टिविशेषणत्वप्रतीतेरित्यादित्यादावुद्गीथदृष्टिः कार्येत्याशङ्कय—

क्षणध्वंसिनः कर्मणः कालान्तरभाविफलसाधनत्वं वाक्यशेषावगतदेवताप्रीतिद्वारेणेति देवताप्रीत्यर्थत्वेन कर्मणोऽप्रधानत्वात् देवतायास्साक्षात्फलसाधनत्वेनोत्कृष्टतया अर्थस्वभावप्राप्तदेवतादृष्टिविशेषणत्वानुरोधेन यद्वृत्तयोगाद्यस्वारस्यस्य सह्यत्वाच्च उद्गीथादावादित्यादिदेवतादृष्टिरेव कार्येति समाहितम् ।

॥ इति आदित्यादिमत्यधिकरणम् ॥

---

(५) ॥ अथ आसीनाधिकरणम् ॥

**सू०॥ आसीनस्सम्भवात् ॥ ७ ॥**

**सू०॥ ध्यानाच्च ॥ ८ ॥**

**सू०॥ अचलत्वञ्चापेक्ष्य ॥ ९ ॥**

**सू०॥ स्मरन्ति च ॥ १० ॥**

**सू०॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥**

प्रथमाधिकरणोक्तचित्तैकाग्र्यमत्र आसननियमेन समर्थ्यत इति तेनास्य सङ्गतिः ।

'आसीनस्सम्भवात्' इत्यत्र—किं ब्रह्मोपासनमासीन एव कुर्यात्? किं वा आसीनश्शयानस्तिष्ठन्गच्छन्वेत्यनियम इति सन्दिह्य, ब्रह्मोपासनविधिषु विशेषाश्रवणादनियम इति प्राप्तौ—

आसीनस्यैव चित्तैकाग्रतासम्भवात्, उपासनस्य चित्तैकाग्रतासाध्यत्वात्, 'ध्यायतीव पृथिवी ध्यायन्तीव पर्वताः' (छा० ७-६-१) इत्यादावचलत्वमादाय पृथिव्यादौ ध्यातृसादृश्यव्यपदेशेन ध्यातुरचलत्वावश्यम्भावेन गमनादौ तदसम्भवात्, 'उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' (गीता० ६-१२) इति स्मरणाच्च आसीन एवोपासीतेति निर्धारितम् ।

॥ इति आसीनाधिकरणम् ॥

---

## (६) ॥ अथ आप्रयाणाधिकरणम् ॥

## सू०॥ आप्रयाणात्तत्रापि हि दृष्टम् ॥ १२ ॥

प्रथमाधिकरणोक्तमसकृत्त्वं विचार्यत इति तेनास्य सङ्गतिः ।

'आप्रयाणात्तत्रापि हि दृष्ट'मित्यत्र—अपवर्गसाधनमुपासनं किमेकस्मिन्नहन्यसकृदावर्तनीयमुत आप्रयाणात्प्रत्यहमावर्तनीयमिति विशये, एकस्मिन्नहनि शास्त्रार्थस्यासकृदावृत्तवेदनरूपस्य कृतत्वात् दर्शनसमानाकारभक्तिरूपापन्नवेदनस्य 'द्रष्टव्यः' (बृ० ४-५-६) 'तस्मिन् दृष्टे' (मु० २-२-८) 'यमेवैष वृणुते' (मु० ३-२-३) 'भक्त्या त्वनन्यया' (गीता० ११-५४) इति शास्त्रार्थस्य सिद्धौ सत्यां न तत ऊर्ध्वमुपासनं कर्तव्यम् । 'स खल्वेवं वर्तयन् यावदायुषं' (छा० ८-१५-१) इति श्रुतिस्तु कर्मणामेव यावज्जीवमनुष्ठेयत्वमाह । 'यावज्जीवमग्निहोत्रं' इत्यादिश्रुत्यैकार्थ्यादिति पूर्वपक्षे—

'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' (छा० ८-१५-१) इति यावज्जीवं कर्मानुष्ठानस्यापुनरावृत्तिफलकत्वमुच्यमानं विद्यां प्रति स्वरूपोपकारकत्वेनैवोपपादनीयमिति तदुक्तिसामर्थ्याद्विद्याया अपि यावज्जीवमनुष्ठेयत्वं तत्र विवक्षितमुन्नीयत इति तद्बलात् 'प्रायणान्तमभिध्यायीत' (प्रश्न० ५-१) इति श्रुत्यन्तरदर्शनाच्च दर्शनसमानाकारप्रीतिरूपतापत्त्यनन्तरमपि यथाश्रुतमाप्रयाणमुपासनमनुष्ठेयमिति सिद्धान्तितम् ।

॥ इति आप्रयाणाधिकरणम् ॥

---

## (७) ॥ अथ तदधिगमाधिकरणम् ॥

### सू०॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते । कर्मनिवृत्तिप्रभृतिपरिपूर्णभगवदनुभवपर्यन्तफलस्वरूपे कर्मनिवृत्तेः प्रथमभावित्वात् प्रथमं तद्विषयचिन्ता क्रियते ।

तदधिगमाधिकरणे—'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' (छा० ४-१४-३) 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयते एवं हास्य सर्वे पाप्मानः प्रदूयन्त' (छा० ५-२४-३) इति योग्यतया विद्योत्पत्त्यनन्तरमुत्पत्स्यमानाघस्याश्लेषः विद्यापूर्वमुत्पन्नस्याघस्य विनाश इति सिद्ध्या विदुषः श्रूयमाणौ विद्योत्तरपूर्वाघयोरश्लेषविनाशौ सम्भवतो न वेति संशय्य, 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' (ब्रह्मवैवर्ते-प्रकृतिखण्डे अ. २६ श्लो ७०) इत्यादिशास्त्रेण कर्मणां भोगैकक्षपणीयत्वशासनविरोधेन विद्यासन्निधिसमाम्नाताश्लेषविनाशवचनस्य कथञ्चिद्विद्यास्तावकतया नेयत्वेन नाश्लेषविनाशसम्भवः । न हि प्रायश्चित्तवद्विद्यया तत्क्षपणं सम्भवति । 'ब्रह्मविदाप्नोति परं' 'तै० २-१) 'ब्रह्म वेद ब्रह्मैव भवति' (मु० ३-२-९) इत्यादिना विद्याया मोक्षहेतुत्वप्रतिपादनादिति प्राप्य—

तदधिगमे दर्शनसमानाकारध्यानप्राप्तौ, तदुत्तरपूर्वाघयोरश्लेषविनाशौ विदुषस्सम्भवत एव । 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' (छा० ४-१४-३) 'एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा० ५-२४-३) इति पूर्वोत्तराघयोः श्रुत्या अश्लेषविनाशप्रतिपादनात् । न च श्रुतेः स्तावकत्वं मुख्यार्थे बाधकाभावात् । न च 'नाभुक्तं क्षीयत' इति शास्त्रविरोधश्शङ्कनीयः । नाभुक्तमित्यस्य कर्मणां फलैकनाश्यत्वपरता न सम्भवति । प्रायश्चित्तविधेर्वैयर्थ्यापातात् । किन्तु फलजननशक्तिदार्ढ्यपरत्वम् । ततश्च न तयोर्विरोधः प्रसज्यते । अश्लेषविनाशशास्त्रयोः फलजननशक्तिदार्ढ्यविपर्ययविषयत्वाभावात् । अश्लेषशास्त्रं हि उत्पत्स्यमानपापगतफलजननशक्त्यु-

त्पत्तिप्रतिबन्धं वक्ति । विनाशशास्त्रञ्च विद्यायाः पूर्वाधगतफलजननोत्पन्नशक्तिनाशं वक्ति । फलजननशक्तिदाढर्यस्य नाभुक्तशास्त्रार्थस्य, अश्लेषविनाशशास्त्रार्थयोरशक्तयुत्पत्तिप्रतिबन्धोत्पन्नशक्तिविनाशयोश्च न परस्परोपमर्दकता ; येन वह्न्यौष्ण्यानौष्ण्यप्रमाणयोरिव विरोधः स्यात् । अतो विरोधाभावेनाश्लेषादिशास्त्रस्य स्तावकत्वासम्भवाद्विदुषोऽश्लेषविनाशौ सम्भवतः । विद्याया मोक्षसाधनत्ववत् अश्लेषविनाशसाधनत्वस्यापि श्रुतिसिद्धस्यान्यथाभावायोगादिति सिद्धान्तितम् ॥

॥ **इति तदधिगमाधिकरणम्** ॥

---

## (८) ॥ अथ इतराधिकरणम् ॥

## सू०॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

अतिदेशसङ्गत्या पुण्ययोरुत्तरपूर्वयोरश्लेषविनाशसम्भवश्चिन्त्यते ।

'इतरस्याप्येवमसंश्लेषः पाते तु' इत्यत्र—विदुषो विद्याधिगमपूर्वोत्तरयोस्सुकृतयोरघवदश्लेषविनाशौ सम्भवतो न वेति संशय्य, विदुषस्सुकृतफलस्य सुखरूपतया पापफलवदनिष्टत्वाभावेन 'पापं कर्म न श्लिष्यते' (छा० ४-१४-३) 'पाप्मानः प्रदूयन्ते' (छा० ५-२४-३) इति पापाश्लेषविनाशयोरेव श्रवणेन च न पूर्वोत्तरसुकृतयोरश्लेषविनाशसम्भव इत्याशङ्कय—

स्वर्गादिसुकृतफलस्यापि मुमुक्षूद्देश्यमोक्षविरोधित्वेनानिष्टतया 'तत्सुकृतदुष्कृते धूनुत' (कौषी० १-४) इति सुकृतस्यापि धूननश्रवणेन च सुकृतस्याप्युद्देश्यविरोधित्वरूपपापपदप्रवृत्तिनिमित्ताक्रान्ततया 'सर्वे पाप्मानः' (छा० ५-२४-३) इति सर्वशब्दविशेषितबहुवचनान्तपाप्मपदसङ्गृहीतत्वेन च विद्योत्तरपूर्वसुकृतयोरप्यश्लेषविनाशौ तुल्यौ । विद्यानुगुणस्य वृष्ट्यन्नारोग्यादिदृष्टफलस्य सद्भावे शरीरपातादूर्ध्वं नाशः कल्पनीय इति सिद्धान्तितम् ।

॥ **इति इतराधिकरणम्** ॥

---

## (९) ॥ अथ अनारब्धकार्याधिकरणम् ॥

### सू०॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वोक्तविद्योत्पत्तिप्राक्कृतपुण्यपापविनाशा(पा)[पव]दनादापवादिकी सङ्गतिः।

'अनारब्धकार्ये एव तु पूर्वे तदवधेः' इत्यत्र—किं विद्योत्पत्तिप्राक्कृ(ते)[तयोः] पुण्यपा(पे)[पयोरविशेषेण विनाशः उतानारब्धकार्ययोरेवेति विशये अविशेषेण] प्रारब्धाप्रारब्धयोर्नाश एव न्याय्यः। विद्यागम एव प्रारब्धनाशेऽपि कुलालचक्रभ्रमणन्यायेन संस्कारेण तच्छरीरस्थित्युपपत्तेः विलम्बश्रुत्यविरोध इति प्राप्य्य—

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' छा० ६-१४-२) इति लब्धविद्यस्यापि शरीरविमोक्षावधि ब्रह्मप्राप्तिविलम्बावगमेन विद्याधिगम एव सर्वकर्मविनाशे शरीरस्थित्यसम्भवेन विलम्बश्रुतिविरोधापातेनानारब्धकार्ययोरेव विद्याप्राक्कृतयोः पुण्यपापयोर्विद्यया विनाशः। न च कर्मविनाशेऽपि संस्कारेण शरीरस्थितिसम्भवः। नष्टेऽपि कर्मणि तत्संस्कारसत्त्वे प्रमाणाभावात्। कर्मवासनारूपसंस्कारस्य सजातीयकर्मरुचिजनकत्वेऽपि शरीरस्थितिहेतुत्वे प्रमाणाभावात्। चक्रभ्रमणस्थले नोदनाख्यसंयोगरूपहेतुविगमेऽपि तज्जन्यपूर्वपूर्वभ्रमणतज्जन्यवेगाख्यसंस्कारपरम्परया यावदुपलब्धि कार्यधारा सम्भवति। तस्मादनारब्धकार्ययोरेव पूर्वयोर्विनाश इति सिद्धान्तितम्।

॥ इति अनारब्धकार्याधिकरणम् ॥

---

## (१०) ॥ अथ अग्निहोत्राद्यधिकरणम् ॥

### सू०॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

### सू०॥ अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

### सू०॥ यदेव विद्ययेति हि ॥ १८ ॥

पूर्वोक्तकर्मविनाशापवादानन्तरं उत्तरकर्माश्लेषापवादः क्रियत इति तेनास्यापवादिकी सङ्गतिः ।

'अग्निहोत्रादि तु' इत्यत्र—अग्निहोत्राद्याश्रमधर्मः किं विदुषोऽनुष्ठेयो न वेति विशये, सुकृतदुष्कृतयोरुत्तरयोरश्लेषाभिधानादाश्रमधर्मस्यापि सुकृतत्वाविशेषेण कार्यस्य फलस्याश्लेषादननुष्ठानमाशङ्क्य—

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' (बृ० ४-४-२२) इत्यादिना विद्योत्पत्तेरेवाग्निहोत्राद्याश्रमधर्मकार्यत्वेन विदुषोऽपि विद्योत्पत्तिरग्निहोत्राद्याश्रमधर्मानुष्ठानसापेक्षैव । विद्या चाप्रयाणादहरहरभ्यासाधेयातिशया नित्यनैमित्तिककर्मनिर्मलीकृतमनोनिष्पाद्येति परिहृतम् । अतो वित्तोत्पत्तिफलव्यतिरिक्तोत्तरसुकृतस्यैवाश्लेष इति सिद्धम् ॥

॥ **इति अग्निहोत्राद्यधिकरणम्** ॥

---

## (११) ॥ अथ इतरक्षपणाधिकरणम् ॥

## सू०॥ भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ १९ ॥

अनारब्धकार्यावधिश्चिन्त्यते । 'भोगेन त्वितरे क्षपयित्वा' इत्यत्र—इतरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियम इति सन्दिह्य, 'धूत्वा शरीरमकृतं कृतात्मा' (छा० ८-१३-१) 'अस्माच्छरीरात्समुत्थाय' (छा० ८-१२-३) इति श्रुत्यन्तरदर्शनात् तस्य तावदित्यत्र शरीरस्याश्रुतत्वेऽपि शरीरविमोक्षावधिपरत्वं युक्तमाश्रयितुम् । 'धूत्वा शरीरं' (छा० ८-१३-१) इत्येकवचनश्रवणेन प्रारब्धयावच्छरीरपरत्वमयुक्तम् । एकत्वाविवक्षायां प्रमाणाभावात् । 'अस्माच्छरीरात्' (छा० ८-१२-३) इत्यत्रास्मादिति विशेषणेन विद्यायोनिशरीरस्यैव विवक्षितत्वाच्च । ततो विद्यायोनिशरीरावसान एवारब्धकार्ये पुण्यपापे इति प्राप्य—

प्रारब्धसत्त्वे ब्रह्मप्राप्तिर्न सम्भवति । कर्मणस्तद्विरोधित्वात् प्रारब्धस्य च भोगैकक्षपणीयत्वात् । भोगेन तत्क्षपणोत्तरमेव ब्रह्मप्राप्तिरित्यर्थस्वभावात् प्रारब्धविमोकावधित्वसिद्धौ 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' (छा० ६-१४-२) इति प्रारब्धविमोक्षावधित्वपरमिति 'धूत्वा शरीरं' (छा० ८-१३-१) इत्यत्रापि शरीरपदं प्रारब्धकार्यशरीरसामान्यपरम् । एकवचनञ्च 'अश्व इव रोमाणि विधूय पापं' (छा० ८-१३-१) इतिवत् जातिविषयम् । श्रुतिस्मृतिप्रसिद्धत्याज्यताहेत्वनुभवसिद्धहेयताप्रतिपादनपरमस्मादिति विशेषणम् न विद्यायोनिशरीरपरमर्थस्वभावविरोधात् । ततश्च विद्यायोनिशरीरमात्रोपभोग्यफलप्रारब्धस्थले तच्छरीरावसाने सम्पद्यते । बहुशरीरोपभोग्यफलप्रारब्धस्थले तावच्छरीरावसाने सम्पद्यत इति न प्रारब्धयोर्विद्यायोनिशरीरावसाननियम इति सिद्धान्तितम् ॥

**इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**चतुर्थस्याध्यायस्य**
**प्रथमः पादः ॥**

**अधिकरणानि ११. सूत्राणि १९.**

---

## ॥ द्वितीयः पादः ॥

### (१) ॥ वागधिकरणम् ॥

**सू०॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥**

**सू०॥ अत एव सर्वाण्यनु ॥ २ ॥**

प्रथमभाविनो विद्याफलभूतस्य पूर्वोत्तराघयोरश्लेषविनाशरूपस्य विचारानन्तरं तदनन्तरभाविविद्याफलान्तर्गतगत्युपक्रमरूपोत्क्रान्तिरस्मिन्पादे चिन्त्यते ।

'वाङ्मनसि दर्शनाच्छब्दाच्च' इत्यत्र—'वाङ्मनसि सम्पद्यते' (छा० ६-८-६) इत्यत्र श्रूयमाणा मनसि सम्पत्तिर्वृत्तिविषया लयविषया वेति सन्दिह्य सम्पत्तेर्लयरूपत्वात्तस्य चोपादान एव सम्भवात् मनसश्च वागुपादानत्वाभावेन मनसि वाचो लयायोगान्मनोवृत्तेर्वागिन्द्रियवृत्तिकारणत्वेन कथञ्चिल्लयोक्तिसम्भवाद्वृत्तिविषयेत्याशङ्क्य—

वाक्शब्दसम्पत्तिवाचिशब्दयोर्द्वयोरपि गौणत्वापत्त्या जघन्यस्य सम्पत्तिवाचिशब्दस्यैव गौणत्वमाश्रित्य वागिन्द्रियस्वरूपस्य मनसि संश्लेषविषयेयमिति निर्धारितम् ॥

॥ इति वागधिकरणम् ॥

---

### (२) ॥ अथ मनोऽधिकरणम् ॥

**सू०॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥**

'वाङ्मनसि सम्पद्यते' (छा० ६-८-६) इत्यत्र मुख्यसम्पत्त्यभावेऽपि अत्र मुख्यसम्पत्तिः स्यादिति शङ्कया सङ्गतिः ।

'तन्मनः प्राण उत्तरात्' इत्यत्र—'मनः प्राणे' (छा० ६-८-६) इति प्राणे मनसस्सम्पत्तिर्लयस्संश्लेषो वेति विचिन्त्य 'आपोमयः प्राण' (छा०

६-६-५) इति श्रुत्या प्राणस्याम्मयत्वेन प्राणशब्देनापो लक्षयित्वा 'अन्नमयं हि सोम्य मनः' (छा० ६-६-५) इति श्रुत्या मनसोऽन्नशब्दितपृथिवीत्वावगमेन अपां पृथिव्युपादानत्वात्प्राणशब्दलक्षितास्वप्सु मनसः पृथिवीकार्यस्य सम्पत्तिर्लय इति प्राप्य—

'आपोमयः प्राणः' (छा० ६-६-५) 'अन्नमयं हि सोम्य मनः' (छा० ६-६-५) इत्यत्र न प्राणमनसोरपामन्नस्य च प्रकृतित्वमुच्यते; किं त्वाप्यायकत्वम् । प्राणस्याकाशप्रकृतिकत्वान्मनसो वैकारिकत्वाच्च । अतो 'वाङ्मनसि' (छा० ६-८-६) इतिवदुत्तरात् 'मनः प्राणे' (छा० ६-८-६) इति शब्दात्सर्वेन्द्रियसंयुक्तं तन्मनः प्राणे संयुज्यत इति गौणी सम्पत्तिरिति सिद्धान्तितम् ।

॥ **इति मनोऽधिकरणम्** ॥

---

## (३) ॥ अथ अध्यक्षाधिकरणम् ॥

## सू०॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

सन्निहितत्वात् 'प्राणस्तेजसि' (छा० ६-८-६) इति वाक्यार्थो विचार्यते ।

'सोऽध्यक्षे तदुपगमादिभ्यः' इत्यत्र—किं प्राणस्तेजसि सम्पद्यते कि वा जीवे संयुज्य तेजसि सम्पद्यत इति सन्दिह्य जीवसम्पत्तिपूर्वकं जीवेन सह प्राणसम्पत्तौ 'प्राणस्तेजसि' (छा० ६-८-६) इति वाक्यास्वारस्यप्रसङ्गात् 'वाङ्मनसि' (छा० ६-८-६) इत्यादिप्रायपाठाच्च प्राणस्तेजसि संयुज्यत इत्याशंक्य—

उत्क्रान्तौ प्राणस्य जीवोपगमादिश्रुतेः प्राणः करणाध्यक्षे जीवे संयुज्यत इति तदविरोधाय जीवे संयुज्य तेन सह पश्चात्तेजस्संयोगं 'प्राणस्तेजसि' इति वदति । यथा यमुनाया गङ्गया संयुज्य सागरगमनेऽपि यमुना सागरं गच्छतीति व्यपदेशो मुख्यः स्वरसश्च, तद्वज्जीवोपगमादिश्रुत्यनुसारेण जीवोपगमसिद्धौ

प्रायपाठस्याकिञ्चित्करत्वाच्च । यद्यप्यनयैव रीत्या तेजस्संश्लेषपूर्वकजीवसंश्लेषोऽपि संभवति, तथापि प्रमेयाबाधमात्रस्याकिञ्चित्करतया जीवोपगमादिश्रुतिप्रतिपन्नलिङ्गोपोद्बलितेन 'प्राणस्तेजसि' (छा० ६-८-६) इति वाक्येन जीवसंश्लेषपूर्वकतेजस्संश्लेषोऽभिधीयते इति निर्णयेन तथैव चिन्तनीयत्वात् 'प्राणस्तेजसि' इति जीवसंश्लेषपूर्वकः प्राणस्य तेजस्संश्लेष इति सिद्धान्तितम् ॥

॥ **इति अध्यक्षाधिकरणम्** ॥

---

## (४) ॥ अथ भूताधिकरणम् ॥

### सू०॥ भूतेषु तच्छ्रुतेः ॥ ५ ॥

### सू०॥ नैकस्मिन् दर्शयतो हि ॥ ६ ॥

'प्राणस्तेजसि' (छा० ६-८-६) इति वाक्यतात्पर्यार्थं निरूप्य तेजःपदार्थनिरूपणं क्रियत इति संगतिः ।

'भूतेषु तच्छ्रुते' रित्यधिकरणे—'प्राणस्तेजसि' इत्यत्र किं तेजश्शब्देन तेजोमात्रमुच्यते? किं वा भूतान्तरसंसृष्टमिति संशय्य तेजसीति वचनात्तेजोमात्रं प्रतीयत इति तन्मात्रे संश्लेष इत्याशङ्क्य—

वाक्यशेषे 'पृथिवीमयः' (बृ० ४-४-५) इत्यादिना सञ्चरतो जीवस्य सर्वभूतमयत्वश्रवणात् तदन्तरप्रतिपत्त्यधिकरणोक्तन्यायेन देहान्तरारम्भाय पञ्चीकृतभूतपरिष्वङ्गावश्यम्भावाच्च भूतान्तरसंसृष्टमेव तेजोऽभिधीयते इति समाहितम् ॥

॥ **इति भूताधिकरणम्** ॥

---

## (५) ॥ अथ आसृत्युपक्रमाधिकरणम् ॥

सू०॥ समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ॥ ७ ॥

सू०॥ तदापीतेस्संसारव्यपदेशात् ॥ ८ ॥

सू०॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

सू०॥ नोपमर्देनातः ॥ १० ॥

सू०॥ अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

सू०॥ प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥

सू०॥ स्मर्यते च ॥ १३ ॥

प्रसङ्गादियमुत्क्रान्तिर्विद्वदविदुषोस्तुल्येत्युच्यते ।

'समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य' इत्यत्र—सेयमुत्क्रान्तिः किं विद्वदविदुषोस्तुल्या किं वाविदुष एवेति संशय्य ब्रह्मप्राप्तेरेव मोक्षत्वात्तस्याश्च नित्यप्राप्तत्वेन गत्यनपेक्षणात् कर्मनिवृत्तेरपि

'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मु० २-२-८)

इति श्रुत्या ब्रह्मसाक्षात्कारकार्यतया तेनात्रैव तस्या अपि सम्भवात्,

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' (कठ० ६-१४)

इत्यत्रैवामृतत्ववचनात् 'स एतास्तेजोमात्राः' (बृ० ४-४-१) इत्यादिना 'कामयमानः' (बृ० ४-४-६) इत्यन्तेन अविदुष उत्क्रान्तिप्रकारं लोकान्तरगमनं पुनरावृत्तिश्चाभिधाय 'अथाकामयमानः' (बृ० ४-४-६) इत्यादिना 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' (बृ० ४-४-६) इति विदुष उत्क्रान्तिप्रतिषेधाच्चाविदुष एव सेति प्राप्तय—

अर्चिरादिगत्या ब्रह्मप्राप्तिरेव मोक्षः। तस्य नित्याप्राप्तत्वेन विद्यासापेक्षत्ववद्देशविशेषापेक्षत्वस्यापि गतिश्रुत्यविरोधायावश्यवक्तव्यत्वात् । स्थूलसूक्ष्मरूपनिश्शेषप्रकृतिनिवृत्तेरपि देशविशेषसापेक्षत्वादातिवाहिकसंवादाद्यनुरोधेन

विद्यामाहात्म्याद्यावद्देशविशेषप्राप्ति सूक्ष्मप्रकृत्यवस्थितेरभ्युपगन्तव्यत्वात्, देशविशेषप्रापकगतेश्च,

‘शतञ्चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभि निस्सृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥’ (कठ० ६-१६)

इति नाडीविशेषेणोत्क्रन्तिपूर्वकत्वश्रवणादासृत्युपक्रमान्नाडीप्रवेशनात्प्राक् विदुषोऽप्युत्क्रान्तिस्समाना । ‘अत्र ब्रह्म समश्नुते’ (कठ० ६-१४) इति वचनं न निर्विशेषाचित्सम्बन्धनिवृत्तिपूर्वकब्रह्मानुभवरूपब्रह्मप्राप्तिं वदति । किन्तूपासनवेलायां ब्रह्मानुभवम् । ‘अथ मर्त्योऽमृतो भवति’ (कठ० ६-१४) इति (चामृतत्वं देहेन्द्रियादिनिवृत्तिं) विद्याधिगमनिबन्धनपूर्वोत्तरकर्माश्लेषविनाशरूपामृततत्वमुच्यते । कर्ममूलत्वान्मरणादेः । ‘तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये’ (छा० ६-१४-२) इति मुक्तेर्देहपातावधित्ववचनेन देहसत्त्वकालेऽमृतत्वमुक्तविधमेवेति अवश्यवाच्यत्वात् । ‘न तस्य प्राणा उत्क्रामन्ति’ (बृ० ४-४-६) इति च विदुषश्शरीरप्राणविश्लेषरूपोत्क्रान्तिर्न प्रतिषिध्यते । किन्तु शरीरपातोत्तरं देवयानेन पथा ब्रह्मप्राप्तेः ‘तस्य तावदेव चिरं’ (छा० ६-१४-२) इत्यादिश्रुतिसिद्धतया शरीरवियोगकाल एव प्राणविश्लेषे विदुषश्शरीरस्य देवयानगमनानुपपत्तिप्रसक्तौ तत्परिहाराय माध्यन्दिनशाखायां ‘न तस्मात्प्राणा उत्क्रामन्ति’ (बृ० ४-४-६) इति स्पष्टं शरीरात्प्राणोत्क्रमणप्रतिषेधदर्शनात् ‘न तस्य प्राणा’ इत्यत्रापि सम्बन्धसामान्यषष्ठ्या अप्यपादानत्वपर्यवसानस्यैव न्याय्यत्वाच्च ।

‘ऊर्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्यमण्डलम् ।
ब्रह्मकोशमतिक्रम्य तेन याति परां गतिम् ॥’

(याज्ञ० अध्यात्मप्र० श्लो १६७)

इति विदुषोऽप्युत्क्रान्तिस्मरणाच्च विद्वदविदुषोस्समानेयमुत्क्रान्तिरानाडीप्रवेशादिति सिद्धान्तितम् ।

॥ **इति आसृत्युपक्रमाधिकरणम्** ॥

## (६) ॥ अथ परसम्पत्त्यधिकरणम् ॥

## सू०॥ तानि परे तथा ह्याह ॥ १४ ॥

क्रमात्प्रसङ्गात् 'तेजः परस्यां' (छा० ६-८-६) इति श्रुत्यर्थो विचार्यते ।

'तानि परे तथा ह्याह' इत्यत्र—करणग्रामजीवसंसृष्टानि तेजश्शब्दित-भूतसूक्ष्माणि किं तदा यथाकर्म यथाविधं स्वकार्याय गच्छन्ति किं वा परमात्मनि सम्पद्यन्त इति विशये; मध्ये परमात्मसम्पत्तौ सुखदुःखोपभोग-रूपकार्यादर्शनात् तदानुगुण्येन यथाकर्म यथाविधं गच्छन्तीत्याशङ्क्य—

'तेजः परस्यां देवतायां' (छा० ६-८-६) इति श्रुत्या सम्पत्तिप्रति-पादनेन सुषुप्तिप्रलययोर्विषयानुभवायासविश्रमवदिहापि तस्य कल्प्यत्वात् । ततः परमात्मसम्पत्त्यनन्तरं स्वकार्याय गच्छन्तीति परिहृतम् ।

॥ इति परसम्पत्त्यधिकरणम् ॥

---

## (७) ॥ अथ अविभागाधिकरणम् ॥

## सू०॥ अविभागो वचनात् ॥ १५ ॥

भूतसूक्ष्माणां परमात्मनि सम्पत्तिं प्रसाध्य सम्पत्तिस्वरूपं निरूप्यते ।

'अविभागो वचनात्' इति सूत्रे—'तेजः परस्यां' (छा० ६-८-६) इत्युक्तपरमात्मसम्पत्तिः किं प्राकृतप्रलयवत् कारणापत्तिरूपा किं वा मनः-प्रभृतिसम्पत्तिवदत्रापि संश्लेषमात्रमिति विचिन्त्य, मनःप्रभृतीनां वागादिकारण-त्वाभावेन कारणापत्त्यसम्भवेऽपि परमात्मनस्सर्वकारणतया भूतसूक्ष्माणां तत्र लयसम्भवान्मुख्यार्थानुरोधेन कारणापत्तिरूपैवात्र सम्पत्तिरित्याशङ्क्य—

'वाङ्मनसि सम्पद्यते' (छा० ६-८-६) इति श्रुतस्यैव सम्पद्यत इत्यस्यानुषक्तस्यार्थवैरूप्ये प्रमाणाभावेन पुनरव्यक्तादिसृष्टिवचनेन देवयानादिना लोकोत्तरगतिश्रवणेन च कारणापत्त्यसम्भवान्मनःप्रभृतिसम्पत्तिवत्संश्लेषविशेष-मात्रमिति परिहृतम् ।

॥ इति अविभागाधिकरणम् ॥

## (८) ॥ अथ तदोकोऽधिकरणम् ॥

## सू०॥ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ॥ १६ ॥

विद्वदविद्वत्साधारणोत्क्रान्तिवचनानन्तरं विद्वदसाधारणमूर्धन्यनाडीविशेषद्वारकगमननियमसम्भवश्चिन्त्यते ।

'तदोकोऽग्रज्वलन'मित्यत्र—

'शतञ्चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभि निस्सृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥' (कठ० ६-१६)

इति शताधिकमूर्धन्यनाड्या विदुषो गमनमिति नियमस्सम्भवति न वेति सन्दिह्य नाडीनामतिसूक्ष्मत्वेन दुर्विवेकतया नियमासम्भवाद्यादृच्छिकीं तया गतिमनुवदति इयं श्रुतिरिति प्राप्य—

परमपुरुषाराधनभूतविद्यया तदङ्गभूतगतिचिन्तनया प्रीतेन भगवता परमपुरुषेणानुगृहीतश्चेतनस्तत्प्रसादप्रकाशितद्वारो मूर्धन्यनाड्यैव गच्छतीति नियमस्सम्भवति । सूत्रार्थस्तु परमपुरुषाराधनभूतविद्यामाहात्म्यात् तच्छेषगत्यनुस्मृतियोगाच्च प्रीतहार्दानुगृहीतो भवति जीवः । तदोकः= जीवस्य स्थानं हृदयम् । अग्रज्वलनं प्रकाशिताग्रं भवति । परमपुरुषप्रकाशितद्वारश्शताधिकया गच्छति ।

'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः ।' (तै० ना० अनु० ११)

'सर्वस्य चाहं हृदि सन्निविष्टः' (गीता० १५-१५) इति हार्दः परमात्मेति सिद्धान्तितम् ॥

॥ इति तदोकोऽधिकरणम् ॥

## (९) ॥ अथ रश्म्यनुसाराधिकरणम् ॥

### सू०॥ रश्म्यनुसारी ॥ १७ ॥

नियमप्रसङ्गाद्विदुषस्सूर्यरश्म्यनुसारनियमसम्भवश्चिन्त्यते ।

'रश्म्यनुसारी'ति सूत्रे — 'अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा० ८-६-५) इति विद्वान् रश्म्यनुसारी गच्छतीति नियमस्सम्भवति न वेति विचार्य निशि मृतस्य विदुषस्सूर्यरश्म्यनुसारासम्भवाद-नियम इति वचनमिदं पक्षप्राप्तमनुवदतीत्याशङ्क्य—

पक्षप्राप्तानुवादे अथैतैरेवेत्यवधारणानुपपत्तेः निश्यपि निदाघसमये ऊष्मोपलब्ध्या सूक्ष्मरश्मीनां सद्भावसम्भवात्, हेमन्तसमये च हिमाभिभवा-दूष्मानुपलब्धिसंभवाच्च रश्म्यनुसारनियमस्सम्भवतीति परिहृतम् ।

॥ इति रश्म्यनुसाराधिकरणम् ॥

---

## (१०) ॥ अथ निशाधिकरणम् ॥

### सू०॥ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥

निशि मृतस्यापि विदुषस्सूर्यरश्म्यनुसारेण ब्रह्मप्राप्तिरित्युक्तमाक्षिप्य समाधत्ते ।

'निशि नेति चेन्न' इति सूत्रे—

'दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम् ॥'

इति निशामरणस्य निन्दितत्वेन अधोगतिहेतुतया न ब्रह्मप्राप्तिरित्याक्षिप्य—

अधोगतिहेतुभूतानां पूर्वोत्तरपाप्मनां प्रारब्धानाञ्च विद्यामाहात्म्यभोगाभ्यां क्षपितत्वेन 'तस्य तावदेव चिरं' (छा० ६-१४-२) इति श्रुतेः प्रारब्धकार्ययावद्देहपातावधित्वश्रवणेन निशि मृतस्यापि विदुषो मुक्त्यवश्यम्भावात्, निशामरणनिन्दाया अविद्वद्विषयत्वेनाप्युपपत्तेश्च निशि मृतस्यापि विदुषो रश्म्यनुसारेण गतिरिति समाहितम् ।

॥ इति निशाधिकरणम् ॥

---

(११) ॥ अथ दक्षिणायनाधिकरणम् ॥

## सू०॥ अतश्चायनेऽपि दक्षिणे ॥ १९ ॥

## सू०॥ योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ २० ॥

अतिदेशसंगत्या दक्षिणायनमरणेऽपि मुक्तिसम्भव उच्यते ।

'अतश्चायनेऽपि दक्षिणे' इत्यत्र—'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति' (तै० ना० अनु० ५२) इति दक्षिणायने मृतस्य चन्द्रप्राप्तिश्रवणात् चन्द्रं प्राप्तानां 'अथैतमेवाध्वानं पुनर्निवर्तन्ते' (छा० ५-१०-५) इति पुनरावृत्तिश्रवणान्न मुक्तिरित्याक्षिप्य—

पूर्वोक्ताद्बन्धहेत्वभावादेव दक्षिणायनमृतस्यापि विदुषो मुक्तिरस्त्येव । चन्द्रसायुज्यवचनं ब्रह्म प्रेप्सोर्विश्रमस्थानविषयम् । आवृत्तिवचनमविद्वद्विषयमिति समाहितम् ॥

**इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन**
**श्रीनिवासदासेन विरचितायां**
**श्रीभाष्यप्रकाशिकायां**
**चतुर्थस्याध्यायस्य**
**द्वितीयः पादः ॥**

**अधिकरणानि ११. सूत्राणि २०.**

---

## ॥ तृतीयः पादः ॥

### (१) ॥ अर्चिराद्यधिकरणम् ॥

### सू०॥ अर्चिरादिना तत्प्रथितेः ॥ १ ॥

उत्क्रान्त्यनन्तरभाविनी विद्याफलभूता मार्गरूपा गतिश्चिन्त्यते । कालानियमवन्मार्गस्याप्यनियम इति शङ्कया सङ्गतिः ।

'अर्चिरादिना तत्प्रथितेः' इत्यत्र—छान्दोग्यवाजसनेयादिषु नानाविधमार्गप्रकारस्य न्यूनाधिकभावेनाम्नानात् मार्गभेदावश्यम्भावे सति विदुषां येन केनापि मार्गेण गतिरित्यनियम इत्याशङ्क्य—

नानाशाखास्वपि मार्गचिह्नधर्मभूयस्तया मार्गैक्यप्रत्यभिज्ञाबलेन किञ्चिन्न्यूनाधिक्यस्य प्रत्यभिज्ञाबलेन गुणोपसंहारन्यायेन परिहर्तव्यतया सर्वत्र मार्गैक्यात् विदुषामर्चिरादिनैकेनैव मार्गेण गतिरिति नियम इति परिहृतम् ॥

॥ इत्यर्चिराद्यधिकरणम् ॥

---

### (२) ॥ अथ वाय्वधिकरणम् ॥

### सू०॥ वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

विरोधान्मार्गचिह्नोपसंहारासम्भवमाशङ्क्य परिहरति ।

'वायुमब्दा'दित्यत्र—'देवलोकादादित्यं' (बृ० ६-२-१५) इत्यादित्यात्पूर्वत्वेन देवलोकस्य 'तेन स ऊर्ध्वमाक्रमते स आदित्यं' (बृ० ५-१०-१) इति वायोश्चादित्यात्पूर्वत्वेन श्रौतक्रमनिर्दिष्टत्वात् देवलोकवाय्वोर्यथेष्टक्रमेण निवेश इति मार्गभेदप्राप्तेर्न नियमः । न हि देवलोकवायुशब्दावभिन्नार्थौ भिन्नार्थत्वेन प्रसिद्धेरित्याशङ्क्य—

'योऽयं पवते स एष देवानां गृहाः' इति वायोर्देवानामावासत्वेन देवलोकशब्दार्थतया सामान्यविशेषशब्दाभ्यां देवलोकवायुशब्दाभ्यां वायोरेवोक्त्यार्थभेदाभावेन वायोरेवादित्यात्पूर्वत्वेन चिह्नभेदायत्तमार्गभेदाभावात् अर्चिरादिनैकरूपेणैव मार्गेण विदुषां गतिरिति स्थापितम् ॥

॥ **इति वाय्वधिकरणम्** ॥

---

## (३) ॥ अथ वरुणाधिकरणम् ॥

## सू० ॥ तटितोऽधि वरुणस्सम्बन्धात् ॥ ३ ॥

अब्दादुपरि वायुनिवेशप्रसङ्गात् विद्युत उपरि वरुणादिनिवेशश्चिन्त्यते ।

'तटितोऽधि वरुणस्सम्बन्धात्' इत्यत्र——छान्दोग्यप्रभृतिष्वाम्नातस्यार्चिरादिमार्गस्यार्चिरहश्शुक्लपक्षोत्तरायणसंवत्सरवायुपर्यन्तस्य श्रुत्यादिभिः क्रमे सिद्धे वरुणेन्द्रप्रजापतीनां किं विद्युत उपरि निवेशः किं वा वायोरुपरीति संशयेऽर्चिःप्रभृतिषु सर्वेषु 'अर्चिषोऽहः' (छा० ४-१५-५) इत्यादिश्रुतिक्रमोपरोधात् विद्युतः परस्ताच्च 'तत्पुरुषोऽमानवस्स एनान्ब्रह्म गमयति' (छा० १५-५,६) इति विद्युत्पुरुषस्य गमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ सत्यां, उपदेशावैयर्थ्याय कस्यचिद्बाध्यत्वे, पाठक्रमानुरोधेन वायोरनन्तरं वरुणे निवेशयितव्ये वाय्वादित्ययोः क्रमस्य बाधितत्वेन इन्द्रप्रजापत्योरप्यत्रैव निवेशनीयत्वं युक्तमिति प्राप्तय——

मेघोदरवर्तित्वेन तटिद्वरुणयोस्सम्बन्धस्य लोकवेदप्रसिद्धत्वेन वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशावश्यम्भावे पाठक्रमाद्बलीयसार्थक्रमेण वरुणस्य तटित उपरि निवेशप्राप्तौ वैद्युतपुरुषस्य गमयितृत्वे व्यवधानसहे सति उपदिष्टयोरिन्द्रप्रजापत्योरपि क्वचिन्निवेशयितव्यत्वसिद्धौ वरुणादुपर्युपदिष्टत्वादागन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादेर्निवेश इति सिद्धान्तितम् ॥

॥ **इति वरुणाधिकरणम्** ॥

---

## (४) ॥ अथ आतिवाहिकाधिकरणम् ॥

### सू०॥ आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

### सू०॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

अर्चिरादिधातृपर्यन्तक्रमविशेषं व्यवस्थाप्य क्रमनिरूपकार्चिरादिस्वरूपं व्यवस्थाप्यते ।

'आतिवाहिकास्तल्लिङ्गात्' इत्यत्र—'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः' (छा० ४-१५-५) इत्यादावर्चिरादयः किं मार्गचिह्नभूताः किं वा भोगभूमयः किं वा ब्रह्म प्रेप्सतां विदुषां गमयितारः इति त्रेधा सन्दिह्य 'अर्चिषोऽहरह्न आपूर्यमाणपक्षं' (छा० ४-१५-५) इत्यादिसन्दर्भाणां 'इतो निष्क्रम्यामुकं वृक्षं गत्वा अमुकां नदीमासाद्य अमुकं पर्वतपार्श्वं तीर्त्वा **सारपुरी**माश्रय' इत्यादिमार्गोपदेशपरलौकिकवाक्यसमानशैलीकतया चिह्नभूता एवार्चिरादय इत्येकः पक्षः ।

कालविशेषतया प्रसिद्धानामहरादीनां मार्गान्तरसाधारण्येन मार्गविशेषचिह्नत्वासम्भवात् चिह्नभावयोग्यानामहरादिशब्दानभिधेयत्वात् 'एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सरा अग्निलोकमा गच्छति स वरुणलोकं' इत्यादिकौषीतकीवाक्ये लोकशब्दानुविधानेनार्चिरादीनां निर्देशाच्च भोगभूमय इति द्वितीयः पक्षः ।

राद्धान्तस्तु—विदुषां ब्रह्मप्रेप्सावतामतिवाहने परमपुरुषेण नियुक्ताः केचनार्चिराद्यभिमानिदेवताविशेषा एवार्चिरादयः । 'तं पृथिव्यब्रवीत्' (यजु० ५-५-२) इत्यादौ पृथिव्यादिवदत्रापि संवादादिकार्यबलेन अर्चिरादिशब्दानामभिमानिदेवतावाचित्वावश्यम्भावात् 'स एनान् ब्रह्म गमयति' (छा० ४-१५-६) इत्युपसंहारे वैद्युतपुरुषस्य गमयितृत्वश्रवणेनाविशेषनिर्दिष्टानां पूर्वेषामपि कार्यविशेषमपेक्षमाणानां गमयितृत्वस्यैव लाभात् विदुषां भोगहेतुकर्माभावेन भोगभूमित्वायोगेन लोकशब्दस्य लोक्यत इति व्युत्पत्त्या अभिमानिष्वेव नेयत्वात् । 'स एनान्ब्रह्म गमयति' (छा० ४-१५-६) इति

वैद्युतस्य ब्रह्मगमयितृत्वश्रुत्यनुसारात् वरुणेन्द्रप्रजापतीनां वैद्युतपुरुषोपकारकतया आतिवाहिकत्वं द्रष्टव्यमिति ।

॥ इत्यातिवाहिकाधिकरणम् ॥

---

## (५) ॥ अथ कार्याधिकरणम् ॥

**सू०। कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥**

**सू०॥ विशेषितत्वाच्च ॥ ७ ॥**

**सू०॥ सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥**

**सू०॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥**

**सू०॥ स्मृतेश्च ॥ १० ॥**

**सू०॥ परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥**

**सू०॥ दर्शनाच्च ॥ १२ ॥**

**सू०॥ न च कार्ये प्रत्यभिसन्धिः ॥ १३ ॥**

**सू०॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥**

**सू०॥ विशेषञ्च दर्शयति ॥ १५ ॥**

अर्चिरादिमार्गचिन्तानन्तरं तत्प्राप्यस्वरूपं चिन्त्यते ।

कार्याधिकरणे—किमर्चिरादिना गन्तव्यता चतुर्मुखस्यैव किं वा परस्यैव । किं वा परस्य प्रकृतिवियुक्तप्रत्यगात्मनश्च इति सन्दिह्य परिपूर्णस्य परस्य ब्रह्मणो नित्यप्राप्ततया गत्यनुपपत्तेः परिच्छिन्नदेशकालैश्वर्यस्य चतुर्मुखस्य गत्युपपत्तेः 'स ब्रह्मलोकान् गमयति' (बृ० ६-२-१५) 'प्रजापतेस्सभां वेश्म प्रपद्ये' (छा० ८-१४-१) इति बहुवचनान्तलोकशब्देन चतुर्मुख-प्रसिद्धप्रजापतिशब्देन च प्राप्यस्य विशेषितत्वात्,

'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ।'
(तै० ना० अनु १०)

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥'
(कूर्मपु० पूर्वख० १२-२६९)

इति श्रुतिस्मृतिभ्यां हिरण्यगर्भं प्राप्तानां तदायुरन्ते विदुषा तेन सह चतुर्मुखेन सह परब्रह्मप्राप्त्यवगमेनार्चिरादिना गतानामपुनरावृत्त्युपपत्तेः 'स एनान् ब्रह्म गमयति' (छा० ४-१५-६) इति नपुंसकलिङ्गब्रह्मशब्देन प्रथमजत्वेन सामीप्येन लक्षणया चतुर्मुखोक्तिसम्भवाच्च चतुर्मुखस्यैवार्चिरादिना गन्तव्यतेति बादरेर्मतम् ।

'स एनान् ब्रह्म गमयति' (छा० ४-१५-६) इति नपुंसकलिङ्गब्रह्मशब्दस्य परस्मिन्ब्रह्मणि मुख्यत्वात् अविद्यानिवृत्तेः फलाभिसन्धिरहितकर्मापेक्षावत् श्रवणापेक्षावच्च गतिश्रुत्या देशविशेषापेक्षोपपत्तेः 'स एतान्ब्रह्मलोकान्' (बृ० ६-२-१५) इत्यत्र निषादस्थपतिन्यायेन ब्रह्मैव लोक इति निश्चिते प्रातिपदिकार्थे पाशन्यायेन बहुवचननयनसम्भवात् 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य' (छा० ८-३-४) इत्यर्चिरादिना परब्रह्मप्राप्तिश्रुतेः 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' (छा० ८-१३-१) इति तत्रैव अकृतं ब्रह्मलोकमिति विशेषितत्वात् 'यशोऽहं भवामि ब्राह्मणानां' (छा० ८-१४-१) इत्यादिसर्वात्मभावाभिसन्धानाच्च 'प्रजापतेस्सभां वेश्म प्रपद्ये' (छा० ८-१४-१) इत्यनुसन्धानस्य चतुर्मुखविषयत्वायोगेन परब्रह्मविषयत्वाच्चार्चिरादिना परस्यैव ब्रह्मणो गन्तव्यतेति जैमिनेर्मतम् ।

कार्यमुपासीनानामेवार्चिरादिना कार्यब्रह्मप्राप्तिरिति नियमे 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा० ८-३-४) इत्यर्चिरादिना परब्रह्मप्राप्तिप्रापकश्रुतिव्याकोपप्रसङ्गः । परं ब्रह्मोपासीनानेव नयतीति नियमे 'तद्य इत्थं विदुर्ये' (छा० ५-१०-१) इति प्रकृतिवियुक्तब्रह्मात्मकप्रत्यगात्मोपासकानामर्चिरादिना ब्रह्मप्राप्तिप्रतिपादकश्रुतिव्याकोपप्रसङ्गः 'तद्य इत्थंविदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा० ५-१०-१) इत्यु-

भयविषयश्रुतेरुभयविधान्नयति । न प्रतीकालम्बनान् । प्रतीकालम्बना हि प्रत्यगात्मानमचिन्मिश्रं केवलमचिद्वस्तु स्वरूपेण ब्रह्मदृष्ट्या वोपासते । तेषां तत्क्रतुन्यायेन पुनरावृत्तिरवर्जनीया । 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा० ७-१-५) इत्यादिश्रुत्या नामादिप्रतीकोपासकानां गत्यनपेक्षपरिमितफलोक्तेश्च, द्विविधानान्तूक्तोपासकानां तत्क्रतुन्यायेनापुनरावृत्तिरुपपद्यते ।

तस्मात्सर्वज्ञं सर्वकारणं सत्यसङ्कल्पं निखिलहेयप्रत्यनीकानवधिकातिशयानन्दस्वरूपं ब्रह्मोपासीनान् प्रत्यगात्मानं भूतसूक्ष्मसम्परिष्वक्तं भूतसूक्ष्मव्यतिरिक्तज्ञानैकाकारं 'य आत्मनि तिष्ठन्' (बृ० ३-७-२२) इत्याद्यवगतब्रह्मात्मकं पञ्चाग्निविद्योदितमुपासीनांश्च ब्रह्म नयत्यर्चिरादिरातिवाहिको गण इति सिद्धम् ।

इति श्रीमल्लक्ष्मणार्यकरुणाकटाक्षलब्धतत्त्वयाथात्म्येन
श्रीनिवासदासेन विरचितायां
श्रीभाष्यप्रकाशिकायां
चतुर्थस्याध्यायस्य
तृतीयः पादः॥

अधिकरणानि ५.　　सूत्राणि १५.

---

## ॥ चतुर्थः पादः ॥

### (१) ॥ सम्पद्याविर्भावाधिकरणम् ॥

**सू०॥ सम्पद्याविर्भावः स्वेनशब्दात् ॥ १ ॥**

**सू०॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥**

**सू०॥ आत्मा प्रकरणात् ॥ ३ ॥**

तदधिगम इत्याद्येतदन्तं विद्योत्तरपूर्वाघाश्लेषविनाशप्रभृतिब्रह्मसम्पत्तिपर्यन्तविद्याफलचिन्तानन्तरं तदुत्तरभाविस्वरूपाविर्भावात्मकफलस्वरूपं चिन्त्यते ।

सम्पद्याविर्भावाधिकरणे—'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा० ८-१२-२) इत्युक्ता स्वरूपाभिनिष्पत्तिः किमागन्तुकरूपोत्पत्तिरूपा किं वा स्वाभाविकरूपाभिव्यक्तिरूपा इति सन्दिह्य, अभिनिष्पत्तेरुत्पत्तौ प्रसिद्धिप्राचुर्यात् ज्योतिष्टोमादिसाधनानुष्ठानस्थले फलस्यागन्तुकधर्मोत्पत्तिरूपत्वदर्शनात् स्वप्रकाशज्ञानात्मकप्रत्यगात्मनः अहमिति नित्याभिव्यक्तत्वेन साधनवैयर्थ्यापाताच्च आगन्तुकरूपोत्पत्तिरागन्तुकधर्मोत्पत्तिः 'स्वेन रूपेणाभिनिष्पद्यत' (छा० ८-१२-३) इत्युच्यत, इति प्राप्ते—

अन्यनिष्ठधर्मस्यान्यस्मिन्नुत्पत्त्यसम्भवेन, उत्पद्यमानधर्मस्य स्वीयत्वसिद्ध्या स्वेनेति विशेषणवैफल्यापातेन, घटस्य घटत्वं स्वरूपं शङ्खस्य श्वैत्यं स्वरूपं कुवलयस्य नैल्यं स्वाभाविकं जलस्य श्वैत्यं स्वरूपमित्यादिषु स्वशब्दस्य स्वाभाविकत्वार्थकतया बहुतरप्रयोगदर्शनेन च 'अयमत्र वाक्यार्थो निष्पन्नः' इत्यादावभिनिष्पत्तेरभिव्यक्तौ प्रयोगदर्शनेन स्वशब्दवैयर्थ्यादपि प्रसिद्धिप्राचुर्यभङ्गस्य सोढव्यत्वेन स्वाभाविकरूपाभिव्यक्तिरूपैव स्वरूपाभिनिष्पत्तिः स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते । स्वप्रकाशधर्मिस्वरूपस्य प्रत्यगात्मनः अहमिति प्रत्ययेन नित्याविर्भूतत्वेऽपि स्वाभाविकापहतपाप्मत्वादिगुणस्य स्वप्रकाशत्वाभावेन कर्मनिबन्धनस्थूलसूक्ष्माचित्सम्बन्धतिरोहितत्वेन विद्यया तन्निवृत्तौ अर्चिरादिना परं ज्योतिरुपसम्पन्नस्य तादृशापहतपाप्मत्वादिविशिष्टधर्मिस्वरूपाभिव्यक्तिः ।

संप्रसादः स्वेन रूपेणाभिनिष्पद्यते अभिव्यज्यते प्रकाशते। सा चाभिव्यक्तिः स्वरूपाविर्भावपूर्वककल्याणगुणपरिपूर्णानवधिकातिशयानन्दस्वरूपभगवदनुभवानन्दपर्यन्ताभिप्रेता। 'रसं ह्येवायं लब्ध्वानन्दी भवति। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य' (तै० २-७) इत्यादिश्रुत्यानुगुण्यात्। तस्मादपहतपाप्मत्वादिगुणकस्वरूपस्य कर्माख्याविद्यातिरोहितस्य परं ज्योतिरुपसम्पत्त्या निवृत्ततिरोधानस्याभिव्यक्तिरूपाविर्भावः प्रतिपाद्यत इति सिद्धान्तितम्।

॥ इति सम्पद्याविर्भावाधिकरणम् ॥

---

## (२) ॥ अथ अविभागाधिकरणम् ॥

## सू०॥ अविभागेन दृष्टत्वात् ॥ ४ ॥

स्वरूपाविर्भावानन्तरभाविभगवदनुभवात्मकफलस्वरूपं चिन्त्यते।

'अविभागेन दृष्टत्वा' दित्यत्र—मुक्तः परं ज्योतिरुपसम्पन्नः किं ब्रह्म विभक्तं पृथक्सिद्धं विभागेन वैयधिकरण्येन मम स्वामीत्यादिनैवानुभवति किमविभक्तमपृथक्सिद्धं शरीरात्मभावेन देवोऽहमितिवत् अहं ब्रह्मास्मीति सामानाधिकरण्येनानुभवतीति सन्दिह्य, 'निरञ्जनः परमं साम्यमुपैति' (मु० ३-१-३) 'मम साधर्म्यमागताः' (गीता० १४-२) इत्यादिना ब्रह्मसाधर्म्यस्य फलत्वाम्नानात् साधर्म्यस्य भेदगर्भत्वात् भगवतस्तुल्योऽहमिति वैयधिकरण्येनैव ब्रह्मानुभवतीति प्राप्य—

'सर्वं खल्विदं ब्रह्म' (छा० ३-१४-१) 'शास्ता जनानां सर्वात्मा' (तै० आरण्य० १-३-२१) 'तत्त्वमसि' (छा० ६-८-७) 'अयमात्मा ब्रह्म' 'य आत्मनि तिष्ठन् य आत्मानमन्तरो यमयति' (बृ० ३-७-२२) इत्यादिना परमात्मनस्सर्वात्मत्वावगमात् भेदानुविद्धेन शरीरात्मभावेन देवोऽहमितिवत् अहं ब्रह्मास्मीति सामानाधिकरण्येन ब्रह्मानुभवति। तत एव 'अहमन्नमहमन्नं' (तै० ३-१०) इति मुक्तानुभवो दृश्यते। तस्मादविभागेनापृथक्सिद्धिसम्बन्धगर्भसामानाधिकरण्येन 'अहं ब्रह्म' इति मुक्तोऽनुभवतीति सिद्धान्तितम्॥

॥ इति अविभागाधिकरणम् ॥

---

## (३) ॥ अथ ब्राह्माधिकरणम् ॥

**सू०॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥**

**सू०॥ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥**

**सू०॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

ब्राह्माधिकरणे—किं जीवस्य स्वाभाविकं रूपमपहतपाप्मत्वादिगुणकं उत चैतन्यमात्रं उतोभयमिति त्रेधा संशय्य, 'य आत्मापहतपाप्मा' (छा० ८-७-१) इत्यादिश्रुत्या धर्मिस्वरूपमपहतपाप्मत्वादिगुणकमेव स्वाभाविकं स्वरूपम्। प्रजापतिवाक्यगतस्य तस्य स्वाभाविकधर्मिस्वरूपैदम्पर्येण प्रवृत्ततया तत्रतत्र ज्ञानस्वरूपत्वानुक्तेः ज्ञानस्वरूपत्वे ज्ञानाश्रयत्वाद्यसम्भवस्य च धर्मभूतज्ञाने दृष्टत्वेन आत्मनि तदभावापत्तेश्च 'विज्ञानघन एव' (बृ० २-४-१२) इति च ज्ञानाश्रयत्वमेवोच्यते। दृष्टान्ते सैन्धवघने रसघनशब्देन रसाश्रयत्वस्यैव प्रत्येतुमर्हतया दार्ष्टान्तिकेऽपि ज्ञानाश्रयत्वस्यैव वक्तव्यत्वात्। न हि लवणखण्डस्य द्रव्यस्य लवणरसस्वरूपत्वं युज्यते। तस्मादपहतपाप्मत्वादिगुणकं जडात्मकं प्रत्यगात्मस्वरूपमाविर्भवतीति जैमिनेर्मतम्।

'अत्रायं पुरुषः स्वयं ज्योतिः' इत्यादिश्रुत्या पुरुषशब्दवाच्यप्रत्यगात्मनः स्वयंज्योतिश्शब्देन स्वप्रकाशस्वरूपत्वावगत्या जडस्वरूपत्वं न युज्यते। न चैवमपि तस्यापहतपाप्मत्वादिधर्मवत्त्वं कुतो न स्यादिति वाच्यम्। तथा सति विज्ञानघन एवेत्यवधारणविरोधापातात्। विज्ञानघनशब्दसमभिव्याहृतावधारणेन स्वप्रकाशस्वरूपत्वविज्ञानत्वातिरिक्तधर्मव्यवच्छेदप्रतीत्या प्रत्यगात्मन्यपहतपाप्मत्वादीनां व्यवच्छिन्नत्वात् विज्ञानघनशब्दस्य दृष्टान्तबलेन ज्ञानाश्रयवाचित्वेऽपि ज्ञानाश्रय एवेत्युक्तौ पर्यवसानेन ज्ञानाश्रयत्वव्यतिरिक्तव्यवच्छेदसिद्धेरवर्जनीयत्वाच्च। दृष्टान्ते रसघनशब्दस्य योग्यतानुसारेण षष्ठीसमासमाश्रित्य रसस्य धर्मीति रसाश्रयत्ववाचित्वेऽपि सैन्धवघनशब्दस्य निषादस्थपतिन्यायेन सैन्धवद्रव्यस्वरूपवाचित्ववत् विज्ञानघनशब्दस्य स्वप्रकाशधर्मिस्वरूपवाचित्वौचित्येन तत्समभिव्याहृतावधारणेन स्वप्रकाशत्वातिरिक्तधर्मव्यवच्छेदप्रतीत्या प्रत्यगात्मन्यपहतपाप्मत्वादिधर्मासम्भवात्। न चैवं 'अपहतपाप्मा' (छा० ८-७-१)

इत्यादिश्रुतेर्निर्विषयत्वं स्यादिति वाच्यम् । अपहतपाप्मेत्यादिशब्दानां धर्मिस्वरूपविकारसुखदुःखाद्यात्मकधर्मव्यावृत्तिपरत्वात् । अतो विज्ञानमात्रात्मकप्रत्यगात्मस्वरूपाविर्भाव एव स्वरूपाभिनिष्पत्तिरित्यौडुलोमेर्मतम् ।

विज्ञानस्वरूपस्यैव 'अत्रायं पुरुषः स्वयंज्योतिः' इत्यादिश्रुत्यवगतस्य य आत्मेत्यादिश्रुतेरुपन्यासात् पूर्वेषामपहतपाप्मत्वादीनां सद्भावावगमात् ज्ञानस्वरूपत्वापहतपाप्मत्वादीनामविरोधात् अपहतपाप्मत्वादिगुणकं स्वप्रकाशात्मकं प्रत्यगात्मस्वरूपमाविर्भवतीति भगवतो बादरायणस्य मतमेव सिद्धान्तः ।

न च 'विज्ञानघन एव' (बृ० २-४-१२) इत्यवधारणेनान्ययोगव्यवच्छेदेनापहतपाप्मत्वादीनां व्यवच्छेदात् तत्सद्भावावगमासम्भव इति वाच्यम् । श्रुत्यैव प्रतिपन्नानां तेषां श्रुत्यैव निषेधे श्रुतेरुन्मत्तप्रलपितत्वापातात् । न चैतावतावधारणानर्थक्यम् । शङ्खः पाण्डर एवेत्यादाविवायोगव्यवच्छेदकत्वसम्भवात् । दृष्टान्तेऽपि सैन्धवघने प्रत्यक्षसिद्धरूपादिव्यवच्छेदकत्वायोगेनावश्यमयोगव्यवच्छेदकत्वस्यैव स्वीकार्यत्वात् । भूयसामपहतपाप्मत्वादिशब्दानामेकावधारणश्रुत्या क्लिष्टार्थाश्रयणायोगाच्च । तदपहतपाप्मत्वादिगुणकं ज्ञानात्मकं प्रत्यगात्मस्वरूपमेवाविर्भवतीति सिद्धम् ।

॥ इति ब्राह्माधिकरणम् ॥

---

## (४) ॥ अथ सङ्कल्पाधिकरणम् ॥

## सू०॥ सङ्कल्पादेव तच्छ्रुतेः ॥ ८ ॥

## सू०॥ अत एव चानन्याधिपतिः ॥ ९ ॥

अवधारणार्थप्रसङ्गेन सङ्कल्पादेवेत्यत्रावधारणार्थश्चिन्त्यते ।

'सङ्कल्पादेव तच्छ्रुतेः' इत्यत्राधिकरणे—'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषस्स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' (छा० ८-१२-३) इत्यादिना

श्रूयमाणा ज्ञात्यादयो मुक्तस्य सङ्कल्पादेव सम्भवन्ति उत प्रयत्नान्तरसव्य-पेक्षात्सङ्कल्पादिति संशये, लोके सत्यसङ्कल्पानामपि राज्ञां प्रयत्नान्तरं व्यापारा-न्तरमपेक्षमाणानामेव सङ्कल्पितकार्यसिद्धिदर्शनान्मुक्तानामपि व्यापारान्तरसा-पेक्षाणामेव सङ्कल्पितज्ञात्यादिकार्यसिद्धिरिति निश्चिते सङ्कल्पादेवेत्येवकारो विज्ञानघन एवेत्यत्रेवायोगव्यवच्छेदपर इति प्रापय्य—

राज्ञामपि कर्मवश्यानामीश्वरवत् सत्यसङ्कल्पत्वासम्भवात् व्यापारान्तर-सापेक्षत्वेऽपि मुक्तानां परमात्मना परमसाम्यमापन्नानां निश्शेषनिवृत्तकर्मप्रति-घातानामीश्वरवत्सत्यसङ्कल्पत्वान्न व्यापारान्तरसापेक्षत्वम् । व्यापारान्तरसापेक्षत्वे मुक्तानां प्रमाणान्तराभावेन सङ्कल्पादेवेत्येवकारेण प्रतीयमानव्यापारव्यवच्छेदो विज्ञानघन एवेत्यवधारणवत् नान्यथा नेतुं युक्त इति सिद्धान्तितम् ।

॥ इति सङ्कल्पाधिकरणम् ॥

---

## (५) ॥ अथ अभावाधिकरणम् ॥

**सू०॥ अभावं बादरिराह ह्येवम् ॥ १० ॥**

**सू०॥ भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥**

**सू०॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥**

**सू०॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥**

**सू०॥ भावे जाग्रद्वत् ॥ १४ ॥**

**सू०॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥**

**सू०॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥**

पित्रादिसृष्टिप्रसङ्गात्स्वशरीरसृष्टिश्चिन्त्यते ।

'अभावं बादरिराह ह्येवं' इत्यत्र—मुक्तस्य किं शरीरेन्द्रियाणि न सन्ति किं वा सन्ति च न सन्ति चेति विशये,

'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।
अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥' (छा० ८-१२-१)

इति शरीरित्वे दुःखित्वमभिधाय 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा० ८-१२-३) इति मुक्तस्याशरीरत्वश्रुतेर्न तस्य शरीरादीनि सन्ति 'स एकधा भवति' (छा० ७-२६-२) इत्यादिकन्तु ज्ञानादिप्रकारभेदं वदतीति बादरिमतम् ।

'स एकधा भवति द्विधा भवति पञ्चधा भवति' (छा० ७-२६-२) इत्यादिश्रुत्या निरवयवस्याच्छेद्यस्यैकस्यात्मनः स्वरूपबहुभावासम्भवात् त्रिधाभावादीनां शरीरनिबन्धनत्वावश्यम्भावात् अशरीरत्ववचनस्य कर्मनिमित्तशरीराभावपरत्वात् तस्यैव सुखदुःखादिमूलकत्वेन हेयत्वादतथाभूताप्राकृतशरीराणि मुक्तानां सन्तीति जैमिनेर्मतम् ।

मुक्तानां शरीरादेः केवलसङ्कल्पाधीनतया शरीरसङ्कल्पे सशरीरत्वं शरीराभावसङ्कल्पे चाशरीरत्वमिति यथासङ्कल्पं मुक्तानां सशरीरत्वमशरीरत्वञ्चेति बादरायणः स्वमतेन सिद्धान्तितवान् । न च मुक्तानां द्विधाभावादिरूपप्रकारवैविध्यं ज्ञानानन्दादिप्रकारभेदनिबन्धनमिति वक्तुं युक्तम् । तादृशवैविध्यस्य बद्धसाधारणत्वेन परमात्मसम्पत्तिकार्यत्वासम्भवात् पित्रादिसमुत्थानसाहचर्येण सङ्कल्पायत्ततादात्विकशरीरसमुत्थाननिबन्धनबन्धव्यावृत्तवैविध्यस्यैव वक्तुमुचितत्वाच्च । 'स यदि पितृलोककामः' (छा० ८-२-१) इत्यादौ यदिशब्दोपबन्धेन पित्रादिसमुत्थानस्य कामनिमित्तकत्ववत् तत्तुल्यन्यायतया द्विधाभावादेरपि कामनिमित्तकत्वावगमेन ज्ञानानन्दादिप्रकारस्यातथात्वाच्च । तस्मान्मुक्तानां यथासङ्कल्पं शरीरादीनि सन्ति न सन्ति चेति युक्तम् ।

बद्धावस्थायामनादिकर्ममूलस्थूलसूक्ष्माचित्सम्बन्धतिरोहितसत्यसङ्कल्पादिगुणतया प्रत्यगात्मनां स्वचिकीर्षितवस्तुसृष्टौ प्रायेण करणकलेबरादिव्यापारान्तरसापेक्षत्वेऽपि मुक्त्यवस्थायां विद्याबलेन निश्शेषाचित्सम्बन्धनिवृत्त्यां कार्त्स्न्येनाभिव्यक्तसत्यसङ्कल्पादिमत्त्वेन तादृशव्यापारान्तरमनपेक्ष्यैव परमात्मसङ्कल्पानुसारिस्वसङ्कल्पान्मुक्तानां स्वचिकीर्षितवस्तुसृष्टिरिति सिद्धम् ॥

॥ **इति अभावाधिकरणम्** ॥

## (६) ॥ अथ जगद्व्यापारवर्जाधिकरणम् ॥

**सू०॥ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥**

**सू०॥ प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥**

**सू०॥ विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥**

**सू०॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥**

**सू०॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥**

तर्हि तेषामीश्वरवत्सत्यसङ्कल्पतया जगत्सृष्टिस्थितिसंहारनियमनादिकमपि स्यादिति शङ्कया सङ्गतिः ।

'जगद्व्यापारवर्जं'मित्यत्र 'संपद्याविर्भावः स्वेनशब्दात्' (ब्र० सू० ४-४-१) इति सूत्राभिप्रेतं स्वरूपाविर्भावायत्तं ईश्वरसाधर्म्यादिशब्दावगतं मुक्तैश्वर्यं मुक्तगतमीश्वरकर्म किं जगत्सृष्टिनियमनादीश्वरधर्मगर्भितं किं वा तद्व्यतिरिक्तानन्दापरपर्यायभगवदनुभवरूपभोगान्तर्गतसृष्टिगर्भितमिति संशयः । तत्र पूर्वपक्षः—

जगत्सृष्ट्यादेरसङ्कुचितज्ञानेच्छासङ्कल्पमूलकतया मुक्तानामपि तथाविधज्ञानादिमत्तया परमात्मन इव जगत्सृष्ट्यादेरवर्जनीयतया मुक्तैश्वर्यं परमात्मसाम्यं जगत्सृष्ट्यादिगर्भितमेव । सङ्कोचे प्रमाणाभावात् । न च जगत्सृष्ट्यादिकारणत्वस्य ब्रह्मलक्षणतया तदसाधारण्यमन्तरेण तल्लक्षणत्वानुपपत्तेर्न मुक्तसाधारण्यम् । अतो मुक्तानामसङ्कुचितज्ञानादिमत्त्वेऽपि न सृष्ट्यादियोग्यतेति वाच्यम् । तस्य ब्रह्मलक्षणत्वे मानाभावात् । सदेव सोम्येदमित्यादिकारणवाक्येषु जगत्कारणत्वस्य न लक्षणत्वं प्रतीयते । ब्रह्मलक्षणत्वस्यापदार्थत्वादवाक्यार्थत्वाच्च । किञ्च 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु० ३-१-३) इति मुक्तस्य परमात्मना परमसाम्यं श्रुतम् । पारम्यञ्च प्रकृष्टत्वम् । तच्च भूयोधर्मनिबन्धनमिति मुक्तानां जगत्सृष्ट्याद्यभावे परमसाम्यमनुपपन्नमिति तदवश्यमङ्गीकार्यमिति ।

राद्धान्तस्तु—मुक्तानां न जगत्सृष्ट्यादिव्यापारस्सम्भवति । प्रत्यक्षादीनां तत्राप्रमाणत्वात् । न हि लोके कश्चित्कुलालो घटं सृजतीतिवत् मुक्तो

जगत्सृजतीति प्रत्यक्षीकरोति । तत एव नानुमानं प्रत्यक्षमूलकत्वादनुमानस्य । नापि तत्र शब्दः प्रमाणम् । लौकिकशब्दस्य प्रत्यक्षाद्यवगतिमूलकत्वेन तदभावादेव तदयोगात् । नाप्यौपनिषदश्शब्दः । 'सदेव सोम्य' (छा० ६-२-१) इत्याद्यौपनिषदेषु वाक्येषु ब्रह्मणः प्रकृतत्वेन मुक्तानामसन्निहितत्वेन तेषां मुक्तेषु जगत्कारणत्वे प्रमाणत्वायोगात् । मुक्तानां जगत्सृष्ट्यादिकारणत्वे जगत्कारणत्वस्य ब्रह्मलक्षणत्वभङ्गापत्तिश्च । तदसाधारणस्यैव तल्लक्षणत्वात् ।

न च जगत्कारणत्वस्य ब्रह्मासाधारणत्वे प्रमाणाभावः शङ्कनीयः गोत्वादेर्गवाद्यसाधारण्ये प्रमाणं महिषाद्यदर्शनोपेतं गोषु दर्शनमेव । तद्वदत्रापि शब्दैकसमधिगम्येऽस्मिन्नर्थे ब्रह्मव्यतिरिक्तेषु शाब्दानवगमोपेतं ब्रह्मणि शब्दावगमनमेव जगत्कारणत्वस्य ब्रह्मासाधारण्यग्राहकमिति तद्बाधापत्त्या मुक्तानां न जगत्सृष्ट्यादिव्यापारस्सम्भवति । समन्वयाध्यायोक्तायोगान्ययोगव्यवच्छेदादेव जगत्कारणत्वस्य ब्रह्मासाधारण्यं सिद्धमेव । न चेश्वरवन्मुक्तानामप्यसङ्कुचितज्ञानादिमत्तया जगत्सृष्टिकल्पनं युज्यत इति वाच्यम् । अङ्गनाङ्गरागादिभोग्यवस्तुसहस्रसमवधानेऽपि षण्डस्य भोगायोगवत् बीजावापजलसेचनादिकारणसमवधानेऽपि शिलाशकलेऽङ्कुरोत्पादायोगवच्च मुक्तेषु जगत्स्रष्टृत्वायोगात् योग्य एव वस्तुनि कारकसमवधानस्य कार्योपधायकतया योग्यतायाः प्रमाणबलकल्प्यतया ब्रह्मण एव जगत्कारणत्वादेकश्रुत्या चिदचित्कालशरीरकत्वस्यैव तद्योग्यतानियामकत्वकल्पनेन मुक्तानां तदभावेनायोग्यत्वात् । न च तदपि मुक्तानां स्यादेवेति वाच्यम् । जगत्सृष्ट्या तत्कल्पनं तत्कल्पने च जगत्सृष्टिकल्पनमित्यन्योन्याश्रयात् ।

वस्तुतस्तु—मुक्तिकाले मुक्तानामसङ्कुचितज्ञानादिसत्त्वेऽपि तत्प्रक्कालीनवस्तुसृष्ट्यसम्भवेन कृत्स्नजगद्व्यापारवर्जमेव मुक्तैश्वर्यं सत्यसङ्कल्पत्वादिकतिपयधर्मगर्भितमित्येव युक्तम् । अत एव परमसाम्यापत्त्यन्यथानुपपत्त्या तत्कल्पनमपि निरस्तम् । मुक्तानां कृत्स्नजगत्सृष्ट्यसम्भवस्योक्तत्वात् । तुलाधृतयोस्सुवर्णकलाशकलयोर्गुरुत्वसाम्येनाप्यत्यन्तसाम्यव्यवहारवद्भोगसाम्येनाप्यत्यन्तसाम्यव्यवहारोपपत्तेश्च । तस्मात्सत्यसङ्कल्पादिकं परमपुरुषानुभवान्तर्गतशरीरसर्जनादिविषयम् । सर्वेषु लोकेषु सञ्चारस्य सामगानवदानन्दकार्यहर्षोद्रेककार्यतया जगत्सृ-

ष्टिनियमनाद्यर्थत्वासम्भवात् मुक्तानां पित्रादिसृष्टितुल्यकतिपयजगत्सृष्टिस्त्विष्टैव। चतुर्मुखादिवत्परायत्तसृष्टौ विरोधाभावात्। तथा साम्यञ्च परमात्मनियाम्यत्वादि-श्रुत्या भोगेनेत्येव युक्तम्।

तथा हि—सामान्येन श्रुतस्य परमात्मसाम्यस्य सर्वसाधर्म्यरूपत्वानुपपत्त्या धर्मविशेषापेक्षायामन्यत्रोपासनफले भोग्यसाम्यरूपसाम्यसायुज्यरूपत्वदर्शनादत्रा-प्युपासनफलभूते साम्ये भोगसाम्यरूपसायुज्यरूपत्वसिद्धेः कथमन्यत्र दर्शनमिति चेत्; 'पृथिवी चैनमग्नेश्च दैवी वागाविशति' इत्यादौ प्राक्प्रस्तुतदेववाङ्मनः-प्राणविज्ञानस्य फलमुच्यते। 'स एवंवित् सर्वेषामात्मा भवति। यथैषा देवता एवं सः यथैतां देवतां सर्वाणि भूतान्यवन्ति। एवं हैवंविदं सर्वाणि भूतान्य-वन्ति। सर्वस्यै देवतायै सायुज्यं सलोकतां यन्ति।' अस्यार्थः—आत्मा भवति आत्मवत्पूज्यो भवति। अवन्ति पालयन्ति। तर्पयन्ति। तेन यथोक्तज्ञानेन एतस्या देवतायास्सायुज्यं सलोकताञ्च यन्तीति। अत्र वाक्ये ब्रह्मविद्विषयत्वाप्रतीतावपि 'छागो वा मन्त्रवर्णात्' इति न्यायेन सामान्यतोऽवगतपरमात्मसाम्यस्य दैववा-ङ्मनःप्राणविज्ञानफले सायुज्यशब्देन भोगसाम्यरूपत्वे दृष्टे तुल्यन्यायतया तादृशसाम्यविशेषदर्शनमिति भोगमात्रसाम्यप्रतिपादनाल्लिङ्गात् मुक्तैश्वर्यं जगद्व्या-पाररहितमेव।

सूत्रार्थस्तु—जगद्व्यापारवर्जं मुक्तैश्वर्यम्। जगद्व्यापारं वर्जयित्वा भवितुमर्हति। 'द्वितीयायां च' (पा० सू० ३-४-५३) इति णमुल्। वृत्तिव्या-ख्यातृभिः 'अनुदात्तं पदमेकवर्जं' (पा० सू० ६-१-१५७) इत्यत्र तत्र परीप्सायामिति प्रायिकमित्युक्तम्। यद्वा जगद्व्यापारं वर्जयतीति जगद्व्या-पारवर्जम्। मुक्तैश्वर्यमिति विशेष्यम्। तदेवं परमपुरुषसाम्यं सत्यसङ्कल्पत्वञ्च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन जगद्व्यापारवर्जम्, परम-पुरुषायत्तञ्च मुक्तैश्वर्यमिति सिद्धम्।

यदि परमपुरुषायत्तं मुक्तैश्वर्यं तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसम्भावनाशङ्केत्यत्राह—

## सू०॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ २२ ॥

यथा 'यतो वा इमानि भूतानि जायन्ते' (तै० ३-१) 'सोऽकामयत। बहु स्यां प्रजायेयेति' (तै० २-६) 'यः पृथिवीमन्तरो यमयति' (बृ० ३-७-३) 'य आत्मानमन्तरो यमयति' (बृ० ३-७-२३) इत्यादिशब्दान्निखिलजगज्जन्मादिकारणं निखिलजगन्नियन्ता परमपुरुषोऽस्तीति अवगम्यते, तथा 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा० ४-१५-६) 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते' (छा० ८-१५-१)

'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानस्संसिद्धिं परमां गताः॥ (गीता० ८-१५)

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥ (गीता० ८-१६)

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥' (गीता० १४-२)

इत्यादिशब्दान्मुक्तः कदापि नावर्तत इत्यवगम्यते। तथा—

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। (गीता० ७-१७)

उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम्॥
(गीता० ७-१८)

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः॥' (गीता० ७-१९)

इत्यादिशब्दादत्यर्थप्रियं ज्ञानिनं लब्ध्वा परमकारुणिको भगवान्परमपुरुषोऽपि तं नावर्तयिष्यतीत्यवगम्यते। अतः स्वेन वा परेण वा न पुनरावृत्तिशङ्का। सूत्रावृत्तिश्शास्त्रपरिसमाप्तिं द्योतयति।

इति श्रीवाधूलकुलतिलकश्रीलक्ष्मणार्यकरुणाकटाक्षलब्ध-
तत्त्वयाथात्म्येन तदनन्यदैवतेन श्रीमन्नृसिंहार्यतनुजेन
श्रीमहीसारपुरवास्तव्येन श्रीवेङ्कटाचार्यापरनाम्ना
श्रीनिवासदासेन विरचितायां
श्रीभाष्यप्रकाशिकायां
चतुर्थस्याध्यायस्य
चतुर्थः पादः॥

चतुर्थाध्यायस्समाप्तः

अधिकरणानि ६. सूत्राणि २२.

आदितः अधिकरणानि. १५६.

आदितः सूत्राणि. ५४५.

॥ श्रीभाष्यप्रकाशिका समाप्ता ॥

॥ शुभमस्तु ॥



# ॥ श्रीभाष्यप्रकाशिका ॥

## ॥ अकारादिक्रमेण सूत्रसूची ॥

**॥ आहत्य सूत्राणि ५४४ ॥**

**॥ सूत्रसूची समाप्ता ॥**

---

॥ श्रीः ॥

# APPENDIX

Different readings found in a copy of a manuscript in the 'Sri. Venkatesvara Oriental Institute, Tirupathi

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| १ | ११ | परम्पराप्राप्तं | परिप्राप्तम् |
| ,, | २० | सूचिताः | सङ्कुचिताः |
| ,, | २१ | वाक्यार्थकार्य | वाक्यस्थकार्य |
| ,, | ,, | शब्दसङ्कोच | शब्दासङ्कोच |
| २ | ३ | जगतोत्पत्ति | जगद्गतोत्पत्ति |
| ,, | ५ | वादि | वाद् |
| ,, | ६ | भजो | भञ्जो |
| ,, | ८ | तेन | तेन च |
| ,, | ९ | स्मरणमुखेन | स्मारणमुखेन |
| ,, | १३ | कल्पित | विकल्पित |
| ,, | १४ | नतिशब्दोक्त | न तु शब्दोक्त ? |
| ,, | २६ | नतशब्देन | विनतशब्देन |
| ३ | ११ | भेदयोरुपपत्ति | भेदोपपत्ति |
| ,, | १४ | ब्रह्मत्व | बृहत्व |
| ,, | २५ | परम्परया प्राप्त | परम्पराप्राप्त |
| ४ | ६ | स्वप्रबन्धे | स्वमङ्गलप्रबन्धे |
| ,, | १२ | प्रसिद्धापत्ति | प्रसिद्धाप्तिः |
| ,, | १८ | सूत्रस्य | सूत्रार्थस्य |
| ,, | २४ | यैस्ते च | यैस्ते ते च |
| ,, | २७ | दाहे | दाहेन |
| ,, | ,, | विश्लेषे | विशेषे ? |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ५ | ५ | यामुनाचार्य | यामुनार्य |
| ,, | ६ | धीस्थीकृतां | धीस्थिरीकृताम् |
| ,, | ७ | व्याघातेन | व्याघातेन च |
| ,, | १० | व्याख्यानात्मकतया | व्याख्यानाकर्मकतया ? |
| ,, | ११ | बीजाक्षर्याभाय | बीजाक्षरलाभाय |
| ,, | १३ | गोचरकरणेन | गोचरीकरणेन |
| ५ | १७ | बोधायनवृत्तिग्रन्थादयः | बोधायनादिवृत्तिग्रन्थादिभिः |
| ६ | ५ | गत्यर्थाः | सर्वे गत्यर्थाः |
| ,, | ११ | अनेन च स्वव्याख्यानस्य | अनेन सूत्राणि चाक्षराणि च व्याख्यास्यन्त इत्यर्थकेन च स्वव्याख्यानस्य |
| ,, | १५ | सङ्कुचितद्रमिड | सङ्कुचितात् द्रमिड |
| ,, | १७ | द्वितीयश्लोकः | श्लोकः |
| ,, | ,, | शारीरशास्त्रस्य | शारीरकशास्त्रस्य |
| ,, | ,, | चतुष्टयप्रतिपादनपरः | चतुष्टयपरः |
| ,, | २१ | मङ्गलार्थमाहुः | मङ्गलार्थकमाहुः |
| ७ | ५ | पर्यन्ताश्रयणे | पर्यन्तताश्रयणे |
| ,, | १९ | तसिलन्तैतच्छब्देन | तसिलन्तेनैतच्छब्देन |
| ८ | १६ | पूर्वभाव | पूर्वभावि |
| १० | ११ | दोषासंस्पर्शं | दोषास्पर्शं |
| ,, | १३ | विषयं ध्यान | विषयध्यान |
| ,, | २४ | ब्रह्मजिज्ञासा | धर्मजिज्ञासा |
| ,, | २६ | प्रकृते वृत्ते | प्रकृतेर्वृत्ते |
| ,, | २७ | सिद्धवृत्त | सिद्धम्, वृत्त |
| ११ | ६ | कर्मब्रह्मविचार | कर्मविचार |
| ,, | २१ | नियमितत्वादनवकाशः | नियमितत्वादत्र तदनवकाशः |
| १२ | १२ | इति प्रमाण | इत्यादिप्रमाण |
| ,, | २१ | अर्थसम्बन्धिनि | अर्थासम्बन्धिनि |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| १३ | ६ | सन्नर्थ | सनर्थ |
| ,, | ११ | कत्वेन | त्वेन |
| ,, | १२ | न च कर्मविचारसमधिगत | न च कर्मविचारानन्तरभाविनि कर्मविचारसमधिगत |
| ,, | २८ | विमर्शनात् | विमर्शात् |
| १४ | ४ | निष्ठत्वेन शक्यत्व | निष्ठत्वेनाशक्यत्व |
| ,, | ७ | निरास | निराकरण |
| ,, | ८ | प्रतिष्ठापनार्थत्वात् | प्रतिष्ठापरार्थत्वात् |
| ,, | ११ | रहितस्य समीचीन | रहितसमीचीन |
| ,, | २६ | लिङादिर्लभ्येत तत्र | लिङादिलभ्ये तत्र |
| ,, | २७ | सर्वकार्यबोध | सर्वत्र कार्यबोध |
| १५ | ११ | अप्राप्तार्थैकविधौ | अप्राप्तार्थविधौ |
| ,, | १४ | व्यावृत्तं च सुखैकसाधनत्वप्रयुक्तोद्देश्यतायां | व्यावृत्तं च सुखैकसाधनत्वप्रयुक्तोद्देश्यता विशेषरूपं कृत्युद्देश्यत्वरूपकार्यत्वं निमित्तीकृत्य धर्मापरपर्यायापूर्वे कार्ये वेदावसाना स्थाप्यते इति चेन्न; सुखैकसाधनत्वप्रयुक्तोद्देश्यतायां । |
| ,, | १५ | रूपज्ञान | रूपजाति |
| ,, | २० | दुःखासाधनत्व | दुःखसाधनत्व |
| ,, | २२ | रूपप्रकृति | रूपकृति |
| ,, | २३ | साध्याख्य | साध्यताख्य |
| ,, | २७ | अतिसाहस | अत्र साहस |
| १६ | २ | संसर्ग | संसर्गत्व |
| ,, | ५ | पितृप्रभृतिभिः | पितृभिः |
| ,, | ,, | शब्दार्थसम्बन्धबोधनाय | शब्दार्थबोधनाय |
| ,, | ११ | इह नगः | इह नगरे |

| Page | Line | मुद्रितकोशस्थ: पाठ: | तिरुपतिमातृकास्थ: पाठ: |
|---|---|---|---|
| १६ | १६ | अपहतपाप्मा न नश्यति स आत्मा | अपहतपाप्मा ' मायया संनिरुद्धः' ' अनीशया शोचति मुह्यमान:' ' तयोरन्य: पिप्पलं स्वाद्वत्ति ' ' अत्रायं पुरुष: स्वयं ज्योति:' ' यो वेदेदं जिघ्राणीति स आत्मा' ' एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति ' ' स आत्मा |
| ,, | २० | भूमत्वभ्रम | भ्रमत्वभ्रम |
| ,, | २१ | अनुसन्धानेन शक्यत्वात् | अनुसन्धाने शक्यत्वबुद्धौ |
| ,, | २४ | प्रामाण्यमक्षतमेव | प्रामाण्यमपेक्षितमेव |
| ,, | २५ | तव्य: | तव्यो द्रष्टव्य: |
| ,, | २७ | तस्य तत्प्रकार | तस्य च प्रकार |
| ,, | २८ | दु:खसम्भिन्न | दु:खासम्भिन्न |
| १७ | २१ | तद्दर्शनात् स विष्णुराह हि तं | तददर्शनात् विष्णुराह हितं |
| १८ | ५ | कारणत्वानीव | कारणत्वानि वा |
| ,, | ६ | लक्षकत्वे | लक्षकत्वेऽपि |
| ,, | २२ | शारीरकं शास्त्र | शारीरकशास्त्र- |
| १९ | ४ | पुरोवादवाक्ये | पुरोवाक्येन |
| ,, | ५ | सदेकाश्रय | सदाश्रय |
| ,, | ७ | चलति | विशति |
| ,, | ८ | प्रयुक्तैकस्थूल | प्रयुक्तकस्थूल |
| ,, | १५ | रकं शास्त्र | रकशास्त्र |
| ,, | २१ | मदृष्टद्वारक | मदृष्टाद्वारक |
| ,, | २४ | लिङ्गकेन | लिङ्गीकन |
| ,, | ,, | दकैकत्व | दककत्व |
| ,, | २५ | क्लृप्तत्वलाघवा | क्लृप्तलाघवा |
| २० | ६ | शरीर | शारीर |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकस्थः पाठः |
| --- | --- | --- | --- |
| २० | ,, | अभावे सिद्धे | अभावसिद्धे |
| ,, | १० | ब्रह्मत्वं | बृहत्त्वं |
| ,, | १४ | वैकार | वाकार |
| ,, | १५ | धर्मसाधक | धर्मिसाधक |
| ,, | १७ | वेदान्तानां | वेदान्तानां मध्ये |
| ,, | २० | शीघ्रतरबुद्ध्यवरोहणौ-पयिकतया | शीघ्रबुद्ध्यवरोहणबुद्ध्यौपयि-कतया |
| ,, | ,, | क्लृप्तत्व | कराप्तत्व |
| ,, | २३ | ष्वघटकत्वादिजात्यन्तव-च्छेदक | ष्वघटत्वादिजात्यवच्छेदक |
| ,, | ,, | कारणस्यैव | कारणभावस्यैव |
| २१ | २ | नन्दस्वरूपस्य | नन्दरूपत्वस्य |
| ,, | ,, | अभिमत | अभिप्रेत |
| ,, | ३ | अनुमानतः कथञ्चिदपि प्राप्तिः | अनुमानतः प्राप्तिः |
| ,, | ८ | रुमा | र्यमा |
| ,, | ११ | जराविरूपमोचकत्व- | जराविमोचकत्व- |
| ,, | २३ | परप्रतीत्यर्थस्य | परप्रतिपत्त्यर्थस्य |
| २२ | १७ | तथा | यथा |
| ,, | १८ | तथा च | यथा च |
| ,, | ,, | देशान्तरगतः | देशान्तरं गतः |
| ,, | २१ | स्मृत्यवश्यं- | सत्यतावश्यं- |
| २३ | १३ | वेदान्तार्थ | वेदार्थ |
| ,, | १५ | कारणत्व | निर्विकारत्व |
| ,, | २४ | बहुतरमृत्सुवर्णघट-कुड्यादि- | बहुतरसुवर्णघटमकुटादि |
| ,, | ,, | अदृष्टकार्य | दृष्टकार्य |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| २४ | २ | वाक्यसारूप्येण | वाक्यानुसाररूपेण |
| २५ | ५,६ | शरीरप्राणमनो | शरीरमनो |
| ,, | ११ | जीवोपकरण | जीवोपक्रमण |
| ,, | १२ | सद्विद्ययोश्चेतन | सद्विद्यायाश्चेतन |
| ,, | २०,२१ | रूपलिङ्गेन | रूपबलवल्लिङ्गेन |
| २६ | ७ | आप्रणखात्सर्व | आप्रणखात्तस्य सर्व |
| ,, | ९ | आपद्येरन् | आपद्यन्ते |
| ,, | १५ | पापातीतत्वस्य | पापातित्वस्य ? |
| ,, | १८ | मण्डलान्तर्वर्ति | मण्डलवर्ति |
| ,, | २१ | ज्ञानशक्त्यादि | ज्ञानाधिक्यादि |
| ,, | २२ | कारणब्रह्म | कारणं ब्रह्म |
| ,, | २६ | कर्मानिबन्धनस्य | कर्मनिबन्धनस्य |
| २७ | ३ | हिरण्मयश्रुत्यादि-विलक्षण | हिरण्यश्मश्रुरित्यादिविलक्षण— |
| ,, | ५ | सङ्घसंस्थानो | सङ्घसङ्घातो |
| ,, | १७ | अथाचिद्विशेषवैलक्षण्य- | अचिद्वैलक्षण्य- |
| ,, | २४ | ज्यायस्त्वादीनामवकाशहेतुत्वकारणत्वप्रयुक्त | ज्यायस्त्वादीनामिवाकाशहेतुत्वप्रयुक्तकारणत्वप्रयुक्त |
| २८ | ४ | अवयवार्थबोधसापेक्ष | अवयवार्थसापेक्ष- |
| ,, | ,, | रूढा | रूढ्या- |
| ,, | ११ | निर्दिष्टे | निर्विशेषे |
| ,, | २१ | बाधे को | बाधको |
| ,, | २४ | विनियोग | विनियोजक |
| ,, | ,, | गार्हपत्यपदस्य | गार्हपदस्य |
| ,, | २७ | च नैकान्त- | चेतनैकान्त- |
| २९ | १४ | देवत्वतिर्यक्त्व- | देवतिर्यक्त्वा- |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| २९ | १८ | मस्ति । सूक्ष्मा | मतिसूक्ष्मा- |
| ,, | २२ | एतच्छब्देन निर्दिष्टात् प्राण- | एतच्छब्दनिर्दिष्टात् प्राणात् प्राण- |
| ,, | २३ | प्रवृत्ति न स्यात् | प्रवृत्तिकं न स्यात् |
| ,, | २५ | सत्येतदैक- | सति तदैक- |
| ३० | ७ | शरीर इवानुपलब्ध- | शरीररूपानुपलब्ध- |
| ,, | १५ | नुपादानत्वात् | नुपादानात् |
| ,, | ,, | भावस्यास्य | भावस्य |
| ,, | १८ | अवच्छिन्नानन्द- | अनवच्छिन्नानन्द |
| ,, | ,, | विग्रहत्व | विग्रहवत्त्व |
| ,, | २० | कारणवस्तु | कारणं वस्तु |
| ,, | २४ | प्रसिद्धपर- | प्रसिद्धपद- |
| ३१ | १३ | कौक्षेय | कौक्षेयक- |
| ,, | १७ | रूपव्यासरूप- | रूपव्यासदीप्ते रूप- |
| ,, | १८ | पृष्ठेषु | पृष्ठे |
| ,, | १९ | भौमक | भौतिक |
| ,, | २१ | युक्तवस्तुनः | युक्तस्य वस्तुनः |
| ,, | २२,२३ | ऐकार्थ्यापन्नैस्त- द्वाक्यानु- | ऐकार्थ्यापन्नैतद्वाक्यानु- |
| ,, | २४ | भूतशब्दार्थमचेतनमात्रं | भूतशब्दार्थः चेतनमात्रं |
| ३२ | ५ | सूक्ष्मत्वाच्छादक | सूर्याद्याच्छादक- |
| ,, | ७ | दीप्तिश्रुतिभिः | तपतिश्रुतिभिः |
| ,, | १९ | प्रसिद्धं जाठर- | प्रसिद्धजाठर- |
| ,, | ,, | योगाश्च | योगश्च |
| ,, | २० | उपपद्यन्ते | उपपद्यते |
| ३३ | १५ | (वक्तृहीनना) | वृत्रहनना |
| ,, | १६ | स्थलिङ्गात् | स्थभूयोलिङ्गात् |
| ,, | २० | एष प्राण एव | एष एव |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ३३ | २१,२२ | सङ्कुचितत्वानन्दत्व | सङ्कुचितानन्दत्व |
| ,, | २४ | गतत्वाष्ट्र | गत्वाष्ट्र |
| ३५ | १७ | | अस्याधिकरणस्य 'सर्वं खल्विद'- मित्यारभ्य 'पूर्वपक्षे प्राप्ते' इत्यन्तः पूर्वपक्षभागः अत्र कोशे न दृश्यते । |
| ३६ | १८ | विग्रहत्वादिगुणानां | विग्रहत्वादीनां गुणानां |
| ,, | १९ | एष आत्मा | एष म आत्मा |
| ,, | २२ | सर्वात्मकतया | सर्वात्मतया |
| ३७ | १० | निर्दिष्टोऽत्ता | निर्दिष्टात्ता |
| ,, | १५ | प्रसिद्धत्वात् | प्रसिद्धात् |
| ,, | १८,१९ | मूलता....ममत्वमृत्यो | मूलतां मत्वा मृत्यो |
| ,, | १९ | नोपचर्यते | नोच्यते |
| ,, | २० | पर इति | पररूप इति |
| ,, | २१ | सिद्धान्तस्तु | राद्धान्तस्तु |
| ,, | २३ | भोग्यत्व | भोज्यत्व |
| ३८ | ८ | पदात्संहर्ता | पदार्थसंहर्ता |
| ,, | १० | बाधकत्वेन | अबाधकत्वेन |
| ,, | १४ | संहारहेतुत्व | संहार्यत्व |
| ,, | १९ | परमात्मत्वहेतुत्वसंभवात् | परमात्मत्वसंभवात् |
| ,, | २१ | यस्य चेत्यस्य | यस्य ब्रह्म चेत्यस्य |
| ३९ | ११ | एष एव | एष उ एव |
| ४० | १७ | नियमन | नियम |
| ,, | १९ | कल्पेषु उपचित | कल्पे कश्चनोपचित |
| ,, | २२ | कथं नु स्यात् | कथं स्यात् |
| ४१ | ३ | पर्याये | पर्यायेण |
| ,, | ८ | त्वेनोपदेशेन | त्वेपदेशेन ? |
| ,, | ११ | भेदार्हं | भेदगर्भ– |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ४१ | १२ | भावोपपादनेन | भावोपदेशेन |
| ,, | १३,१४ | समानमितरच्चे.... वैशेषिक— | समानमितरच्छब्देनेन इत्यत्र निषेध्यवैशेषिक— |
| ४२ | ५ | | किं वेति नास्ति |
| ,, | ७ | नञिवयुक्त | नञुपयुक्त |
| ,, | ,, | इत्यादौ अवस्था | इत्यादावप्यवस्था |
| ,, | १२ | सकलप्रदर्शन | सङ्कलय्य प्रदर्शन |
| ,, | १८ | ब्रह्मशब्दोक्तप्रधान | ब्रह्मशब्दोक्तप्रधानशब्दोक्तप्रधान |
| ,, | २१ | | पुस्तकेऽत्र 'इत्यनध्याहार' इत्यादिः वैश्वानराधिकरणस्थ 'निर्दिधारयिषया' इत्यन्तः अधिकरणद्वयांशात्मको भागो नोपलभ्यते । |
| ४४ | ७ | तदभिज्ञं | अनभिज्ञं |
| ,, | ०. | ब्रह्मदृष्टि- | ब्रह्मशब्दयोर्दृष्टि |
| ,, | १२ | परमात्मैवेति | परमात्मैवेति सुनिर्णय इति |
| ४५ | ९ | रूपस्पष्टताक | रूपेण स्पष्टताक- |
| ,, | १० | चिन्त्यन्ते | चिन्त्यते |
| ,, | १२ | यस्मिन् | यस्य |
| ,, | २० | वच्छेदकत्वरूपेण | वच्छेदकरूपेण |
| ,, | २१ | स्पष्टमेव | स्पष्टम् । |
| ,, | ,, | शिष्टं | अवशिष्टं |
| ,, | २२ | संशय्य | संशये |
| ४६ | ३ | साधारण्यात् | साधारणत्वात् |
| ,, | ७ | एष आत्मा | एष म आत्मा |
| ,, | ८ | हृदयस्थान्तश्चरण | हृदयस्थतयान्तश्चरण- |
| ,, | १८ | उपक्रान्त | प्रक्रान्त |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ४३ | १९ | पितृत्वभ्रातृत्व | भ्रातृत्व |
| ,, | २० | मिति गम्यते | मित्यवगम्यते |
| ,, | २१ | पितरं वा | पितरं |
| ,, | २२ | प्रभृतिषूप | प्रभृतिष्वप |
| ४७ | ५ | सूचन | सूचक |
| ,, | ७ | स्वरूपस्य | रूपस्य |
| ,, | ९ | होत्री यस्सत्यं | होत्री अतिवदति यस्सत्यं |
| ,, | १३ | वस्तुवदन | वस्त्वदन |
| ,, | २३ | अक्षराधिकरणे | अम्बरान्ताधिकरणे |
| ,, | २४ | अह्रस्वमदीर्घमित्यत्र | अह्रस्वमित्यत्र |
| ,, | २५ | परमात्मेति | परमात्मा वेति |
| ४८ | २ | प्रसिद्धस्य | प्रसिद्धस्य प्रधानस्य |
| ,, | १२ | गार्ग्याकाश | आकाश |
| ,, | २२ | वेति | वा किं तु परमात्मेति |
| ४९ | ४ | परं पुरुषं | परमपुरुषं |
| ,, | ७ | द्विमात्राकारप्रणव | द्विमात्रप्रणव |
| ५० | ९ | अन्तर आकाशः | अन्तराकाशः |
| ,, | १२,१३ | तदन्वेष्टव्य इत्यन्वेष्ट-व्यान्तर | तदन्वेष्टव्यान्तर |
| ,, | १३ | श्रुतत्वात् | श्रुततया |
| ,, | १५ | तस्य आसमन्तात्काशत इति व्युत्पत्त्या | तस्य भूताकाशान्तर्वर्त्यन्वेष्टव्यपर-मात्मगतत्वेनानुपपत्त्यभावात् यद्वा दहराकाशः प्रत्यगात्मा ‘हृदि ह्यय पुरुष’ इत्यादिश्रुत्या हृदयपुण्डरीकस्थितिसम्भवात् आ-काशते प्रकाशते इति व्युत्पत्त्या |
| ,, | १६ | आकाशपद | आकाशगुण |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ५० | १७ | पाप्मत्वादि | पाप्मत्वादिगुण- |
| ५१ | ३ | काशाद्यतिरिक्त | काशातिरिक्त |
| ,, | ८ | तदन्तर्वर्ति च | तदन्तर्वृत्तिश्च |
| ,, | २४ | प्रत्यगात्मन्यणुस्वरूपे | प्रत्यगात्मस्वरूपे |
| ५२ | २ | (श्रुतौ प्रसिद्ध) | श्रौतप्रसिद्धि |
| ,, | ९ | हृदयोपाधिक | हृदयौपाधिक- |
| ,, | २२,२३ | देवताचैतन्यादौ | चैतन्यादौ |
| ५३ | ६,७ | नामधेयानामपि | नामधेयान्यपि |
| ,, | ११ | दाहृतानां | दाहृतानां |
| ,, | १३ | भावात् अध्ययन-तिरस्कृत | भावाच्चाध्ययनसंस्कृत |
| ,, | १४ | पूर्वपक्षः | पूर्वः पक्षः |
| ,, | १५ | विद्याधिकारः | विद्यावधिकारः |
| ,, | २० | गाम्भीर्यशौर्य | गाम्भीर्यौदार्यशौर्य- |
| ,, | २२ | स्तुतेरनुत्पत्त्या | स्तुतिबुद्धेरनुत्पत्त्या |
| ,, | ,, | वश्यंभावे | वशंभावे |
| ५४ | ६ | वदनेक | वदेकदानेक |
| ,, | ,, | ग्रहविशेषात् | ग्रहशक्तिविशेषात् |
| ५५ | १३ | स्वरूपगुणादि | स्वरूपरूपगुणादि |
| ,, | १५ | आलापयिष्यथाः | आलापयिष्यसि |
| ,, | १८ | ब्रह्मविद्या | विद्या |
| ,, | २३ | र्दश्च | र्दुश्च |
| ५६ | ७ | न तेषां ब्रह्म- | न ब्रह्म- |
| ,, | २० | कर्तृत्वसंभवात् | कर्तुरसम्भवात् |
| ,, | २१ | आकाशो | आकाशोऽत्र |
| ,, | २४ | मुक्तेश्च | मुक्ते च |
| ५७ | ६ | प्राप्यतया | अत्र प्राप्यतया |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ५८ | २२ | सहस्रं त्वामि | सहस्रं न्वामि- |
| ५९ | ५ | परावर- | परापर- |
| ,, | ८ | अन्तःकरणस्य | मनश्शब्देनान्तःकरणस्य |
| ,, | ९ | अव्यक्तशब्देन इति | अव्यक्तशब्देन च |
| ,, | १४ | परत्वानपेक्षिततया | परत्वस्यानपेक्षिततया |
| ,, | २३ | तन्त्रसिद्धप्रक्रिया | तन्त्रप्रक्रिया |
| ,, | २६ | चार्थ | अत्र चार्थ |
| ६० | ४ | वाचित्वसिद्ध्या | वाचित्वासिद्ध्या |
| ,, | ५ | तत्त्वप्रतीतेः | तत्वाप्रतीतेः |
| ,, | ८ | संख्याक | संख्यात |
| ,, | १७ | ज्ञानमात्मनि | ज्ञान आत्मनि |
| ,, | २६ | एवात्र सिद्ध- | एवात्रोच्यत इति नात्र तन्त्रसिद्ध- |
| ६१ | ११ | स्रष्टृत्व | सृष्टीत्व |
| ,, | १७ | प्रकृतिपरप्रकरण | प्रकृतिपरिग्रहे प्रकरण |
| ,, | २० | स्रष्टृत्व | सृष्टीत्व |
| ६२ | २ | सम्बन्धस्वरूप- | सम्बन्धस्य स्वरूप- |
| ,, | ९ | संख्योप- | न संख्याप- |
| ,, | १५ | समाहारसमासविषय | समाहारविषय |
| ,, | १६ | पञ्चसंख्य | पञ्चसंख्याक |
| ,, | २३ | श्रुतशब्दौ | श्रुतब्रह्मामृतशब्दौ |
| ६३ | २ | अर्थयोस्तत्वयोः | अर्थयोर्द्वयोस्तत्वयोः |
| ,, | २४ | सदैक्षतेत्यादि | सदीक्षत्यादि |
| ६४ | ४ | ब्रह्म ज्येष्ठं इत्यादिना | ब्रह्मात्मेक्षत्यादिना |
| ,, | ५ | | सदादिवाक्य इति नास्ति । |
| ,, | १६ | यस्य वैतत् | यस्य चैतत् |
| ,, | १७ | do | do |
| ,, | २२ | रूढत्वेऽपि | रूढिसत्वेऽपि |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ६४ | २५ | यस्य वैतत्कर्म | यस्य चैतज्जगत्कर्म कार्यं |
| ६५ | २ | एतेषां | य एतेषां |
| ,, | ४ | करणोपपादादि | प्रकरणोपपदादि |
| ,, | १३ | सङ्गच्छते | सङ्गंस्यते |
| ६६ | ९ | आत्मस्वरूपस्य | आत्मस्वरूपाणां |
| ,, | १४ | निश्चिते | निश्चीयते |
| ,, | २२ | अनुरोधात् | अनुसारात् |
| ,, | २५ | परमात्म | किं तु परमात्म- |
| ६७ | १३ | निमित्तत्वोपादान | निमित्तोपादान |
| ,, | २१ | मूलकतया | मूलतया |
| ६८ | २५ | मृत्पिण्डभूतलयोश्च | मृत्पिण्डभूतलयोर्घटभूतलयोश्च |
| ६९ | २ | विकारवदपुरुष | विकारपदंपुरुष |
| ,, | ४ | निमित्तत्वोपादान | निमित्तोपादान |
| ,, | ६ | अभ्युपगतत्वाच्च | अभ्युपगमाच्च |
| ,, | १९ | कटाक्ष | करुणाकटाक्ष |
| ७० | १६ | भूततया | भूत तथा |
| ७१ | २ | कारणत्वपरत्वावश्यं | कारणत्वावश्यं |
| ,, | ,, | कारणत्वपरत्वं | कारणपरत्वं |
| ,, | ५ | श्रुतावाप्त | श्रुताप्त |
| ,, | ६ | भगवदाराधनात्मक-प्रधानकारणपरतया | भगवदाराधानात्मककर्मपरताप्राप्त-भगवदैदम्पर्यभूमितया च अप्रामाण्यकोटिनिवेशविषयान्तकल्पनात्मकान्यधीसिद्ध्यर्हतया निरवकाशत्वेन कपिलस्मृतेः ब्रह्मात्मकप्रधानकारणपरतया वा |
| ७३ | २० | शरीरिण्यप्रसङ्गात् | शरीरिण्यप्रसङ्गवत् |
| ,, | २१ | विकारादीनां | बिकारत्वादीनां |

| Page | Line | मुद्रितकोशस्थ. पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ,, | ,, | | अत्र कोशे ‘ चिदचिच्छरीरिणी’-त्यारभ्य ‘ इत्यादिप्रमाणप्रतिपन्ने ’ त्यन्तो भागो नास्ति । |
| ७४ | ७ | विशेषेऽपि | विशेषेषु |
| ,, | ८ | यद्विशेषः प्रयोजकः | यद्विशेषं प्रयोजकं |
| ,, | १३ | शास्ति वृत्त्यनुगुणं | शासनातिवृत्त्यनुगुणं |
| ,, | १७ | श्वरविभागः | श्वरधर्मविभागः |
| ७६ | १८ | ज्ञाज्ञौ | ज्ञाज्ञौ द्वौ |
| ७७ | ६ | अवस्थायाः | अवस्थयोः |
| ,, | २० | विशिष्टत्वयोगो | विशिष्टत्वावस्थायोगो |
| ,, | २१ | निषेधितया | निषेधकतया |
| ,, | २२,२३ | विशिष्टैवैयाज्ञान | विशिष्टैक्यज्ञान |
| ,, | २७ | चिदचिद्द्वारा | चिदचिद्विशेषणद्वारा |
| ७८ | १२,१३ | शक्तस्यापि | शक्तस्यैव |
| ,, | २२ | दारम्भकत्वानुप | दारम्भकानुप- |
| ,, | २३ | तक्रातश्चेन | पाकातश्चेन |
| ८० | १३ | वृत्तेश्चाभ्यु- | वृत्तेरभ्यु |
| ८१ | ७ | वासव्यस्व- | व्यासस्व- |
| ८२ | २ | नैर्घृण्ययो कर्म- | नैर्घृण्ययोः, विषमसृष्टेः कर्म- |
| ,, | ६ | ब्रह्मशक्तयः | सृज्यशक्तयः |
| ,, | ९ | व्यवहाराणामेव प्रधानकारणत्वात् | व्यवहारेण च |
| ,, | ११ | क्षापण | क्षपण |
| ,, | १८ | स्मृतिन्याय | न्याय |
| ८३ | १७ | क्तानुमानं | क्तमनुमानं |
| ८४ | १२ | शौक्ल्याादिधर्मयुक्तं पटादि कार्यद्रव्यं शौक्ल्यादियुक्ततन्त्वाद्यु | शौक्ल्यादिधर्मयुक्तं तन्त्वाद्यु- |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
| --- | --- | --- | --- |
| ८४ | १५ | सकर्तृकं | सत्प्रकृतिकं |
| ,, | १६ | परमाणुमीश्वरं वा | परमाणूनीश्वरं च |
| ,, | २५ | चेतनाधिष्ठितदार्वादेः प्रासादादिकार्यारम्भाणां प्रदर्शनेन | चेतनाधिष्ठितानधिष्ठितदार्वादेः प्रासादादिकार्यारम्भानारम्भदर्शनेन |
| ८५ | ४ | वहन | गहन |
| ,, | १० | करणनिर्णीतम् | करणे निर्णीतम् |
| ,, | २० | आनुमानिक | महद्दीर्घाधिकरणे—आनुमानिक |
| ८६ | ४ | द्वाभ्यां | द्वाभ्यां द्वाभ्यां |
| ,, | ५ | भावे | भावेन |
| ,, | ६ | द्व्यणुकेषु | कारणबहुलत्वेन |
| ,, | ७ | कत्वेन | कत्वात् |
| ,, | ११ | मुत्पद्यते | मुत्पद्यन्ते |
| ,, | २१ | पर्यायपार्श्वैः | पर्यायैः पार्श्वैः |
| ,, | २३ | परमाण्वोरपि | परमाणोरपि |
| ८७ | १४ | सम्बन्धनित्यत्वेऽपि | सम्बन्धसम्बन्धनित्यत्वे |
| ८८ | २२ | मेवेत्याहुः | मेवाहुः |
| ,, | २३ | मित्थं | मेवं |
| ,, | २७ | संघाता एव पदार्थाः | संघाता भवन्ति । सर्वत्रावयवसंघाता एव पादार्थाः । |
| ८९ | २ | तच्चाक्षुषत्वाय तत्र रूपादि | तच्चाक्षुषत्वायत्तरूदि ? |
| ,, | १६,१७ | क्षणिकत्वं उभयस्मिन् स्थिरे | क्षणिकत्वमुभयेऽप्यातस्थिरे |
| ,, | १८ | सम्भवात् | सम्भवात् । तथा हि |
| ,, | २० | द्रव्योत्तर | द्रव्यान्तर |
| ,, | २४ | मानरूढतया | मानारूढितया |
| ,, | २६ | हानादिकाले | हानकाले |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ८९ | २८ | स्थिरत्वरूप | स्थिरत्वबुद्धिरूप |
| ९० | ५ | तयाविद्यादेः | तया विद्यादेः |
| ,, | ७ | सविषय | विषय |
| ,, | १० | योऽहं पूर्वं घटं | योऽहं घटं |
| ९१ | ६ | बाह्यान्तरास्तित्व | बाह्यान्तरार्थास्तित्व- |
| ,, | ९ | सरूपं रूपं | सरूपरूपं |
| ,, | १२ | स्वरूपं | स्वरूपत्वं |
| ,, | १४ | द्विचन्द्र | चन्द्र |
| ,, | १८ | प्रत्यक्षत्वानु- | प्रत्यक्षानु- |
| ९२ | ९ | तात्कालिकविलक्षण- | तात्कालिकविषयविलक्षण- |
| ,, | ११ | द्विचित्रज्ञान | द्विज्ञान |
| ,, | १८ | मतमार्गमर्यादा | मतमर्यादा |
| ,, | २१ | पिण्डादेरुप- | पिण्डाद्युप- |
| ९३ | ९ | किं नु | किं |
| ,, | १४ | अभावात्मकस्वरूप- तुच्छमप्य- | अभावात्मकत्वरूपं तुच्छत्वमित्यप्य- |
| ,, | १६ | यथा घटः | यतो घटः |
| ,, | ,, | (कपालापेक्षया नासन्) | कपालापेक्षया चासन् स्वापेक्षया नासन् |
| ,, | १७ | उभयात्मकता | उभयानुभयात्मकता |
| ,, | ,, | मततुच्छत्वं | मतं तुच्छत्वं |
| ,, | २० | भावः प्रतीयते | भाव एव प्रतीयते |
| ,, | २४,२५ | एतावताऽव्यव | एतावता व्यव— |
| ,, | २५ | मापद्येत | मापद्यते |
| ,, | २६ | सिद्धत्वविशेषित | सिद्धविशेषित- |
| ,, | २८ | अनादिस्वक्रिया | अनादिक्रिया- |
| ९४ | २ | सतः | स्वतः |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ९४ | ४ | बाह्याभ्यन्तर | बाह्यान्तर- |
| ,, | ,, | दुर्निरूपता | दुर्निरूपस्वरूपता |
| ,, | १० | पूर्वपक्षन्यायाभास | न्यायाभास- |
| " | १४ | नीलाद्यर्थ | नीलपीताद्यर्थ- |
| ९५ | ६ | भङ्गीनयेन | भङ्गिनयेन |
| ,, | १३ | स्याद्भिन्नमभिन्नञ्च | स्याद्भिन्नं, स्यादभिन्नं, स्याद्भिन्नमभिन्नञ्च |
| ,, | १४ | प्रकारान्तरेण | प्रकारेण |
| ,, | १५ | शब्दितावस्था | शब्दावस्था- |
| ,, | ,, | नित्यत्वभिन्नत्वानि | नित्यत्वाभिन्नत्वानि |
| ,, | १६ | सर्वमिति | सर्वमपि |
| ,, | ,, | सप्तप्रकारमिति | सप्तप्रकारात्मकमिति |
| ,, | २४ | अनियमवचनीय- | अनिर्वचनीय- |
| ९६ | ७ | अद्यैव तदास्मदभी- | यद्येवं तदस्मदभी- |
| ,, | ८ | स्वकाले चास्ति स्वात्मना | काले चास्ति नान्यदेशे नान्यकालेऽस्ति स्वात्मना- |
| ,, | १६ | कर्मणा | कर्मणापि |
| ,, | १९ | अनादेय | अनुपादेय |
| ९७ | ३ | तार्हितमतानां | तार्हन्मतानां |
| ,, | ९ | कर्णिकां रुचकं | कर्णिकारुचकं |
| ,, | १२ | मुद्रिकाषट्क | मुद्रादिषट्क |
| ,, | २३ | हसितनृत्त | भसिततृत्त |
| ,, | ,, | द्वाराख्यश्चेति | द्वाराख्यश्च |
| ९८ | ९ | पाशुपतशैवानां | पाशुपतानां |
| ,, | १३ | तमेव | तमेवं |
| ,, | १७ | अन्यथामोक्षहेतुत्वादे | अन्यथामोक्षहेतुत्ववादे |
| ,, | २४ | कारणवस्तुनो | वस्तुनो |

| Page | Line | मुद्रितकारास्थ पाठ | तिरुपतिमातृकास्थ. पाठ. |
|---|---|---|---|
| ९८ | २५ | निमित्तमात्रवादे | निमित्तवादे |
| ९९ | ७ | आशङ्क्य | आशङ्क्यते |
| ,, | ,, | तद्वैषम्यादप्रामाण्यं निरा-क्रियते | तद्वैषम्यान्निराक्रियते |
| ,, | २० | दुष्परिहर | दुष्परिहर इति |
| ,, | २५ | भवन्तं नारायणं | भगवन्नारायणं |
| १०० | ३ | अवतीर्य | अवतार्य |
| ,, | ९ | अनुसन्धीयते | अनुसन्धेयम् |
| ,, | ,, | अतश्च | ततश्च |
| १०१ | १५ | वियदाद्यचिदुत्पत्ति | वियदाद्युत्पत्ति |
| ,, | २० | वा | च |
| १०२ | ८ | कालस्थायित्वं | कालावस्थायित्वं |
| ,, | १२,१३ | अगोचरायोग्यतायाः | अगोचरत्वरूपायोग्यतायाः |
| ,, | १३ | गोचरत्व | अगोचरत्व- |
| ,, | १९ | हेतो.सिद्ध्या | हेतोःस्वरूपासिद्ध्या |
| ,, | २० | व्यभिचरित | अव्यभिचरित- |
| १०३ | ९ | अतिदेशार्थं | अतिदेशसूत्रम् |
| १०४ | ५ | जातं | जायते |
| ,, | १८ | दीन्द्रियाणि | दीनीन्द्रियाणि |
| १०५ | ९,१० | शरीरात्मभावेन सामानाधि | शरीरसामानाधि |
| ,, | ११ | मृतत्ववचनान्यथानयनवत् | मृतत्ववचनान्यथानयनामृतत्ववच-नान्यथानयनवत् |
| ,, | २० | निषेधिका श्रुतिः | निषेधश्रुतिः |
| १०६ | ८ | वियतोऽपि | वियतो |
| ,, | ९ | जीवभावेन द्रव्य | जीवभावापन्नद्रव्य |
| ,, | ११ | श्वरादिव्यावृत्तेः | श्वराव्यावृत्तेः |
| १०७ | १४ | नानात्येवायं | जानात्ययं |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| १०७ | १५ | प्रथमपक्षः | प्रथमः पक्षः |
| ,, | १७ | परिकरण | करण- |
| ,, | २१ | पदवदाश्रय- | पदपदाश्रय- |
| १०८ | ३ | वर्तते | विद्यते |
| ,, | १५ | तेन प्रद्योतेनैष | तेन प्रद्योतते नैष ? |
| १०९ | १५ | कठवल्लीगतयोः | कठवल्लीगीतयोः |
| ,, | २२ | वाक्यं च | शास्त्रं च |
| ११० | ३ | क्रियाफलवाचिना | क्रियावाचिना |
| ,, | १९ | स्वर्गनरक | स्वर्गादिनरक- |
| ,, | २२ | उन्मत्तत्व | उन्मत्त- |
| १११ | १०,११ | मित्थं भेदेन | मित्यंशभेदेन |
| ,, | १५ | विशेष | विशेषं |
| ,, | ,, | विशेषसर्गादिरूपं | विशेषसंसर्गं |
| ,, | २१ | स्वातन्त्र्यं च | स्वातन्त्र्यं |
| ११२ | ६ | गामित्ववत् | गामिवत् |
| ,, | ९ | प्रवृत्तप्रवर्तकत्व | प्रवर्तकत्व- |
| ,, | २५ | वासनान्वितात् | वासनारतात् |
| ११३ | १० | नावहीयते | नापहीयते |
| ११४ | १५ | पदद्वय | पादद्वय |
| ११५ | ४ | गुणविशिष्टस्यैव | गुणद्रव्यविशिष्टस्यैव |
| ,, | १७ | | 'शरीरवाचिनां शरीरिपर्यन्ताभिधानस्य' इति न दृश्यते । |
| ११६ | १० | के ते ऋषय | तदाहुः के ते ऋषय |
| ,, | २१ | इत्यादि | दशेति |
| ,, | २२ | इन्द्रियादयः | इन्द्रियाणि |
| ११७ | २ | सृष्ट्या नियामक | सृष्ट्यादिनियामक |
| ,, | ६ | कारणेषु | करणेषु |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| ११७ | ९ | गौणत्वस्यैव | गौणस्यैव |
| ,, | ,, | इन्द्रियधर्माणामुक्त्यादीनां | इन्द्रियधर्म ....दीनां |
| ,, | ११ | रिन्द्रियधर्म | रुक्त्यादीन्द्रियधर्म |
| ,, | २० | वागादीन्द्रियसंख्या | प्रसङ्गादिन्द्रियसंख्या |
| ,, | २२ | शया | शयां |
| ११८ | १० | उपादानादि | आदानादि |
| ,, | १३ | बुद्धयधिक | बुद्धयाद्यधिक- |
| ,, | १४ | उपयोग | उपभोग |
| ११९ | ९ | देशस्थित | देशस्थ |
| ,, | ११ | रकमुख्य | रकस्य मुख्य |
| ,, | ,, | ‘ श्रेष्ठश्च ’ | तत्र ‘ श्रेष्ठश्च ’ |
| ,, | १३ | आनीत् | आनित् |
| १२० | २ | प्रसिद्ध | श्रुतिप्रसिद्ध |
| ,, | १८ | प्राण एवायनमिति | प्राणवानयमिति |
| ,, | १९ | व्यवहारात् प्राणः स्पन्दते | व्यवहारात् प्राणशब्दस्योच्छ्वासादि-वायुक्रियाविशेषे प्रयोगात् प्राणः स्पन्दते |
| ,, | २१ | एव | एव वा |
| १२१ | २४ | अन्तर्गत | अन्तर्भूत |
| १२२ | ५ | विधिशेष | विशेष |
| ,, | ६ | रूपत्वेन च | रूपत्वेन |
| ,, | ७ | | इति श्रुतेनेति नास्ति । |
| ,, | ८ | मित्युपपत्ति- | मिति श्रूयते । न सर्वं हीदं प्राणेनावृतमित्युपपत्ति- |
| ,, | १० | एतत्साम | एवमेतत्साम |
| ,, | १२ | सर्ववृत | सर्वावृत |
| ,, | १४ | सम एभिः | सम एव |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| १२२ | २५ | देवतानां | दैवतानां |
| १२३ | ८ | यश्चक्षुषि | य आदित्यमन्तरो यमयति यश्चक्षुषि |
| ,, | २० | कापि | कापि कार्ये |
| १२४ | ६ | श्रौत | श्रुतौ |
| ,, | ,, | योग | प्रयोग |
| ,, | ८ | ह य एव | उभय एव |
| ,, | ९ | उपासांचक्रे | उपासांचक्रिरे |
| ,, | ११ | दीनीन्द्रियाणि | दीन्द्रियाणि |
| ,, | ,, | प्राणो मनः | प्राणः |
| ,, | २० | इतीन्द्रियाणां | इन्द्रियाणां |
| ,, | ,, | पदयोग | पदप्रयोग |
| ,, | २४ | इत्यत्र | इत्यस्य |
| १२५ | ३ | षष्ठानीन्द्रियाणि | षष्ठेन्द्रियाणि |
| ,, | ५ | रतेः | रते |
| ,, | १३ | वियदधि- | संज्ञामूर्त्यधिकरणे—वियदधि- |
| ,, | १६ | भूतेन | स्थितेन |
| ,, | २१ | श्रुत्युक्त | श्रुत्युक्ता |
| ,, | २२ | व्यष्टिसृष्टिः | सृष्टिः |
| १२६ | २ | जीवसामान्य | सामान्य |
| ,, | १७ | इत्युक्त | इत्युक्तनीत्या |
| ,, | २६ | | योग्यतानुसारेणेति न दृश्यते |
| ,, | ,, | विषयो विचारः | विषयविचारः |
| १२७ | १० | अन्नादीनां | अन्नादिना |
| ,, | १७ | अनवश्य | अनावश्य |
| ,, | ,, | | त्रिवृत्करणेत्यारभ्य १९ पंक्तिगत अनादेयत्वाच्च इत्यन्तभागः न दृश्यते । |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| १२७ | २३ | भूतत्वादि | भूतत्वादिना |
| ,, | २५ | भावेन | भावेन न |
| ,, | २७ | योश्चतु | योश्च चतु |
| ,, | २८ | कर्तृत्वेन | कर्तृत्वे |
| ,, | २९ | कर्तृक्रिया | कर्तृकक्रिया |
| ,, | ,, | अनुप्रविश्येति | प्रविश्येति |
| १२८ | ८ | सम्बन्धे | सम्बन्धेन |
| ,, | ९ | पादादि | पदादि |
| ,, | ११ | समानकर्तृकत्वादि | समनकर्तृत्वादि |
| ,, | १३ | व्यक्तिप्रतीते. | वृत्तिप्रतीतेः |
| ,, | ,, | व्यक्तिर्मुख्य | वृत्तिमुख्य |
| ,, | १५ | विभक्तेर्बलीय | वृत्तेर्बलीय |
| ,, | २१ | कर्तृत्वश्रुत्या | कर्तृत्वं त्वाश्रुत्या |
| ,, | २२ | रूपपरमात्मा | रूपः परमात्मा |
| १२९ | १६ | व्यपदिश्येते | व्यपदिश्यते |
| ,, | १७ | विवेकेन | विवेके |
| ,, | २१ | तत्सम | तत्समान |
| ,, | २४ | स्मर्यते | श्रूयते |
| १३० | ७ | अव्यक्त | अव्याकृत |
| ,, | १८ | यवागू | यवागु |
| ,, | १९ | वर्ति | वृत्ति |
| १३१ | ६ | करणवदुप | करणमुप |
| ,, | ,, | आप्यत्वतैजस | आप्यतैजस |
| ,, | १० | प्रक्रमावगत | प्रकृतावगत |
| ,, | ११ | आपः पीता इति पर्याय | आप· पीताः तेजोऽशितमिति पर्याय- |
| ,, | १२ | प्रक्रमावगत | प्रकृतावगत |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| १३१ | १९ | आप्यायकतात्मना | आप्यायकात्मना |
| ,, | २० | अम्बुंश | अबंश |
| ,, | २२ | अन्नादीनां | अग्न्यादीनां |
| ,, | २३ | वर्ति | वृत्ति |
| ,, | ,, | शुश्रूषु | शिश्रूषु |
| ,, | २४ | त्रिवृत्करणकारणतामूलक | त्रिवृत्करणनिष्ठव्याकरणकारणता-मूलक |
| १३२ | १० | विभाव्यं | वाच्यम् |
| ,, | ,, | पातः | पातात् |
| ,, | १४ | प्राधान्यात् | प्राधान्येन |
| ,, | ,, | नाप्राधान्यात् | न प्राधान्यात् |
| ,, | २१ | व्याकर्तृ | व्याकरणकर्तृ- |
| ,, | २२ | बुद्धिनानात्व | बुद्ध्या नानात्व |
| ,, | २३ | अनभिहिततृतीया | अनभिहिताधिकारविहिततृतीया |
| १३३ | ४ | जीवेन जीवात्मनेति वार्थः | जीवेनात्मना जीवात्मनेत्यर्थः |
| ,, | १२ | कर्तृत्वावगमे | कर्तृत्वावगतेः |
| १३४ | २ | ष्टस्य ब्रह्मणः | ष्टब्रह्मणः |
| ,, | १८ | उपादानत्वं | उपादेयत्वं |
| ,, | १९ | सिद्ध्यर्थमंशाधिक्यं | सिद्ध्यर्थमाधिक्यं |
| ,, | १९ | तन्त्वादि | तत्वादि |
| ,, | २० | पीताद्युपा | तत्वाद्युपा |
| ,, | २८ | विशरणशीलेषु | विशरणशीलेषु तेजोंऽशेषु |
| १३५ | २ | अप्रामाणिक | अप्राकरणिक |
| ,, | ३ | श्रुत्या | श्रुत्यादि |
| ,, | ६ | स्याद्द्विधा | स्युर्द्विधा |
| ,, | ८ | र्धभागाः | र्धभागः |
| ,, | १० | रब्धाण्डान्तर्वर्ति | रब्धान्तर्वृत्ति |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| १३५ | १३ | मुखसृष्टतया | मुखषतया ? |
| ,, | ,, | सिद्ध | प्रसिद्ध |
| ,, | १८ | तदिदं | तदेदं |
| ,, | २२ | कारणमिति परमात्मेति | कारणं तत्कारणं परमात्मेति |
| १३६ | १४ | समेतान्य | समेतमन्य |
| ,, | १६ | चिन्तितम् | निश्चितम् |
| ,, | ,, | वेदान्तवाक्यप्रति | वेदान्तप्रति |
| ,, | १७ | विषयं | विषयि |
| ,, | १८ | पासनविषयिणी | पासनात्मकविषयि |
| ,, | १९ | विपर्यिणी चिन्ता | विषयिचिन्ता |
| १३७ | २ | सहस्राणामपि | सहस्रस्यापि |
| ,, | ७ | स्वरूपस्याप्यत्व | स्वरूपस्य प्राप्यत्ष |
| ,, | १० | प्रसजते | प्रसज्यते |
| ,, | १२ | रपरिष्वक्तो | रसंपरिष्वक्तो |
| ,, | १५ | वाक्यगत | वाक्यावगत |
| १३८ | २ | प्रत्यभिज्ञानानवतारात् | प्रत्यभिज्ञानवतारात् |
| ,, | १० | आवर्तन्ता | निवर्तन्त |
| ,, | ११ | पथो | पन्थो |
| ,, | १२ | यथासौ | केनासौ |
| ,, | १३ | पृष्ट्वा | प्रष्ट्वा ? |
| ,, | ,, | वचसो | वचनो |
| ,, | १५ | पृष्टवान् | प्रष्टवान् ? |
| ,, | १८ | माहुतावित्यव | माहुतिरित्यव |
| ,, | ,, | सिध्यति | सिंधति ? |
| १३९ | ११ | तस्मिन्नेतस्मिन् | तस्मान्नैतस्मिन् |
| ,, | १२ | देवाः श्रद्धां | श्रद्धां |
| ,, | १८ | वाग्विन्द्रिय | वात्विन्द्रिय |

| Page | Line | मुद्रितकोशस्थ: पाठ: | तिरुपतिमातृकास्थ: पाठ: |
|---|---|---|---|
| १३९ | २६ | शब्दित | प्रकृतिशब्दित |
| १४० | १२ | दक्षिणैति | दक्षिणेति |
| ,, | २७ | जायते इत्यादिवत् | जात इतिवत् |
| १४१ | २ | रुत्पाद्यमाना | रुत्पाक्यमाना |
| ,, | ३ | जरायुलब्ध | जरायुबन्ध |
| ,, | १९ | एतमेवाध्वानं | एतमध्वानं |
| ,, | २० | अनुशयवान् | अनुशयवान् भुक्तकर्मशेषवान् |
| १४२ | ३ | प्रवर्तक | प्रवृत्त |
| ,, | १० | शेषत्वासिद्धेः | शेषासिद्धेः |
| ,, | १४,१५ | योनिमापद्येरन् | योनिमापद्येरन् ब्राह्मणयोनिं |
| ,, | २३ | सङ्कोचो दोषः | सङ्कोचादोषः |
| १४३ | १४ | रमणीयां | रमणीयचरणा रमणीयां |
| ,, | १८ | तस्यैहिक | तर्हि ऐहिक |
| १४४ | २५ | हुत्यार्थवच | हुत्यार्थवश |
| १४५ | १३ | श्रुत्या असङ्कोच | श्रुत्यसङ्कोच |
| ,, | १६ | गमेन न तदर्थं | गमेन तदुत्थं |
| ,, | १९,२० | द्युलोकाप्राप्तिः | द्युलोकप्राप्तिः |
| ,, | २३ | त्यपूर्ति | त्यसंपूर्ति |
| ,, | ,, | वेत्थ | असकृदावर्तीनि संपूर्यते वेत्थ |
| १४६ | १५ | संनिहिता | संनिहिताः |
| ,, | २३ | नयनौचि | नयौचि |
| १४७ | ६ | पेया | पेत्या |
| ,, | ११ | अनुष्ठायोच्चावयतात् | अनुष्ठद्योच्यावतात् |
| ,, | २६ | च्छेदेन हेतुत्व | च्छेदनहेतुत्व |
| १४८ | ७ | धारणश्रवण | धारणाश्रवण |
| ,, | १० | नैरपेक्ष्येण | पञ्चमाहुतिनैरपेक्ष्येण |
| ,, | १३ | इत्यस्येष्टादि | इत्यस्य ये इष्टादि |

| Page | Line | मुद्रितकोशस्थः पाठः | तिरुपतिमातृकास्थः पाठः |
|---|---|---|---|
| १४८ | २१ | यथेतमाकाशमाकाशात् | यथेतमाकाशात् |
| ,, | २४ | किमाकाशादिभावादेव मनुष्य | किमाकाशादिभावो देवमनुष्य |
| १४९ | ३ | अग्र्यप्रायन्यायेन | अग्र्यप्राधान्येन |
| ,, | ११ | सर्गादिकाल | सर्गाद्यकाल |
| ,, | १२ | सद्भावेन | सद्भावे प्रमाणाभावेन |
| ,, | २४ | किं वा नातिचिरं चिरं वेति | किं वानतिचिरं वेति |
| १५० | ४ | ततो वै | अतो वै |
| ,, | ६ | दुर्निष्प्रपततरस्य | दुर्निष्प्रपतरस्य |
| ,, | १० | ततश्चातिशयित | ततश्च व्रीह्यादितोऽतिशयित |
| ,, | १२,१३ | वस्थानावगत्यवसानात् | वस्थानपर्यवसानात् |
| ,, | २४ | व्रीहियवा | व्रीहियवमाषा |
| १५१ | ८ | कल्पनम् | कल्पना |
| ,, | १२ | हिंसा विधिहिंसायाः | हिंसाविधिः हिंसायाः |
| १५२ | २४ | प्रेतं दिष्टं | प्रेतमिष्टं |
| ,, | २८ | भुक्तत्वात् | इत्युक्तत्वात् |
| १५४ | १५ | एषु | एतेषु |
| ,, | १७ | | छन्दत इति नास्ति |
| ,, | १८ | य आत्मा | स आत्मा |
| १५५ | ५ | वैलक्षण्यस्य प्रति | वैलक्षण्यप्रति |
| ,, | ६ | मात्रावसानत्व | मात्रावस्थानत्व |
| १५६ | ५ | चिन्तनानन्तरं | चिन्तानन्तरं |
| ,, | ७ | सृप्तो | सुप्तो |
| ,, | ९ | पुरीतच्छब्द | पुरीतत्सच्छब्द |
| ,, | १० | समुच्चयेरन् | समुच्चीयेरन् |
| ,, | ,, | रहितसप्तमी | विहितसप्तमी |

